कविकुलगुरू कालिदास संस्कृत विश्वविद्याालय, रामटेक E

हस्तलिखित संग्रह

दाखल क्र. M2387-(2) विषय व्याकरण

नाव सिद्धांतकौमुदी

लेखक/लिपीकार भटोजी दिक्षित

पृठ ........ काळ शके 1795 पूर्ण/अपूर्ण

श्रीगणेशाय नमः मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च वैय्याकरणसिद्धांतकौमुदीयं विरच्यते १
अइउण् ऋलृक् एओङ् ऐऔच् हयवरट् लण् ञमङणनम् झभञ् घढधष् जबगडदश् खफछठथचटतव् कपय् शषसर् हल् इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि एषामंत्या इतः लण् सूत्रे अकारश्च हकारादिष्वकारउच्चारणार्थः हलंत्यं हलति सूत्रें ऽत्यमित्स्यात् आदिरंत्येन सहेता अंत्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् इति हल् संज्ञायां हलंत्यं उपदेशें ऽत्यं हलित्स्यात् उपदेश आद्योच्चारणं ततो ऽण् अच् इत्यादिसंज्ञासिद्धो उपदेशेजऽनुनासिक इत् उपदेशे ऽनुनासिको ऽजित्संज्ञः स्यात् प्रतिज्ञानुनासिक्याः पाणिनीयाः, लण् सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा प्रत्याहारेष्वितां न ग्रहणं, अनुनासिक इत्यादिनिर्देशात् नह्यत्र ककारे परे अच्कार्यं दृश्यते आदिरंत्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियंते ऊकालो ऽज्ह्रस्वदीर्घप्लुतः, उश्च ऊश्च ऊ३श्च वः, वां काल इव कालो यस्य सो ऽच्क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् सप्रत्येकमुदात्तादिभेदेन त्रिधा, उच्चैरुदात्तः, ताल्वादिषु सभागेषु स्थानेषु ऊर्ध्वभागे निष्पन्नो ऽजुदात्तसंज्ञः स्यात् आये, नीचैरनुदात्तः स्पष्टं अर्वाङ्, समाहारस्वरितः उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सो ऽच्स्वरितसंज्ञः स्यात् तस्यादित उदात्तमर्धह्रस्वं ह्रस्वग्रहणमतंत्रं स्वरितस्यादितो ऽर्धमुदात्तं बोध्यं उत्तरार्धं तु परिशेषादनुदात्तं तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टं अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा, क्व १ वोश्वाः, रथानां न ये १ राः शतचक्रं यो ३ ह्यः इत्यादिष्वनुदात्तः, अग्निमीळे इत्यादावुदात्तश्रुतिः स नवविधो ऽपि प्रत्येकमनुनासिका ऽननुनासिकत्वाभ्यां द्विधा मुख

नासिकावचनोऽनुनासिकः मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् तदित्थं अइउऋ
एषांवर्णानांप्रत्येकमष्टादशभेदाः ऌवर्णस्य द्वादश तस्य दीर्घाभावात् एचामपिद्वादशतेषां ह्रस्वाभावात् तु
ल्यास्यप्रयत्नंसवर्णं ताल्वादिस्थानमाभ्यंतरप्रयत्नश्चेत्येतद्द्वयं यस्ययेनतुल्यंतन्मिथः सवर्णसंज्ञंस्या
त् अकुह्विसर्जनीयानांकंठः इचुयशानांतालु ऋटुरषाणांमूर्धा ऌतुलसानांदंताः उपूपध्मानीयानामोष्ठौ
ञमङणनानांनासिकाच एदैतोः कंठतालु ओदौतोः कंठोष्ठं वकारस्यदंतोष्ठं जिह्वामूलीयस्यजिह्वामूलं
नासिकानुस्वारस्य इतिस्थानानि यत्नोद्विधाआभ्यंतरोबाह्यश्च आद्यश्चतुर्धा स्पृष्टेषत्स्पृष्टविवृतसंवृत
भेदात् तत्रस्पृष्टंप्रयतनंस्पर्शानां ईषत्स्पृष्टमंतस्थानं विवृतमूष्मणांस्वराणांच ह्रस्वस्यावर्णस्यप्रयोगे
संवृतं प्रक्रियादशायांतु विवृतमेव एतच्च सूत्रकारेण ज्ञापितं तथाहि अ अ इति विवृतमनूद्य संवृतोऽने
नविधीयते अस्य चाष्टाध्यायींसंपूर्णांप्रत्यसिद्धत्वाच्छास्त्रदृष्ट्याविवृतत्वमस्त्येव तथाच सूत्रं पूर्वत्रा
सिद्धं अधिकारोयं तेनसपादसप्ताध्यायींप्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वंप्रतिपरंशास्त्रमसिद्धंस्या
त् बाह्यस्त्वेकादशधाविवारः संवारः श्वासोनादो घोषोऽघोषोऽल्पप्राणोमहाप्राणउदात्तोऽनुदात्तः स्वरित
श्चेतिखयांयमाः खयः ꣲक ꣲपौविसर्गः शरएवच एतेश्वासाऽनुप्रदानाअघोषाश्चविवृण्वते १ कंठमन्येतु
घोषाः स्युः संवृतानादभागिनः अयुग्मावर्गयमगायणश्चाल्पासवः स्मृताः २ वर्गेष्वाद्यानांचतुर्णांपंचमेप
रेमध्येयमोनामपूर्वसदृशोवर्णः प्रातिशाख्येप्रसिद्धः पलिक्क्नीः चख्खनतुः अग्ग्निः घ्घ्नंती त्यत्रक्र
मेण कखगघेभ्यः परेतत्सदृशाएवयमाः तत्रवर्गाणांप्रथमद्वितीयाः खयः तथातेषामेवयमाः जिह्वामू

लीयोपध्मानीयौ विसर्गः शषसाश्चेत्येषां विवारः श्वासोऽघोषश्च अन्येषां तु संवारो नादो घोषश्च वर्गाणां
प्रथमतृतीयपंचमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः अन्ये महाप्राणा इत्यर्थः बाह्यप्रयत्नाश्चय
द्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यांतरतम्यपरीक्षायामुपयोक्ष्यंत इति बोध्यं कादयो मावसानाः
स्पर्शाः यरलवा अंतस्थाः शषसहा ऊष्माणः अचः स्वराः ᳵक ᳶपाविति कपाभ्यां प्रागर्धविसर्गसदृशौ जि
ह्वामूलीयोपध्मानीयौ अं अः इत्यचः परावनुस्वारविसर्गौ इति स्थानप्रयत्नविवेकः ऋलृवर्णयोर्मिथः
सावर्ण्यं वाच्यं अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते
नाज्झलौ आकारसहितोऽच् आच्स च् हल् चेत्येतौ मिथः सवर्णौ न स्तः तेन दधीत्यस्य हरति शीतलं षष्ठं सां
द्रमित्येतेषु परेषु यणादिकं न अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् त-
थाहि अणुदित्सवर्णस्य चाप्रत्ययः प्रतीयते विधीयत इति प्रत्ययः अविधीयमानोऽणुदिच्च सवर्णस्य
संज्ञा स्यात् अत्राण् परेण णकारेण कु चु टु तु पु एते उदितः तदेवं अ इत्यष्टादशानां संज्ञा तथेकारोकारौ ऋ
कारस्त्रिंशतः एवं लृकारोऽपि एचो द्वादशानां एदैतोरोदौतोश्च न मिथः सावर्ण्यं ऐऔजिति सूत्रारंभसा
मर्थ्यात् तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयं नाज्झलाविति निषेधो यद्यप्याक्षरसमाम्ना
यिकानामेव तथापि हकारस्याकारो न सवर्णः तत्राकारस्यापि प्रश्लिष्टत्वात् तेन विश्वपाभिरित्यत्र हो
ढ इति ढत्वं न भवति अनुनासिकाननुनासिकभेदेन यवला द्विधा तेनाननुनासिकास्ते द्वयोर्द्वयोः सं
ज्ञा तपरस्तत्कालस्य तः परो यस्मात्स च तात्परश्चोच्चार्यमाणः समकालस्यैव संज्ञा स्यात् तेन अत् इत् इत्यादयः

षण्णां षण्णां संज्ञा ऋदितिद्वादशानां वृद्धिरादैच् आदैच्च वृद्धिसंज्ञा स्यात् अदेङ् गुणः अदेङ् च गुणसंज्ञः
स्यात् भूवादयो धातवः क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः प्राग्रीश्वरान्निपाता इत्यधिकृत्य चादयो
सत्वे अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः प्रादयः अद्रव्यार्थाः प्रादयस्तथा उपसर्गाः क्रियायोगे गतिश्च
प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ्
नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः नवेति विभाषा निषेधविकल्पयोर्विभाषा
संज्ञा स्यात् स्वं रूपं शब्दस्याऽशब्दसंज्ञा शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना येन विधि
स्तदंतस्य विशेषणं तदंतस्य संज्ञा स्यात् स्वस्य च रूपस्य समासप्रत्ययविधौ प्रतिषेधः उगिद्वर्णग्रहणव
र्जं विरामोऽवसानं वर्णानामभावोऽवसानसंज्ञः स्यात् परः संनिकर्षः संहिता वर्णानामतिशयितः
संनिधिः संहितासंज्ञः स्यात् सुप्तिङंतं पदं सुबंतं तिङंतं च पदसंज्ञं स्यात् हलोऽनंतराः संयोगः अ
ज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ह्रस्वं लघु संयोगे गुरु संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् दीर्घं
च गुरुसंज्ञं स्यात् इति संज्ञाप्रकरणं इको गुणवृद्धी गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीये
ते तत्र इक इति षष्ठ्यंतं पदमुपतिष्ठते अचश्च ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राच इति षष्ठ्यंतं प
दमुपतिष्ठते आद्यंतौ टकितौ टित्कितौ यस्योक्तौ तस्य क्रमादाद्यंतावयवौ स्तः मिदचोऽन्त्यात्परः
अच इति निर्धारणे षष्ठी अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवांतावयवो मित्स्यात् षष्ठी स्थाने योगा
अनिर्धारितसंबंधविशेषा षष्ठी स्थाने योगा बोध्या स्थानं च प्रसंगः स्थानेऽन्तरतमः प्रसंगे सति स

दृशतम आदेशः स्यात् यत्रानेकविधमांतर्यं तत्रस्थानतआंतर्यंबलीयः तस्मिन्निति निर्दिष्टे पूर्वस्य सप्तमी
निर्देशेन विधीयमानं कार्यं वर्णांतरेणाव्यवहितस्य पूर्वस्य ज्ञेयं तस्मादित्युत्तरस्य पंचमीनिर्देशेन विधीय
मानं कार्यं वर्णांतरेणाव्यवहितस्य परस्य बोध्यं अलोंत्यस्य षष्ठीनिर्दिष्टांत्यस्यादेशः स्यात् ङिच्च अय
मप्यंत्यस्य स्यात्सर्वस्येत्यस्यापवादः आदेः परस्य परस्य यद्विहितं तत्तस्यादेर्बोध्यं अलोऽत्यस्येत्य-
स्यापवादः अनेकाल्शित्सर्वस्य स्पष्टं अलोऽत्यसूत्रापवादः अष्टाभ्य औशित्यादावादेः परस्येत्येत
दपि परत्वादनेन बाध्यते स्वरितेनाधिकारः स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यं परनित्यांतरं
गापवादानामुत्तरोत्तरं बलीयः असिद्धं बहिरंगमंतरंगे अकृतव्यूहाः पाणिनीयाः निमित्तं विनाशो
न्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वंतीत्यर्थः इति परिभाषाप्रकरणं इकोयणचि इकः स्थाने यण्
स्यादचि संहितायां विषये सुधीउपास्य इति स्थिते स्थानत आंतर्यादीकारस्य यकारः सुध् य् उपास्य
इति स्थिते अनचि च अचः परस्य यरो द्वे वा स्तो न त्वचि इति धकारस्य द्वित्वं स्थानिवदादेशोऽन
ल्विधौ आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रि
त्यानचि चेति द्वित्वनिषेधो न शंक्यः अनल्विधाविति तन्निषेधात् अचः परस्मिन्पूर्वविधौ अल्वि
ध्यर्थमिदं परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये इति यणः
स्थानिवद्भावे प्राप्ते नपदांतद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु पदस्य चरमा
वयवे द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् स्यात् इति स्थानिवद्भावनिषेधः झलां

जश्‌ झशि स्पष्टं इति धकारस्य दकारः अदर्शनं लोपः प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् संयोगांत
स्य लोपः संयोगांतं यत् पदं तदंतस्य लोपः स्यात् इति यलोपे प्राप्ते यणः प्रतिषेधो वाच्यः यणोम
यो द्वे वाच्ये मय इति पंचमी यण इति षष्ठीति पक्षे यकारस्यापि द्वित्वं तदिह धकारयकारयोर्द्वित्वविक
ल्पाच्चत्वारि रूपाणि एकधमेकयं द्विधं द्वियं त्रिधमेकयं एकधं द्वियं सुध्ध्युपास्यः मध्ध्वरिः धात्त्रं
शः लाकृतिः नादिन्याक्रोशे पुत्रस्य पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्ये पुत्रादीनी
त्वमसि पापे आक्रोशे किं तत्त्वकथने द्विर्वचनं भवत्येव पुत्त्रादीनी व्याघ्री तत्परे च पुत्त्रपुत्त्रादिनी
त्वमसि पापे वा हतजग्धयोः पुत्त्रहती पुत्रहती पुत्त्रजग्धी पुत्रजग्धी त्रिप्रभृतिषु शाकटायनस्य त्र्या
दिषु वर्णेषु संयुक्तेषु वा द्वित्वं इन्न्द्रः इन्द्रः राष्ट्ट्रं राष्ट्रं सर्वत्र शाकल्यस्य द्वित्वं न अर्कः ब्रह्मादी र्घाचार्या
णां द्वित्वं नंदात्रं पात्रं अचो रहाभ्यां द्वे अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः हर्य्यनुभवः ह
र्यनुभवः नह्य्य नह्यस्ति हलो यमां यमि लोपः हलः परस्य यमो लोपः स्याद्वा यमि इति लोपपक्षे द्वि
त्वाभावपक्षे चैकयं रूपं तुल्यं लोपारंभफलं तु आदित्यो देवता यस्य स आदित्यं हविः यमां यमीति यथा
संख्यविज्ञानान्नेह माहात्म्यं एचोऽयवायावः एचः क्रमात् अय् अव् आय् आव् एते स्युरचि तस्य
लोपः तस्येतो लोपः स्यात् इति यवयोर्लोपो न उच्चारणसामर्थ्यात् एवंचेत्संज्ञापीह न भवति हरये
विष्णवे नायकः पावकः वांतो यि प्रत्यये यकारादौ प्रत्यये परे ओदौतो रव् आव् एतौ स्तः यस्मिन्वि
धिस्तदादावल्ग्रहणे अल्ग्रहणे सप्तम्यंते विशेषणीभूते यो विधिर्विधीयते स तदादौ ज्ञेयः गोर्विकारो

गव्यं गोपयसोर्यदिति यत् नावातार्यनाव्यं नौवयोधर्मेत्यादिनायत् गोर्यूतौ छंदस्युपसंख्यानं अ-
ध्वपरिमाणेच गव्यूतिः ऊतियूति त्यादिना यूतिशब्दो निपातितः वांत इत्यत्र वकाराद्गोर्यूतावित्यत्र
छकाराद्वा पूर्वभागे लोपो व्योरिति लोपेन वकारः प्रश्लिष्यते तेनश्रूयमाण वकारांत आदेशः स्याद्वका
रोनलुप्यतइति यावत् धातोस्तन्निमित्तस्यैव यादौ प्रत्ययेपदे धातोरेचश्चे द्वांतादेशस्तर्हि तन्निमि
त्तस्यैवनान्यस्य लव्यं अवश्यलाव्यं तन्निमित्तस्यैवेतिकिं ओयते औयत क्षय्यजय्यौशक्या
र्थे यांतादेशनिपातनार्थमिदं क्षेतुंशक्यं क्षय्यंजेतुंशक्यंजय्यं शक्यार्थेकिं क्षेतुंजेतुयोग्यंपापं
क्षेयंजेयंमनः क्रय्यस्तदर्थे तस्मैप्रकृत्यर्थायेदंतदर्थं क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्र-
सारितंक्रय्यं क्रेयमन्यत् क्रयणार्हमित्यर्थः लोपः शाकल्यस्य अवर्णपूर्वयोः पदांतयोर्यवयो
र्लोपोवा ऽ शिपरे पूर्वत्रासिद्धमितिलोपशास्त्रस्यासिद्धत्वान्नस्वरसंधिः हरएहि हरयेहि विष्ण
इह विष्णविह श्रियाउद्यतः श्रियायुद्यतः गुराउत्कः गुरावुत्कः कानिसंतिकौस्तइत्यत्रास्तेर
ल्लोपस्यस्थानिवद्भावेनयणावादेशौप्राप्तौनपदांतेतिसूत्रेणपदांतविधौतन्निषेधान्नस्तः एकःपूर्वपरयो
रित्यधिकृत्य आद्गुणः अवर्णादचिपरेपूर्वपरयोरेकोगुणादेशः स्यात्संहितायां उपेंद्रः रमेशः गंगोद
कं उरण्रपरः ऋइतित्रिंशतः संज्ञेत्युक्तं तत्स्थानेयोऽण्सरपरः सन्नेवप्रवर्त्तते नत्रांतरतम्यात् कृष्ण
र्धिरित्यत्राइतवल्कारइत्यत्राल् अचोरहाभ्यामितिपक्षेद्वित्वं झरोझरिसवर्णे हलः परस्यझरोलोपो
वास्यात्सवर्णेझरि द्वित्वाभावेलोपसत्त्वेधकं असतिलोपेद्वित्वलोपयोर्वाद्विधं सतिद्वित्वेलोपेचास

तित्रिविधं कृष्णर्द्धिः यणइतिपंचमीमयइतिषष्ठीतिपक्षे ककारस्यापिद्वित्वं लस्यत्वनचिचेति तेनतवल्कार
इत्यत्र रूपचतुष्टयं द्वित्वंलस्यैवकस्यैवनोभयोरुभयोरपि तवल्कारादिषुबुधैर्बोध्यंरूपचतुष्टयं वृद्धिरेचि
आदेचिपरे वृद्धिरेकादेशः स्यात् गुणापवादः कृष्णैकत्वं गंगौघः देवैश्वर्यं कृष्णौत्कंठ्यं एत्येधत्यूठ्सु अवर्णा
देजाद्योरेत्येधत्योरूठिचपरे वृद्धिरेकादेशः स्यात् पररूपगुणापवादः उपैति उपैधते प्रष्ठौहः एजाद्योः किं उपे
तः माभवान्प्रेदिधत् पुरस्तादपवादा अनंतरान्विधीन्बाधंते नोत्तरानितिन्यायेनेयं वृद्धिरेङि पररूपस्यैवबा-
धिकानत्वोमाङोश्चेत्यस्य तेनावेहीति वृद्धिरसाधुरेव अक्षादूहिन्यामुपसंख्यानं अक्षौहिणीसेना स्वा
दीरेरिणोः स्वैरः स्वेनेरितुंशीलमस्येतिस्वैरी स्वैरिणी लिंगविशिष्टपरिभाषया स्वैरिणी प्रादूहोढोढ्येषै
ष्येषु प्रौहः प्रौढः अर्थवद्ग्रहणे नानर्थकस्यग्रहणं प्रश्चेत्रिसूत्रेराजेः पृथक्भ्राजिग्रहणात् तेनऊढग्रहणेन
क्तांतमेवगृह्यते नतुक्तवत्वंतस्यैकदेशः प्रौढवान् प्रौढिः इषइच्छायांतुदादिः इषगतौदिवादिः इषआभी
क्ष्ण्ये क्र्यादिः एषांघञिण्यतिचएषः एष्यइति रूपे तत्र पररूपेप्राप्तेऽनेनवृद्धिः प्रैषः प्रैष्यः यस्तु ईषउंछे
यश्चईषगतिहिंसादर्शनेषु तयोर्दीर्घोपधत्वादीषः ईष्यः तत्रात्गुणे प्रेषः प्रेष्यः ऋतेचतृतीयासमासे सु
खेन ऋतः सुखार्त्तः तृतीयेतिकिं परमर्त्तः प्रवत्सतरकंबलवसनार्णदशानामृणे प्रार्णं वत्सतरार्णमि-
त्यादि ऋणस्यापिनयनायग्रहणं क्रियते तद्ग्रहणार्णं दशार्णोदेशः नदीचदशार्णा ऋणशब्दोदुर्गभूमौजले
च उपसर्गादृतिधातौ अवर्णांतादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् उपार्च्छति प्रार्च्छति अं
तादिवच्च योऽयमेकादेशः सपूर्वस्यांतवत् परस्यादिवत्स्यादितिरेफस्य पदांतत्वे खरवसानयोर्विस-

र्जनीयः खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात् पदांते इति विसर्गे प्राप्ते अंतवद्भावेन पदांतस्य न वि
सर्गः उभयतआश्रयणे नांतादिवत् कर्त्तरि च र्षिदेवतयोरित्यादि निर्देशात् उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योग-
विभागेन पुनर्विधानार्थं तेन ऋत्युक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति वा सुप्यापिशलेः अ
वर्णांतादुपसर्गादृकारादौ सुप्धातौ परे वृद्धिर्वा स्यात् आपिशलिग्रहणं पूजार्थं प्रार्षभीयति प्रर्षभीय
ति सावर्ण्यात् लृवर्णस्य ग्रहणं प्राल्कारीयति प्रल्कारीयति तपरत्वाद्दीर्घेन उपऋकारीयति उपर्कारीय
ति एङि पररूपं आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् प्रेजते उपोषति इह वा सुपीत्यनुव
र्त्य वाक्यभेदेन व्याख्येयं तेन एङादौ सुप्धातौ वा उपेडकीयति उपेडकीयति प्रोधीयति प्रोधीयति एवे
चानियोगे नियोगोऽवधारणं निश्चय इत्यर्थः क्वेव भोक्ष्यसे अनवक्लृप्तावेवशब्दः अनियोगे किं तवैव अ
चोंऽत्यादि टि अचां मध्ये योंऽत्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् शकंध्वादिषु पररूपं वाच्यं तच्च टेः शकं
धुः कर्कंधुः कुलटा सीमंतः केशवेशे सीमंतोन्यः मनीषा हलीषा लांगलीषा पतंजलिः सारंगः पशुप-
क्षिणोः सारंगोऽन्यः आकृतिगणोऽयं मार्तंडः ओत्वोष्ठयोः समासे वा स्थूलोतुः स्थूलौतुः बिंबोष्ठः बिंबौष्ठः
समासे किं तवौष्ठः ओमाङोश्च ओमि आङि चात्परे पररूपमेकादेशः स्यात् शिवायोंनमः शिवएहि शिवेहि
अव्यक्तानुकरणस्यात इतौ ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् पटत् इ
ति पटिति एकाचो न श्रदिति नाम्रेडितस्यांत्यस्य तु वा आम्रेडितस्य प्रागुक्तं न स्यादंत्यस्य तु तकारमात्र
स्य वा स्यात् डाचि बहुलं द्वे भवत इति बहुलवचनादन्यत्रापि द्वित्वं तस्य परमाम्रेडितं द्विरुक्तस्य परं रूपमा

म्रेडितसंज्ञंस्यात् पटत्पटेति झलांजशोऽंते पदांतेझलांजशः स्युः पटत्पटदिति अकः सवर्णेदीर्घः अकः
सवर्णेऽचिपरेदीर्घएकादेशः स्यात् दैत्यारिः श्रीशः विष्णूदयः अचिकिं कुमारीशेते नाज्झलाविति निषे
धस्तुनदीर्घशकारयोः ग्रहणकशास्त्रस्यसावर्ण्यविधिनिषेधाभ्यांप्रागनिष्पत्तेः अकः किं हरये अ
कोऽकिदीर्घइत्येवसुवचं ऋतिसवर्णेऋवा होतॄकारः होतृकारः ऌतिसवर्णेऌवा होतॢकारः प
क्षेऋकारः सावर्ण्यात् होतृकारः ऋतिऋवाऌतिऌवेत्युभयत्रापिविधेयंवर्णद्वयंद्विमात्रंआद्य-
स्यमध्येद्वौरेफौतयोरेकामात्रा अभितोऽज्भक्तेरपराद्वितीयस्यतुमध्येद्वौलकारौ शेषंप्राग्वत् इहोभय
त्रापिऋत्यकइतिपाक्षिकः प्रकृतिभावोवक्ष्यते एङः पदांतादति पदांतादेङोतिपरेपूर्वरूपमेकादेशः
स्यात् हरेऽव विष्णोऽव सर्वत्रविभाषागोः लोकेवेदेचैङंतस्यगोरतिवाप्रकृतिभावः स्यात्पदांते गोअ
ग्रंगोऽग्रं पदांतेकिंगोः अवङ्स्फोटायनस्य अतीतिनिवृत्तं अचिपरेपदांतेगोरवङ्वास्यात् गवाग्रं प
दांतेकिं गवि व्यवस्थितविभाषयागवाक्षः इंद्रेच गोरवङ्स्यादिंद्रेगवेंद्रः अथप्रकृतिभावः प्लुतप्र
गृह्याअचिनित्यं प्लुताः प्रगृह्याश्चवक्ष्यंतेतेऽचिपरेनित्यंप्रकृत्यास्युः एहिकृष्णा३अत्रगौश्चरति
हरीएतौ नित्यमितिकिं हरीएताविस्यादावयमेवप्रकृतिभावोयथास्यात् इकोऽसवर्णइतिह्रस्वसमु
च्चितोमाभूत् इकोसवर्णेशाकल्यस्यह्रस्वस्य पदांताइकोऽसवर्णेऽचिपरेप्रकृत्यास्युर्ह्रस्वश्चवा
अत्रह्रस्वविधिसामर्थ्यादेवप्रकृतिभावेसिद्धेतदनुकर्षणार्थश्चकारोनकर्त्तव्यइतिभाष्येस्थितं चक्रिअ
त्र चक्र्यत्र पदांताइतिकिं गौर्यौ नसमासे वाप्यश्वः सितिच पार्श्वं ऋत्यकः ऋतिपरेअकः प्राग्वत्

ब्रह्मऋषिः ब्रह्मर्षिः पदान्तादित्येव आर्च्छत् समासेऽप्ययं प्रकृतिभावः सप्तऋषीणां सप्तर्षीणां वाक्यस्यटेः प्लुतउ-
दात्तः इत्यधिकृत्य प्रत्यभिवादेऽशूद्रे अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् अभिवाद
ये देवदत्तोऽहं भो आयुष्मानेधि देवदत्ता३ स्त्रियां न अभिवादये गार्ग्यहं भो आयुष्मती भव गार्गि नाम-
गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र प्लुत इष्यते नेह आयुष्मानेधि भो राजन्यविशां वेति वा
च्यं आयुष्मानेधि भो३ आयुष्मानेधीन्द्रवर्म३न् आयुष्मानेधीन्द्रपालिता३ दूराद्धूते च दूरात्संबोधने यद्वा
क्यं तस्य टेः प्लुतः स्यात् सक्तून्पिब देवदत्ता३ हैहे प्रयोगे हैहयोः एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयो
रेव प्लुतः हे३राम रामहे३ गुरोरनृतो ऽनन्त्यस्याप्येकैकस्य प्राचां दूरात्संबोधने यद्वाक्यं तस्य ऋदिन्न
स्यानन्त्यस्यान्त्यस्यापि गुरोर्वा प्लुतः स्यात् दे३वदत्त देवद३त्त देवदत्ता३ गुरोः किं प्रकृतवकाराद कारस्य मा
भूत् अनृतः किं कृष्णा३ एकैकग्रहणं पर्यायार्थं इह प्राचामिति योगो विभज्यते तेन सर्वः प्लुतो विकल्प्यते अप्लुतव
दुपस्थिते उपस्थितो ऽनार्ष इति शब्दस्तस्मिन्परे प्लुतो अप्लुतवद्भवति अप्लुतकार्यं यणादिकं करोतीत्यर्थः सुश्लो
का३ इति सुश्लोकेति वत् किं अप्लुत इत्युक्ते अप्लुत एव विधीयेत प्लुतश्च निषिध्येत तथा च प्रगृह्याश्रये प्रकृतिभावे
प्लुतस्य श्रवणं न स्यात् अग्नी३ इति ई३ चाक्रवर्मणस्य ई३प्लुतो ऽचि परे अप्लुतवद्वा चिनुही३ इदं चिनुहीदं चिनुही३
इति चिनुहीति उभयत्र विभाषेयं ईदूदेद्द्विवचनं प्रगृह्यं ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् हरी एतौ वि
ष्णू इमौ गंगे अमू पचेते इमौ मणीवोष्ट्रस्य लंबेते इति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः अदसो मात् अस्मा
त्परावीदूतौ प्रगृह्यौ स्तः अमी ईशाः रामकृष्णावमू आसाते मात् किं अमुकेऽत्र असति माद्ग्रहणे एकारोऽप्यः

नुवर्त्तेन डो अयंप्रगृह्यः स्यात् अस्मेइंद्राबृहस्पती निपातएकाजनाङ् एकोऽच्निपातआङ्वर्जः प्रगृह्यः
स्यात् इविस्मये उवितर्के इइंद्रः उउमेशः अनाङित्युक्तेरङिदाकारः प्रगृह्यएव आएवंनुमन्यसे आएवंकिल-
तत् ङित्तुनप्रगृह्यः ईषदुष्णं ओष्णं ईषदर्थेक्रियायोगेमर्यादाभिविधौचयः एतमातंङितंविद्याद्वाक्यस्मरण
योरङित् वाक्यस्मरणार्थकेऽङिदन्यत्रङिदिति विवेकः ओत् आदंतोनिपातः प्रगृह्यः स्यात् अहोईशाः संबु
द्धौशाकल्यस्येतावनार्षे संबुद्धिनिमित्तकओकारोवाप्रगृह्यः स्यादवैदिकेइतौपरे विष्णोइति विष्णविति
विष्णइति अनार्षेकिं ब्रह्मबंधविति उञः उञइतौवाप्रागुक्तं उइति विति ऊँ उञइतौदीर्घोऽनुनासिकःप्रग
ह्यश्च ऊँइत्ययमादेशोवास्यात् ऊँइति मञउञोवोवा मयः परस्यउञोवोवास्यादचि किम्वुक्तं किमुउक्तं व
स्यासिद्धत्वान्नानुस्वारः ईदूतौचसप्तम्यर्थे सप्तम्यर्थेपर्यवसन्नमीदूदंतंप्रगृह्यंस्यात् सोमोगौरीअ-
धिश्रितः मामकीतनूइति सुपांसुलुगितिसप्तम्यालुक् अर्थग्रहणंकिंवृत्तावर्थांतरोपसंक्रांतेमाभूत् वा-
प्यामश्वोवाप्यश्वः अणोऽप्रगृह्यस्यानुनासिकः अप्रगृह्यस्याणोऽवसानेऽनुनासिकोवास्यात् दधिँ
दधि अप्रगृह्यस्यकिं अग्नी इत्यच्संधिः स्तोः श्चुनाश्चुः सकारतवर्गयोः शकारचवर्गाभ्यांयोगेश
कारचवर्गौस्तः हरिश्शेते रामश्चिनोति सच्चित् शार्ङ्गिञ्जय शात् शात्परस्यतवर्गस्यश्चुत्वंन वि-
श्नः प्रश्नः ष्टुनाष्टुः स्तोः ष्टुनायोगेष्टुःस्यात् रामष्षष्ठः रामष्टीकते पेष्टा तट्टीका चक्रिण्ढौकसे नपदां
ताट्टोरनां अनामितिलुप्तषष्ठीकंपदं पदांताट्टवर्गात्परस्यानामस्तोष्टुर्नस्यात् षट्संतः षट्ते पदांतात्किं
इट्टे टोः किं सर्पिष्टमं अनाम्नवतिनगरीणामितिवाच्यं षण्णां षण्णवतिः षण्णगर्यः तोःषि तव

र्गस्य षकारे परे न ष्टुत्वं सन् षष्ठः॥ झलां जशोऽन्ते पदान्ते झलां जशः स्युः वागीशः चिद्रूपः यरोऽनुनासि
केऽनुनासिको वा यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् एतन्मुरारिः एतद्मुरारिः स्थान
प्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते चतुर्मुखः प्रत्यये भाषायां नित्यं तन्मात्रं
चिन्मयं कथं तर्हि मदोदग्राः ककुद्मन्त इति यवादिगणे दकारनिपातनात् तोर्लि तवर्गस्य लकारे परे
परसवर्णः तल्लयः विद्वाल्लिखति नकारस्यानुनासिको लकारः उदः स्थास्तम्भोः पूर्वस्य उदः परयोः स्था
स्तम्भोः पूर्वसवर्णः स्यात् आदेः परस्य उत्थानं उत्तम्भनं अत्राऽघोषस्य महाप्राणस्य सस्य तादृश एव थकारः
तस्य झरो झरीति पाक्षिको लोपः लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु खरि चेति चर्त्वं चर्त्वं प्रति थकारस्या
सिद्धत्वात् झयो होऽन्यतरस्यां झयः परस्य हस्य पूर्वसवर्णो वा स्यात् घोषवतो नादवतो महाप्राणस्य संवृत
कंठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः वाग्घरिः वाग्हरिः शश्छोऽटि पदान्तात् झयः परस्य शस्य छो वा स्या
दटि दस्य श्चुत्वेन जकारे कृते खरि च खरि परे झलां चरः स्युः इति जकारस्य चकारः तच्छिवः तच्शिवः छ-
त्वममीति वाच्यं तच्छ्लोकेन तच्श्लोकेन अमीति किं वाक्श्च्योतति मोऽनुस्वारः मान्तस्य पदस्यानुस्वा
रः स्याद्धलि अलोऽन्त्यस्य हरिं वंदे पदस्येति किं गम्यते नश्चापदान्तस्य झलि नस्य मस्य चापदान्तस्य
झल्यनुस्वारः स्यात् यशांसि आक्रंस्यते झलि किं मन्यते अनुस्वारस्य ययि परसवर्णः स्पष्टं अङ्कि
तः अञ्चितः कुण्ठितः शान्तः गुम्फितः कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते
तस्यासिद्धत्वान्न णत्वं वा पदान्तस्य पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् त्वङ्करोषि त्वंक

रोषि सय्यँन्ता संयंता सँवत्सरः संवत्सरः यँल्लोकं यंलोकं अत्रानुस्वारस्यपक्षे ऽनुनासिकायवलाः
मोराजिसमः क्वौ क्विबंतेराजतौपरे समोमस्यम एवस्यात् सम्राट् हेमपरेवा मपरेहकारेपरेमस्यम
एवस्याद्वाह्वाल ह्वल चलने किंह्मलयति किम्ह्मलयति यवलपरेयवलावेतिवक्तव्यं यथासंख्यमनु
देशः समानां समसंबंधीविधिर्यथासंख्यंस्यात् कियँह्यः किंह्यः किव्ँह्वलयति किंह्वलयति किलँल्हाद
यति किंल्हादयति नपरेनः नपरेहकारेपरेमस्यनःस्याद्वा किन्ँह्नुते किंह्नुते ङ्णोः कुक्टुक् शरि ङकारण
कारयोः कुक्टुकावागमौवास्तःशरि कुक्टुकोरसिद्धत्वाज्जश्त्वंन चयोर्द्वितीयाः शरिपौष्करसादेरिति
वाच्यं पौष्करसादिराचार्यः प्राङ्ख्षष्ठः प्राङ्षष्ठः सुगण्ट्षष्ठः सुगणट्षष्ठः सुगण्षष्ठः ड्ः सिधु
ट् डात्परस्य सस्यधुड्वास्यात् षट्त्संतः षट्संतः नश्च नांतात्पदात्परस्य सस्यधुड्वास्यात् सन्त्सः स
न्सः शितुक् नस्यपदांतस्यशेपरेतुग्वास्यात् शश्छोटीति छत्वविकल्पः पक्षे झरोझरीतिचकारलो
पः सञ्च्छंभुः सञ्च्छंभुः सञ्च्शंभुः सञ्शंभुः अछौअचछाअचशाअशाविति चतुष्टयं रूपाणामि
हतुक् छत्वचलोपानांविकल्पनात् १ ङमो ह्रस्वादचि ङमुण्नित्यं ह्रस्वात्परोयोङम् तदंतंयत्पदंत-
स्मात्परस्याचोनित्यङ्मुडागमःस्यात् प्रत्यङ्ङात्मा सुगण्णीशः सन्नच्युतः समः सुटि समोरुःस्यात्सु
टि अलोंऽत्यस्य अत्रानुनासिकःपूर्वस्यतुवा अत्ररुप्रकरणेरोः पूर्वस्यानुनासिकोवास्यात् अनुनासि
कात्परोऽनुस्वारः अनुनासिकंविहायरोःपूर्वस्मात्परोऽनुस्वारागमःस्यात् खरवसानयोर्विसर्जनीयः
विसर्जनीयस्यसः खरिविसर्जनीयस्यसःस्यात् एतदपवादेनवाशरीतिपाक्षिकेविसर्गेप्राप्ते संपुंकानां

सोवक्तव्यः सँस्कर्ता संस्कर्ता समोवालोपमेकइतिभाष्यंलोपस्यापिरुप्रकरणस्थत्वादनुस्वारानुनासि
काभ्यामेकसकारंरूपद्वयं द्विसकारंतूक्तमेव तत्रानचिचेति सकारद्वित्वपक्षेत्रिसकारकमपिरूपद्वयं अनु
स्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरिशर्षुचपाठस्योपसंख्यातत्वेनानुस्वारस्याप्यच्-
त्वात् अनुनासिकवतांत्रयाणांशरःखयइति कद्वित्वे षट् अनुस्वारवतामनुस्वारस्यापि द्वित्वेद्वादश एषाम
ष्टादशानांतकारद्वित्वेवचनांतरेणपुनर्द्वित्वेच एकतंद्वितंत्रितमिति चतुःपंचाशत् आणोप्रगृह्यस्य ऽनुना
सिकत्वेऽष्टोत्तरशतं पुमः खय्यम्परे अम्परेखयिपुम्शब्दस्यरुःस्यात् व्युत्पत्तिपक्षेअप्रत्ययस्ये
तिषत्वपर्युदासादᳵकᳶपयोःप्राप्तौ अव्युत्पत्तिपक्षेतुषत्वप्राप्तौ रात्यां संपुंकानामितिसः पुँस्कोकिलः पुं
स्कोकिलः पुँस्पुत्रः पुंस्पुत्रः अम्परेकिं पुंक्षीरं खयिकिं पुंदासः ख्याञादेशेन पुंख्यानं नश्छव्यप्रशा
न् अम्परे छवि नांतस्य पदस्यरुःस्यात् नतुप्रशान्शब्दस्यविसर्गः सत्वंश्चुत्वं शार्ङ्गिँश्छिंधि शार्ङ्गिंश्छि
धि चक्रिँस्त्रायस्व चक्रिंस्त्रायस्व पदस्येति किं हंति अम्परेकिं सन्त्सरुः खड्गत्सुष्टिः अप्रशान्किं प्रशां-
स्तनोति नॄन्पे नॄनित्यस्यरुःस्याद्वापकारेपरे कुप्वोᳵकᳶपौच कवर्गेपवर्गेचपरेविसर्जनीयस्यक्रमाज्जि
ह्वामूलीयोपध्मानीयौस्तः चाद्विसर्गः येनानाप्राप्तिन्यायेनविसर्जनीयस्यसइत्यस्यापवादोऽयं नतुशर्प
रेविसर्जनीयइत्यस्य तेन वासः क्षौममित्यादौविसर्गएव नॄँᳶपाहि नॄँः पाहि नॄंᳶपाहि नॄंःपाहि नॄन्पा-
हि कानाम्रेडिते कान्नकारस्यरुःस्यादाम्रेडितेपरे संपुंकानामितिसः यद्वा कस्कादिषुच एधिणउत्त
रस्यविसर्गस्यषःस्यात् अन्यस्यतुसःᳵकᳶपयोरपवादइतिसः काँस्कान् कांस्कान् कस्कः कौतस्कुतः

सर्पिष्कुंडिका धनुष्कपालं आकृतिगणोऽयं संहितायामित्यधिकृत्य छेच ह्रस्वस्य छे परे तुगागमः स्यात् संहि
तायां श्चुत्वस्यासिद्धत्वात् जश्त्वेन दः ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः तस्य चर्त्वेन चः श्चुत्वस्यासिद्धत्वाच्चोः
कुरिति कुत्वं न स्वच्छाया शिवच्छाया आङ्माङोश्च एतयोश्छे परे तुक् स्यात् सदांता द्धेति विकल्पापवादः आ
च्छादयति माच्छिदत् दीर्घात् दीर्घाच्छे परे तुक् स्यात् दीर्घस्यायं तुक् न तु च्छस्य सेनासुराच्छायेति ज्ञाप
कात् चेच्छिद्यते पदांताद्वा दीर्घात्पदांताच्छे परे तुग्वा स्यात् लक्ष्मीच्छाया लक्ष्मीछाया इति हल्संधिः
विसर्जनीयस्य सः विष्णुस्त्राता शर्परे विसर्जनीयः शर्परे खरि विसर्जनीयस्य विसर्जनीयो न त्वन्यत् कः
त्सरुः घनाघनः क्षोभणः इह यथायथं सत्वं जिह्वामूलीयश्च न वाशरि शरि परे विसर्जनीयस्य विसर्जनीय
एव वा स्यात् हरिः शेते हरिश्शेते खर्परे शरि वा विसर्गलोपो वक्तव्यः रामस्थाता हरिस्फुरति पक्षे विसर्गे
सत्वे च त्रैरूप्यं कुप्वोः ᳲक ᳲपौ च क ᳲ करोति कः करोति क ᳲ खनति कः खनति क ᳲ पठति कः पठति सोऽपदा
दौ विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः पयस्पाशं यशस्कल्पं यशस्कं यशस्काम्यति अनव्ययस्ये
ति वाच्यं प्रातः कल्पं काम्ये रोरेवेति वाच्यं नेह गीः काम्यति इणः षः इणः परस्य विसर्जनीयस्य षः स्यात्पूर्व
विषये सर्पिष्पाशं सर्पिष्कल्पं सर्पिष्कं सर्पिष्काम्यति नमस्पुरसोर्गत्योः गतिसंज्ञयोरनयोर्विसर्गस्य सः
स्यात्कुप्वोः परयोः नमस्करोति साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसंज्ञा तदभावे नमः करोति पु
रोऽव्ययमिति नित्यं गतिसंज्ञा पुरस्करोति अगतित्वान्नेह पूः पुरौ पुरः प्रवेष्टव्याः इदुदुपधस्य चाप्रत्ययस्य
इकारोकारोपधस्याप्रत्ययविसर्गस्य षः स्यात्कुप्वोः परयोः निष्प्रत्यूहं आविष्कृतं दुष्कृतं अप्रत्ययस्य किं

अग्निः करोति वायुः करोति एकादेशशास्त्रनिमित्तकस्यनषत्वं कस्कादिषुभ्रातुष्पुत्रशब्दस्यपाठात् तेने
हन मातुः कृपा मुहुसः प्रतिषेधः मुहुः कामा तिरसोन्यतरस्यां सोवास्यात्कुप्वोः परयोः तिरस्कर्त्ता तिरः
कर्ता द्विस्त्रिश्चतुरिति कृत्वोऽर्थे कृत्वोऽर्थे वर्त्तमानानामेषांविसर्गस्यषकारोवास्यात्कुप्वोः परयोः द्विष्क
रोतिद्विः करोतीत्यादि कृत्वोऽर्थे किं चतुष्कपालः इसुसोः सामर्थ्ये एतयोर्विसर्गस्यषकारोवास्यात्कुप्वोः
परयोः सर्पिष्करोति सर्पिः करोति धनुष्करोति धनुः करोति सामर्थ्यमिहव्यपेक्षासामर्थ्ये किं तिष्ठतुसर्पिः
पिबत्वमुदकं नित्यंसमासेऽनुत्तरपदस्थस्य इसुसोर्विसर्गस्यानुत्तरपदस्थस्यसमासे नित्यंषः स्यात्कुप्वोः
परयोः सर्पिष्कुंडिका अनुत्तरपदस्थस्यकिं परमसर्पिःकुंडिका कस्कादिषुसर्पिष्कुंडिकाशब्दोऽसमासेव्यपेक्षा
विरहेऽपिषत्वार्थः व्यपेक्षायांनित्यार्थश्च अतः कृकमिकंसकुंभपात्रकुशाकर्णीष्वनव्ययस्य अकरादुत्तरस्या
नव्ययविसर्गस्य समासेनित्यंसकारादेशः स्यात् करोत्यादिषुपरेषुनतूत्तरपदस्थस्य अयस्कारः अयस्कामः
अयस्कंसः अयस्कुंभः अयस्पात्रं अयः सहिताकुशा अयस्कुशा अयस्कर्णी अतः किं गीःकारः अनव्यय
स्यकिं स्वः कामः समासे किं यशः करोति अनुत्तरपदस्थस्यकिं परमयशःकारः अधःशिरसिपदे एतयो-
र्विसर्गस्यसः स्यात् पदशब्देपरे अधस्पदं शिरस्पदं समासेइत्येवं अदः पदं शिरः पदं अनुत्तरपदस्थस्येत्येव
परमशिरःपदं कस्कादिषुच भास्करः इतिविसर्गसंधिः स्वौजसमौडिति सुप्रत्यये शिवस् अर्च्यइतिस्थि
ते ससजुषोरुः पदांतस्यसस्यसजुषूशब्दस्यचरुः स्यात् जश्त्वापवादः आतोरोरप्लुतादप्लुते अप्लुतादतः
परस्यरोरुः स्यादप्लुतेऽतिपरे भोभगोइति प्राप्तस्ययत्वस्यापवादः उत्वंप्रतिरुत्वस्यासिद्धत्वंतुनभवति

रुत्वमनूद्यउत्वविधेः सामर्थ्यात् प्रथमयोः पूर्वसवर्णः अकः प्रथमाद्वितीययोरचिपरेपूर्वसवर्णदीर्घए
कादेशस्यादितिप्राप्ते नादिचि अवर्णादिचिनपूर्वसवर्णः आद्गुणः एङः पदांतादति शिवोऽर्च्यः अतइ
तितपरः किं देवाअत्र अतीतितपरः किं श्वआगंता आप्लुतात्किं एहिकृष्ण३अत्रगौश्चरति प्लुतस्यासि
द्धत्वादतः परोऽयं अप्लुतादितिविशेषणेतुनत्सामर्थ्यान्नासिद्धत्वं तपरकरणस्यतुनसामर्थ्यंदीर्घनिवृ-
त्याचरितार्थत्वात् अप्लुतेकिं तिष्ठतुपयआ३ग्निदत्तगुरोरनृतइतिप्लुतः हशिच अप्लुतादतः परस्यरोरुः
स्याद्धशि शिवोवंद्यः रोरित्स्ककारानुबंधग्रहणान्नेह प्रातरत्र धातर्गच्छ देवास्इहइतिस्थितेरुत्वं
भोभगोअघोअपूर्वस्ययोऽशि एतत्पूर्वस्यरोर्यादेशः स्यादशिपरे असंधिः सौत्रः लोपः शाकल्यस्य
देवाइह देवायिह अशिकिं देवाः संति यद्यपीहयत्वस्यासिद्धत्वाद्विसर्गोलभ्यते तथापिविसर्गस्यस्था
निवद्भावेनरुत्वाद्यत्वंस्यात् नत्वयमल्विधिः रोरितिसमुदायरूपाश्रयणात् भोस्भगोस्अघोस्इतिस
कारांतानिपातास्तेषां रोर्यत्वे कृते व्योर्लघुप्रयत्नतरः शाकटायनस्य पदांतयोर्यकारवकारयोर्लघूच्चा
रणौ वयौ वास्तोऽशिपरे यस्योच्चारणेजिह्वाग्रोपाग्रमध्यमूलानांशैथिल्यंसलघूच्चारणः ओतोगार्ग्य
स्य ओकारात्परस्य पदांतस्यालघुप्रयत्नस्ययकारस्यनित्यंलोपः स्यात् गार्ग्यग्रहणंपूजार्थं भोअच्युत
लघुप्रयत्नपक्षे भोयच्युत पदांतस्यकिं तोयं उञिचपदे अवर्णपूर्वयोः पदांतयोर्यवयोर्लोपः स्यादुञिप
रे सउएकाग्निः एषउएवभरद्वाजः पदेकिं तंत्रयुतं वेञः संप्रसारणेरूपं यदितुप्रतिपदोक्तोनिपातउञि
तिग्रहीष्यते तर्ह्युत्तरार्थंपदग्रहणं हलि सर्वेषां भोभगोअधोअपूर्वस्य लघ्वलघूच्चारणस्ययकारस्य

लोपः स्याद्धलि सर्वेषांमतेन भोदेवाः भोलक्ष्मि भोविद्वद्वृंद भगोनमस्ते अघोयाहि देवानम्याः देवायांति ह
लिकिं देवाइह देवायिह रो ऽसुपि अन्होरेफादेशः स्यान्नतुसुपि रोरपवादः अहरहः अहर्गणः असुपि
किं अहोभ्यां अत्राहन्निति रुत्वं रूपरात्रिरथंतरेषु रुत्वंवाच्यं अहोरूपं गतमहो रात्रिरेषा एकदेशवि
कृतस्यानन्यत्वात् अहोरात्रः अहोरथंतरं अहरादीनांपत्यादिषु वारेफः विसर्गापवादः अहर्पतिः गीर्प
तिः धूर्पतिः पक्षेविसर्गोपध्मानीयौ रोरि रेफस्य रेफे परे लोपः स्यात् ढ्रलोपेपूर्वस्यदीर्घोऽणः ढरेफौ
लोपयतीति तथा तस्मिन्वर्णेअर्थात् ढकाररेफात्मके परे पूर्वस्याणो दीर्घः स्यात् पुनारमते हरीरम्यः शंभू
राजते अणः किं तृढः वृढः तृहूहिंसायां वृहूउद्यमने पूर्वग्रहणमनुत्तरपदेऽपिपूर्वमात्रस्यदीर्घार्थं लीढः
अजर्घाः मनस् रथ इत्यत्ररुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते विप्रतिषेधेपरंकार्यं तुल्यबलविरो
धेपरंकार्यंस्यादिति लोपे प्राप्ते पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव मनोरथः एतत्तदोः सुलोपो
ऽकोरनञ्समासेहलि अककारयोरेतत्तदोर्यः सुस्तस्यलोपः स्याद्धलि नतुनञ्समासे एषविष्णुः स
शंभुः अकोः किं एषको रुद्रः अनञ्समासे किं असः शिवः हलिकिं एषो ऽत्र सोऽचिलोपेचेत्पादपूर
णं सइत्यस्यसोर्लोपः स्यादचि पादश्चेल्लोपे सत्येवपूर्येत सेमामविड्ढि प्रभृतिं यईशिषे इहऋक्पाद
एवगृह्यतइतिवामनः अविशेषात् श्लोकपादोऽपीत्यपरे सैषदाशरथीरामः सैषराजायुधिष्ठिरः सैष
कर्णोमहात्यागी सैषभीमोमहाबलः लोपेचेदितिकिं सइत्सेतिसएवमुक्का सत्येवेत्यवधारणं तुस्य
श्छंदसीति पूर्वसूत्राद्धलग्रहणानुवृत्त्यालभ्यते तेनेहन सोऽहमाजन्मशुद्धानामाफलोदयकर्मणां

इतिस्वादिसंधिः अर्थवदधातुरप्रत्ययः प्रातिपदिकं धातुंप्रत्ययंप्रत्ययांतंच वर्जयित्वा अर्थवच्छब्द
रूपंप्रातिपदिकसंज्ञंस्यात् कृत्तद्धितसमासाश्च कृत्तद्धितांतौसमासाश्च प्रातिपदिकसंज्ञाःस्युः पूर्व
सूत्रेणसिद्धे समासग्रहणंनियमार्थं यत्रसंघातेपूर्वोभागःपदंतस्यचेद्भवतितर्हिसमासस्यैवेति तेनवा-
क्यस्यन प्रत्ययः आपंचमसमाप्तेरधिकारोऽयं परश्च अयमपितथा ङ्याप्प्रातिपदिकात् ङ्यंतादाबं
तात्प्रातिपदिकाच्चेत्या पंचमसमाप्तेरधिकारः प्रातिपदिकग्रहणेलिंगविशिष्टस्यापिग्रहणमित्येवसिद्धे
ङ्याप्ग्रहणं ङ्याबंतात्तद्धितोत्पत्तिर्यथास्यात् ङ्याब्भ्यां प्राङ्माभूदित्येवमर्थं स्वौजसमौट्छष्टाभ्यां
भिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योःसुप् ङ्यंतादाबंतात् प्रातिपदिकाच्चपरेस्वादयःप्रत्य
याःस्युः सुङ्स्यो रुकारे कारोजशटङपाश्चेतः विभक्तिश्च सुप्तिङौविभक्तिसंज्ञौस्तः तत्रसुऔजसित्या
दीनांसप्तानांत्रिकाणांप्रथमादयःसप्तम्यंताः प्राचांसंज्ञास्ताभिरिहापिव्यवहारः सुपः सुपस्त्रीणित्रीणि
वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानिस्युः द्व्येकयोर्द्विवचनैकवचने द्वित्वैकत्वयोरेतेस्तः
बहुषुबहुवचनं बहुत्वेएतत् स्यात् रुत्वविसर्गौ रामः सरूपाणामेकशेषएकविभक्तौ एकविभक्तौया
निसरूपाण्येव दृष्टानि तेषामेकएवशिष्यते प्रथमयोःपूर्वसवर्णः नादिचि वृद्धिरेचि रामौ चुटू प्रत्ययाद्यौ
चुटूइतौस्तः नविभक्तौतुस्माः विभक्तिस्थास्तवर्गसकारमकाराइतोनस्युः इतिसकारस्यनेत्वं अतोगुणे
अपदांतादकाराद्गुणेपरतः पररूपमेकादेशःस्यादितिप्राप्ते परत्वात्पूर्वसवर्णदीर्घः अतोगुणइतिहिपुरस्ता
दपवादाअनंतरान्विधीन्बाधंतेनोत्तरानितिन्यायेनाकःसवर्णइत्यस्यैवापवादोयं नतुप्रथमयोरित्यस्य

पिरामः एकवचनंसंबुद्धिः संबोधनेप्रथमायाएकवचनंसंबुद्धिसंज्ञंस्यात् एङ्ह्रस्वात्संबुद्धेः एङंता-
ध्रस्वांताच्चांगाद्धलुप्यते संबुद्धेश्चेत् संबुद्ध्याक्षिप्तस्यांगस्येङ्ह्रस्वाभ्यांविशेषणान्नेह हे कतरत् कुलेति
हेराम हेरामौ हेरामाः एङ्ग्रहणंकिं हेहरे हेविष्णो अत्रहिपरत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्पर
त्वंनास्ति अमिपूर्वः अकोऽम्यचिपरतः पूर्वरूपमेकादेशःस्यात् रामं रामौ लशक्वतद्धिते तद्धितवर्ज
प्रत्ययाद्यालशकवर्गाइतःस्युः इतिशसः शस्येत्संज्ञा तस्माच्छसोनःपुंसि पूर्वसवर्णदीर्घात्परोयः
शसः सकारस्तस्यनःस्यात्पुंसि अट्कुप्वाङ्नुम्व्यवायेऽपि अट्कवर्गपवर्गआङ्नुमेतैर्व्यस्तैर्यथासं
भवंमीलितैश्चव्यवधानेऽपि रषाभ्यांपरस्यनस्यणःस्यात्समानपदेपदव्यवायेऽपीतिनिषेधंबाधितुमाङ्ग्र
हणं नुम्ग्रहणमनुस्वारोपलक्षणार्थं तच्चाकर्तुंशक्यं अयोगवाहानामट्सूपदेशस्योक्तत्वात् इतिणत्वेप्रा
प्ते पदांतस्य पदांतस्यनस्यणत्वंनस्यात् रामान् यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेंगं यःप्रत्ययोय
स्माल्क्रियतेतदादिशब्द रूपंतस्मिन्प्रत्ययेपरेंऽगसंज्ञंस्यात् भवामिभविष्यामीत्यादौविकरणविशिष्ट
स्यांगसंज्ञार्थंतदादिग्रहणं विधिरितिकिं स्त्रीईयती प्रत्ययेकिं प्रत्ययविशिष्टस्यततोऽप्यधिकस्यवामा
भूत् अंगस्येत्यधिकृत्य टाङसिङसामिनात्स्याः अकारांतादंगाट्टादीनांक्रमादिनादयआदेशाःस्फः
णत्वं रामेण सुपिच यञादौसुपिपरेअतोऽगस्यदीर्घःस्यात् रामाभ्यां अतोभिसऐस् अकारांतादं
गाद्भिसऐस्स्यात् अनेकाल्त्वात्सर्वादेशः रामैः ङेर्यः आतोंऽगात् परस्यङेर्यादेशःस्यात् रामाय इह-
स्थानिवद्भावेनयादेशस्यसुप्त्वात्सुपिचेतिदीर्घः सन्निपातलक्षणोविधिरनिमित्तंतद्विघातस्येतिप

रिभाषानेहप्रवर्त्तते कशयक्रमणेइतिनिर्देशेनतस्याअनित्यत्वज्ञापनात् रामाभ्यां बहुवचनेझल्येत्
झलादौबहुवचनेसुपिपरेऽतोंऽगस्यएकारः स्यात् रामेभ्यः बहुवचनेकिं रामःझलिकिं रामाणांसुपि
किं पंचध्वं जशत्वं वाऽवसाने अवसानेझलांचरोवास्युः रामात् रामाद् द्वित्वेरूपचतुष्टयं रामाभ्यां
रामेभ्यः रामस्य सस्यद्वित्वपक्षेतुखरिचेतिचर्त्वेऽप्यांतरतम्यात्सस्यसएवनतुतकारः अल्पप्राणतया
प्रयत्नभेदात् अतएवसः सीतितादेशआरभ्यते ओसिच ओसिपरेऽतोंगस्यएकारः स्यात् रामयोः
ह्रस्वनद्यापोनुट् ह्रस्वांतान्नद्यंतादाबंताच्चांगात्परस्यामोनुडागमः स्यात् नामि नामिपरे अजंतांग
स्यदीर्घः स्यात् रामाणां सुपिचेतिदीर्घोयद्यपिपरस्तथापीहनप्रवर्त्तते सन्निपातपरिभाषाविरोधा
त् नामीत्यनेनत्वारंभसामर्थ्यात्परिभाषाबाध्यते रामे रामयोः सुपिएत्वेकृते अपदांतस्यमूर्धन्यः
आपादपरिसमाप्तेरधिकारोऽयं इण्कोरित्यधिकृत्य आदेशप्रत्यययोः सहेःसाडःसइतिसूत्रात्सइतिष
ष्ठ्यंतमनुवर्त्तते इणकवर्गाभ्यांपरस्यापदांतस्यादेशप्रत्ययावयवश्चयः सकारस्तस्यमूर्द्धन्यादेशः स्यात्
विवृताघोषस्यसस्यतादृशएवषः रामेषु इण्कोःकिंरामस्य आदेशप्रत्ययोःकिं सुपीःसुपिसो अपदां
तस्यकिं हरिस्तत्र एवंकृष्णमुकुंदादयः सर्वादीनिसर्वनामानि सर्वादीनिशब्दरूपाणिसर्वनामसंज्ञा
निस्युः तदंतस्यापीयंसंज्ञा द्वंद्वेचेतिज्ञापकात् तेनपरमसर्वत्रेतित्रलुपरमभवकानित्यत्राकच्चसिद्ध्यति
जसःशी अदंतात्सर्वनाम्नः परस्यजशःशीस्यात् अनेकाल्त्वात्सर्वादेशः नचार्वणस्तृइत्यादाविवना
नुबंधकृतमनेकाल्त्वमिति वाच्यं सर्वादेशत्वात्प्रागित्संज्ञायाएवाभावात् सर्वे सर्वनाम्नः स्मै अतः

सर्वनाम्नोङेः इत्यस्य स्मैस्यात् सर्वस्मै ङसिङ्योः स्मात्स्मिनौ अतः सर्वनाम्नएतयोरेतौस्तः सर्वस्मात् आमिसर्वनाम्नः सुट् अवर्णांतात् सर्वनाम्नोविहितस्यामः सुडागमःस्यात् एत्वषत्वे सर्वेषां सर्वस्मिन् शेषंरामवत् एवंविश्वादयोऽप्यदंताः सर्वादयश्चपंचत्रिंशत् सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायाम संज्ञायां स्वमज्ञातिधनाख्यायां अंतरंबहिर्योगोपसंख्यानयोः त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किं उभशब्दोद्वित्वविशिष्टस्यवाचकः अतएवनित्यंद्विवचनांतः तस्येह पाठस्तूभकावित्यकजर्थः नचकप्रत्ययेनेष्टसिद्धिः द्विवचनपरत्वाभावेनोभयतःउभयत्रेत्यादाविवाप्यसंगात् तदुक्तं उभयोऽन्यत्रेति अन्यत्रद्विवचनपरत्वाभावे उभयशब्दस्यद्विवचनंनास्तीतिकैयटः अस्तीतिहरदत्तः तस्माज्जस्ययजादेशस्यस्थानिवद्भावेनतयप् प्रत्ययांततया प्रथमचरमेतिविकल्पेप्राप्ते विभक्तिनिरपेक्षत्वेनांतरंगत्वान्नित्यैवसंज्ञाभवति उभये डतरडतमौप्रत्ययौ यद्यपिसंज्ञाविधौप्रत्ययग्रहणे तदंतग्रहणंनास्ति सुप्तिङंतमितिज्ञापकात् तथापीहतदंतग्रहणं केवलयोःसंज्ञायाःप्रयोजनाभावात् अन्यतरान्यतमशब्दौअव्युत्पन्नौस्वभावात् द्विबहुविषयेनिर्धारणेवर्त्तेते तत्रान्यतमशब्दस्यगणेपाठाभावान्नसंज्ञा त्वत्वइतिद्वावप्यदंतावन्यपर्यायौ एकउदात्तः अपरोऽनुदात्तइत्येके एकस्तांतइत्यपरे नेमइत्यर्धे समःसर्वपर्यायः तुल्यपर्यायस्तुनेहगृह्यते यथासंख्यमनुदेशःसमानामितिज्ञापकात् अंतरंबहिर्योगेइतिगणसूत्रेअपुरीतिवक्तव्यं अंतरायांपुरि पूर्वपरावर

दक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायां एतेषांव्यवस्थायामसंज्ञायांसर्वनामसंज्ञागणपाठात्सर्वत्रया
प्राप्तासाजसिवास्यात् पूर्वे पूर्वाः स्वाभिधेयापेक्षावधिनियमोव्यवस्था व्यवस्थायांकिं दक्षिणागाथकाः कुश
लाइत्यर्थः असंज्ञायांकिं उत्तराः कुरवः स्वमज्ञातिधनाख्यायां ज्ञातिधनान्यवाचिनः स्वशब्दस्यप्राप्तासं
ज्ञासाजसिवास्यात् स्वे स्वाः आत्मीयाइत्यर्थः आत्मानइतिवा ज्ञातिधनवाचिनस्तुस्वाः ज्ञातयोऽर्थावा
अंतरंबहिर्योगोपसंव्यानयोः बाह्येपरिधानीयेचार्थेऽतरशब्दस्यप्राप्तासंज्ञासाजसिवास्यात् अंतरे
अंतरावागृहाः बाह्याइत्यर्थः अंतरेअंतरावाशाटकाः परिधानीयाइत्यर्थः पूर्वादिभ्योनवभ्योवा एभ्यो
ङसिङ्योः स्मात्स्मिनौवास्तः पूर्वस्मात् पूर्वात् पूर्वस्मिन् पूर्वे एवंपरादीनामपि शेषंसर्ववत् एकशब्दः
संख्यायांनित्यैकवचनांतः नबहुव्रीहौ बहुव्रीहौचिकीर्षिते सर्वनामसंज्ञानस्यात् त्वकंपितायस्यसत्वत्क
पितृकः अहकंपितायस्यसमत्कपितृकः इहसमासात्प्रागेवप्रक्रियावाक्येसर्वनामसंज्ञानिषिध्यते अन्य
थालौकिकविग्रहवाक्यइवतत्राप्यकच्प्रवर्त्तेतसचसमासेऽपिश्रूयेत अतिक्रांतोभवकंतमतिभवकानितिव
त् भाष्यकारस्तुत्वकत्पितृ कोमकत्पितृकइतिरूपेइष्टापत्तिंकृत्वैतत्सूत्रंप्रत्याचख्यौ यथोत्तरंमुनीनांप्रामाण्यंसंज्ञोपस
र्जनीभूतास्तुनसर्वादयः महासंज्ञाकरणेन तदनुगुणानामेवगणे सन्निवेशात् अतः संज्ञाकार्यमंतर्गणकार्यं
चतेषांनभवति सर्वोनामकश्चित्तस्मैसर्वायदेहि अतिक्रांतः सर्वमतिसर्वस्तस्मैअतिसर्वायदेहि अतिकत्तरंकु
लंअतिततत् तृतीयासमासे अत्रसर्वनामतानस्यात् मासपूर्वाय तृतीयासमासार्थेवाक्येऽपिन मासेनपूर्वा
य द्वंद्वेच द्वंद्वेउक्तासंज्ञानस्यात् वर्णाश्रमेतराणां समुदायस्यायंनिषेधोनत्ववयवानां नचैवंतदंतविधिना

स्मट्प्रसंगः सर्वनाम्नोविहितस्यामः स्मडितिव्याख्यातत्वात् विभाषाजसि जसाधारं यत्कार्यंशीभावाख्यं
तत्रकर्तव्ये द्वंद्वे उक्तासंज्ञावानस्यात् वर्णाश्रमेतरे वर्णाश्रमेतराः शीभावंप्रत्येवविभाषेत्युक्तमतोनाकच् किंतुकप्र
त्ययएव वर्णाश्रमेतरकाः **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** एतेजसः कार्यंप्रत्युक्तसंज्ञावास्युः
प्रथमेप्रथमाः इत्यादिशेषंरामवत् तयप्प्रत्ययस्ततस्तदंताग्राह्याः द्वितयेद्वितयाः शेषंरामवत् नेमे नेमाः
शेषंसर्ववत् विभाषाप्रकरणेतीयस्यङित्सूपसंख्यानं द्वितीयस्मै द्वितीयायेत्यादि एवंतृतीयः अर्थ
वद्ग्रहणान्नेह पटुजातीयाय निर्जरः जरायाजरसन्यतरस्यां जराशब्दस्यजरसूवास्यादजादौविभक्तौपरे प
दांगाधिकारेतस्यचतदंतस्यच अनेकाल्त्वात्सर्वादेशेप्राप्ते निर्दिश्यमानस्यादेशाभवंति एकदेशविकृतस्या
नन्यत्वाज्जरशब्दस्यजरस् निर्जरसौ निर्जरसः इनादीन्बाधित्वा परत्वाज्जरस् निर्जरसा निर्जरसे निर्जर
सः २ पक्षेहलादौचरामवत् वृत्तिकृतातुपूर्वविप्रतिषेधेनेनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्व
माश्रित्यजरसि कृतेनिर्जरसिननिर्जरसादितिरूपेनतुनिर्जरसानिर्जरसइति केचिदित्युक्तं तथाभिसिनि
जरसैरितिरूपांतरमुक्तं तदनुसारिभिश्चषष्ठेयकवचने निर्जरस्येवरूपमितिस्वीकृतं एतच्चभाष्यविरुद्धं
पदन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु पाददंतनासिकामासहृदयनि
शाअसृज्यूषदोष्यकृत्शकृत्उदकआस्यएषांपदादयआदेशाः स्युः शसादौवा यत्तुआसनशब्दस्य
आसन्नादेशइति काशिकायामुक्तंतत्प्रामादिकमेव पादः पादौ पादाः पादं पादौ पादः पदान् पदा पादे
नेत्यादि स्मडनपुंसकस्य स्मडितिप्रत्याहारः स्वादिपंचवचनानि सर्वनामस्थानसंज्ञानिस्युरक्लीबस्य

स्वादिष्वसर्वनामस्थाने कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदसंज्ञं स्यात् यचि भं यकारादि
ष्वजादिषु कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् आकडारादेका संज्ञा इत ऊर्ध्वं कडा
राः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या परानवकाशा च तेन शसादावचि भसंज्ञैव न पदत्वमतो
जश्त्वं न दतः दता जश्त्वं दद्भ्यामित्यादि मासः मासा रुत्वे यत्वे च यलोपः माभ्यां माभिरित्यादि भस्य अ-
धिकारो ऽयं अल्लोपो ऽनः अंगावयवो ऽसर्वनामस्थान यजादिस्वादि प्रत्ययपरो यो ऽन्तस्याकारस्य लोपः
स्यात् रषाभ्यां नो णः समानपदे एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् पूष्णः पूष्णा पूर्वस्मादपि विधौ स्था
निवद्भाव इति पक्षे त्वड्व्यवाय इत्येवात्र णत्वं पूर्वत्रासिद्धीये न स्थानिवदिति त्विह नास्ति तस्य दोषः संयोगा
दिलोपलत्वणत्वेष्विति निषेधात् नलोपः प्रातिपदिकांतस्य नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे प्राति
पदिकसंज्ञकं यत्पदं तदंतस्य नकारस्य लोपः स्यात् नलोपस्यासिद्धत्वाद्दीर्घत्वमेत्वमैस्त्वं च न पूषभ्यां
पूषभिरित्यादि विभाषा ङिश्योः अंगावयवो ऽसर्वनामस्थान यजादि स्वादि परो यो ऽन्तस्याकारस्य लो
पः स्याद्वा ङिश्योः परयोः पूष्णि पूषणि पक्षे रामवत् पद्दन्निति सूत्रे प्रभृति ग्रहणं प्रकारार्थं तथा चौङः श्या
मपि दोषन्नादेशो भाष्ये कुकुद्दोषणी इत्युदाहृतः तेन पदंघ्रिश्चरणो ऽस्त्रियां स्वांतं ह्वन्मानसं मन इत्यादि सं
गच्छते आसन्यं प्राणमूचुरिति च आस्ये भवः आसन्यः दोषशब्दस्य नपुंसकत्वमप्यत एव भाष्यात् तेन दक्षि
णं दोर्निशाचर इति संगच्छते भुजबाहू प्रवेष्टो दोरिति साहचर्यात्पुंस्त्वमपि दोषं तस्य तथाविधस्य भजत इति
द्व्योरन्होर्भवो व्यन्हः संख्याविसायपूर्वस्यान्हस्या ऽहन्नन्यतरस्यां ङौ संख्यादिपूर्वस्यान्हस्या ऽहनादे

शोवास्यात्‌ङौपरतः  द्व्यान्हि द्व्यहनि द्व्यन्हे विगतमहो व्यन्हः व्यन्हि व्यहनि व्यन्हे अन्हः साय: सायान्हः
सायान्हि सायाहनि सायान्हे इत्यदंताः विश्वपाः दीर्घाज्जसिच दीर्घाज्जसिइचिचपरेपूर्वसवर्णदीर्घो
नस्यात्‌ वृद्धिः विश्वपौ सवर्णदीर्घः विश्वपाः यद्यपीह औङि नादिचीत्येवसिद्धं जसितुसत्यपि पूर्वसवर्णदीर्घे
क्षतिर्नास्ति तथापिगोतौ गोर्यइत्याद्यर्थसूत्रमिहापिन्याय्यत्वादुपन्यस्तं आतोधातोः आकारांतोयोधातु
स्तदंतस्यभस्यांगस्य लोपःस्यात्‌ अलोंऽत्यस्य विश्वपः विश्वपा विश्वपाभ्यामित्यादि एवंशंखध्मादयः धा
तोः किं हाहान्‌ टासवर्णदीर्घः हाहा डे वृद्धिः हाहै ङसिङसोर्दीर्घः हाहाः २ ओसि वृद्धिः हाहौः २ ङौ आद्गुणः हा
हे शेषंविश्वपावत्‌ आत इति योगविभागादधातोरप्यालोपः क्वचित्‌ क्त्वः श्वः इत्यादंताः हरिः प्रथमयोः पूर्व
सवर्णः हरी जसिच ह्रस्वांतस्यांगस्यगुणःस्याज्जसिपरे हरयः ह्रस्वस्यगुणः ह्रस्वस्यगुणःस्यात्संबुद्धौ ए
ङ्ह्रस्वादिनिलोपः हे हरे अमिपूर्वः हरिं हरी हरीन्‌ शेषोऽघ्यसखि अनदीसंज्ञौह्रस्वौयाविदुतौतदंतंस
खिवर्जंघिसंज्ञंस्यात्‌ शेषः किं मत्यै एकसंज्ञाधिकारात्सिद्धेशेषग्रहणंस्पष्टार्थं ह्रस्वौकिं वातप्रम्ये इदुतौ
किं मात्रे आङोनास्त्रियां घेः परस्याङोनास्यादस्त्रियां आङितिटासंज्ञाप्राचां हरिणा अस्त्रियांकिंमत्या
घेर्ङिति घिसंज्ञकस्यङितिसुपिपरेगुणःस्यात्‌ हरये घेः किंसख्ये ङितिकिं हरिभ्यां सुपिकिं पट्वी
घेर्ङितीतिगुणेकृते ङसिङसोश्च एङोङसिङसोरतिपरे पूर्वरूपमेकादेशःस्यात्‌ हरेः२ हर्योः हरीणां अ
च्चघेः इदुद्भ्यामुत्तरस्यङेरौत्स्यात्‌ घेरंतादेशश्चाकारः हरौ हर्योः हरिषु एवंश्रीपत्यग्निरविकव्यादयः अन
ङ्सौ सख्युरंगस्यानङादेशःस्यादसंबुद्धौ सोपरे ङिच्चेत्संतादेशः अलोंऽत्यस्यात्पूर्वउपधा अंत्यादलःपूर्वो

वर्णः सउपधा संज्ञः स्यात् सर्वनामस्थाने चासंबुद्धौ नांतस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने
परे अपृक्त एकाल्प्रत्ययः एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं
हल् हलंतात्परं दीर्घौ यौ ङ्यापौ तदंतात्त्वपरं सुतिसीत्येतदपृक्तं हल्लुप्यते सखा हे सखे हल्ङ्याभ्यः किंग्रा
मणीः दीर्घात्किं निष्कौशांतिः अतिखट्वः सुतिसीतिकिं अभैत्सीत् तिपा सह चरितस्य सिपो ग्रहणात्सि
चो ग्रहणं नास्ति अपृक्तं किं बिभर्त्ति हल् किं बिभेद प्रथमहल् किं राजा नलोपो न स्यात् संयोगांतलोपस्या
सिद्धत्वात् सख्युरसंबुद्धौ सख्युरंगात्परं संबुद्धिवर्जं सर्वनामस्थानं णित्कार्यकृत् स्यात् अचो ञ्णि
ति ञितिणितिच प्रत्यये परे अजंतांगस्य वृद्धिः स्यात् सखायौ सखायः सखायं सखायौ सखीन्
घिसंज्ञाभावान्न तत्कार्यं सख्या सख्ये ख्यत्यात्परस्य खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशा
भ्यां परस्य ङसिङसोरत उत्स्यात् सख्युः२ औत् इदुद्भ्यां परस्य ङेरौत्स्यात् उकारानुवृत्तिरुत्तरार्था स-
ख्यौ शेषं हरिवत् शोभनः सखा सुसखा सुसखायौ सुसखायः अनङ्णिद्वद्भावयो रंगत्वात्तदंतेऽपि प्र
वृत्तिः समुदायस्य सखिरूपत्वाभावेनाऽसखीति निषेधाप्रवृत्तेर्घिसंज्ञा सुसखिना सुसखये ङसिङ-
सोर्गुणे कृते कृतयणादेशत्वाभावात् ख्यत्यादित्यस्य फलं न सुसखेः२ सुसखौ इत्यादि शेषं हरिवत् एवम-
तिशयितः सखाऽतिसखा परमः सखायस्येति विग्रहे परमसखा परमसखायावित्यादि गौणत्वेप्यनङ्
णित्वे प्रवर्त्तेते सखीमतिक्रांतोऽतिसखिः लिंगविशिष्टपरिभाषाया अनित्यत्वान्नटच् हरिवत् इहानङ्
णित्वे न भवतः गोस्त्रियोरिति ह्रस्वेन सखिशब्दस्य लाक्षणिकत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्त

स्यैवग्रहणात् पतिः समासएव पतिःशब्दः समासएवघिसंज्ञः स्यात् पत्या पत्ये पत्युः पत्यौ शेषंहरिवत्
समासेतु भूपतये कतिशब्दोनित्यंबहुवचनांतः बहुगणवतुडति संख्या एतेसंख्यासंज्ञाः स्युः डतिच डत्यं
तासंख्याषट्संज्ञास्यात् प्रत्ययस्यलुक्श्लुलुपः लुक्श्लुलुप्शब्दैः कृतंप्रत्ययादर्शनंक्रमात्त त्तत्संज्ञंस्या
त् षड्भ्योलुक् षड्भ्यः परयोर्जश्शसोर्लुक्स्यात् प्रत्ययलोपेप्रत्ययलक्षणं प्रत्ययेलुप्तेऽपितदाश्रितं
कार्यंस्यात् इतिजसिचेतिगुणेप्राप्ते नलुमतांगस्य लुक्श्लुलुबेतेलुमंतः लुमताशब्देनलुप्तेतन्निमित्तमंग-
कार्यंनस्यात् कति २ कतिभिः कतिभ्यः २ कतीनांकतिषु युष्मदस्मद् षट्संज्ञकास्त्रिषुसरूपाः त्रिशब्दोनि
त्यंबहुवचनांतः त्रयः त्रीन् त्रिभिः त्रिभ्यः २ त्रेस्त्रयः त्रिशब्दस्यत्रयादेशः स्यादामि त्रयाणां परमत्रयाणां
गौणत्वेतुनेतिकेचित् प्रियत्रीणां वस्तुतस्तु प्रियत्रयाणां त्रिषु द्विशब्दोनित्यंद्विवचनांतः त्यदादीनामः
एषामकारोऽन्तादेशः स्याद्विभक्तौ द्विपर्यंतानामेवेष्टिः द्वौ द्वौ द्वाभ्यां ३ द्वयोः २ द्विपर्यंतानांकिं भवान् भवंतौ
संज्ञायामुपसर्जनत्वेचनात्वं सर्वाद्यंतर्गणकार्यत्वात् द्विर्नामकश्चित् द्विः द्वौ द्वयः द्वावतिक्रांतोऽतिद्विः
हरिवत् प्राधान्येतु परमद्वावित्यादि औडुलोमिः औडुलोमी बहुवचनेतुउडुलोमाः लोम्नोऽपत्येषुबहु
ष्वकारोवक्तव्यः बाह्वादीञोऽपवादः औडुलोमिं औडुलोमी उडुलोमानित्यादि इतीदंताः वातप्रमी
रित्युणादिसूत्रेणमाङ ई प्रत्ययः कित् वातंप्रमिमीते वातप्रमीः दीर्घाज्जसिच वातप्रम्यौ वातप्रम्यः हे
वातप्रमीः अमिपूर्वः वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रम्ये वातप्रम्यः २ वातप्रम्योः वातप्र
म्यां दीर्घत्वान्ननुट् ङौतुसवर्णदीर्घः वातप्रमी वातप्रम्योः वातप्रमीषु एवंययीपप्यादयः यांत्यनेनेतिय-

यी: मार्गः पाति लोकमिति पपीः सूर्यः यापोः कित् इ्चेति ईप्रत्ययः क्विबंतवातमीशब्दस्य तु अमिशसिङौ
चविशेषः वातप्रम्यं वातप्रम्यः वातप्रम्यि एरनेकाच इति वक्ष्यमाणो यण् प्रधीवत् बव्ह्यः श्रेयस्यो यस्य
स बहुश्रेयसी दीर्घङ्यन्तत्वाद्धल्ङ्यादि लोपः यूस्त्र्याख्यौ नदी ईदूदंतौ नित्यस्त्रीलिंगौ नदीसंज्ञौ स्तः
प्रथमलिंगग्रहणंच पूर्वस्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः अंबार्थनद्योर्ह्रस्वः अंबा
र्थानां नद्यंतानां च ह्रस्वः स्यात्संबुद्धौ हे बहुश्रेयसि शसि बहुश्रेयसीन् आण्नद्याः नद्यंतात्परेषां ङित्ता
माडागमः स्यात् आटश्च आटो ऽचि परे वृद्धिरेकादेशः स्यात् बहुश्रेयस्यै बहुश्रेयस्याः २ नद्यंतात्परत्वा
न्नुट् बहुश्रेयसीनां ङेराम्नद्याम्नीभ्यः नद्यंतादाबंतान्नीशब्दाच्च ङेः आमादेशः स्यात् इह परत्वादाटा नुट्
बाध्यते बहुश्रेयस्यां शेषमीप्रत्ययांतवातप्रमीवत् अङ्यंतत्वान्न सुलोपः अतिलक्ष्मीः शेषं बहुश्रेय
सीवत् कुमारीमिच्छन् कुमारीवाचरन् ब्राह्मणः कुमारी क्यजंतादाचारक्विबंताद्वा कर्त्तरि क्विप् हल्ङ्यादि
ना सुलोपः अचि श्नुधातुभ्रुवां य्वोरियङुवङौ श्नुप्रत्ययांतस्येवर्णोवर्णांतस्य धातोर्भ्रू इत्येतस्य चांग
स्येयङुवङौ स्तो ऽजादौ प्रत्यये परे ङित्त्वेऽस्यंतादेशः आंतरतम्यादेरियङ् ओरुवङ् इतीयङि प्राप्ते एर
नेकाचो ऽसंयोगपूर्वस्य धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदंतो यो धातुस्तदंतस्यानेकाचोऽं
गस्य यण् स्यादजादौ प्रत्यये परे इति यण् कुमार्यौ कुमार्यः हे कुमारि अमि शसि च कुमार्य्यं कुमार्यः कु
मार्यै कुमार्याः २ कुमारीणां कुमार्यां कुमारीषु प्रधीः प्रध्यौ प्रध्यः उन्नयतीत्युन्नीः धातुना संयोगस्य
विशेषणादिह स्यादेव यण् उन्न्यौ उन्न्यः हे उन्नीः उन्न्यं ङेराम् उन्न्यां एवं ग्रामणीः अनेकाचः किं नीः नियौ

नियः अभिशसिचपरत्वादियङ् नियं नियः ङेराम् नियां असंयोगपूर्वस्य किं सुश्रियौ यवक्रियौ गति
कारकेतरपूर्वपदस्ययणनेष्यते शुद्धधियौ परमधियौ कथंतर्हि दुर्धियः वृश्चिकभियाइत्यादि उच्यते दु
स्थिताधीर्येषामितिविग्रहे दुरित्यस्यधीशब्दंप्रतिगतित्वमेवनास्ति यत्क्रियायुक्ताः प्रादयस्तंप्रत्येवग-
त्युपसर्गसंज्ञाः स्युः वृश्चिकशब्दस्यबुद्धिकृतमपादानत्वंनेहविवक्षितं वृश्चिकसंबंधिनीभीर्वृश्चिक
भीरित्युत्तरपदलोपोवा नभूसुधियोः एतयोर्यण्नस्यादचिसुपिपरे सुधियौ सुधियः इत्यादि
सखायमिच्छतिसखीयति ततः क्विप् अल्लोपयलोपौ अल्लोपस्यस्थानिवत्वाद्यणिप्राप्ते क्वौलुप्तं
नस्थानिवत् एकदेशविकृतस्यानन्यतयानङ्णित्वे सखा सखायौ सखायः हेसखीः अभिपूर्वरू
पात्परत्वाद्यणिप्राप्तेततोऽपिपरत्वात्सख्युरसंबुद्धाविति प्रवर्त्तते सखायं सखायौ शसि यण् सख्यः
सहखेनवर्त्ततइतिसखः तमिच्छतीतिसखीः सुखमिच्छतीतिसुखीः सुतमिच्छतीतिसुतीः स
ख्यौ सुख्यौ सुत्यौ ख्यत्यादितिदीर्घस्यापिग्रहणादुकारः सख्युः सुख्युः सुत्युः लूनमिच्छती-
तिलूनिः क्षाममिच्छतीतिक्षामीः प्रस्तीमं प्रस्तीमीः एषांङसिङसोर्यण् नत्वमत्वयोरसिद्धत्वात्ख्य
त्यादित्युत्वं लून्युः क्षाम्युः प्रस्तीम्युः शुष्कीयतेः क्विप् शुष्कीः पक्वीयतेः पक्वीः इयङ् शुष्कियौ शु
ष्कियः ङसिङसोः शुष्कियइत्यादि इतीदंताः शंभुर्हरिवत् एवंविष्णुवायुभान्वादयः तृज्वत्क्रोष्टुः
क्रोष्टुशब्दस्तृचंतेनतुल्यंवर्तते ऽसंबुद्धौ सर्वनामस्थानेपरे क्रोष्टुशब्दस्थाने क्रोष्टृशब्दः प्रयोक्तव्य
इत्यर्थः ऋतोङिसर्वनामस्थानयोः ङौसर्वनामस्थानेचपरे ऋदंतांगस्यगुणःस्यात् इतिप्राप्ते

ऋदुशनस्पुरुदंसोऽनेहसांच ऋदंतानामुशनसादीनांचानङ् स्यादसंबुद्धौसौपरे ङि च्चेत्यंतादेशः असृन् तृच्-
स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणां अबादीनामुपधायादीर्घः स्यादसंबुद्धौसर्वनामस्थानेपरे नप्त्रा
दिग्रहणंव्युत्पत्तिपक्षेनियमार्थं उणादिनिष्पन्नानांतृन्तृजंतानांचेद्भवतितर्हिनप्त्रादीनामेव तेनपितृभ्रातृप्रभृ
तीनांन उद्गातृशब्दस्यभवत्येव समर्थसूत्रेउद्गातारइतिभाष्यप्रयोगात् क्रोष्टा हेक्रोष्टो क्रोष्टारौ क्रोष्टारः क्रो
ष्टारं क्रोष्टारौ क्रोष्टून् विभाषातृतीयादिष्वचि अजादिषुतृतीयादिषुक्रोष्टुर्वातृज्वत् क्रोष्ट्रा क्रोष्ट्रे ऋतउत् ऋ
दंतांगात्ङसिङसोरतिपरेउकारएकादेशः स्यात् रपरत्वं रात्सस्य रेफात्संयोगांतस्य सस्यैवलोपोनान्यस्य
रेफस्यविसर्गः क्रोष्टुः २ आमिपरत्वात्तृज्वद्भावेप्राप्ते नुमचिरतृज्वद्भावेभ्योनुट् पूर्वविप्रतिषेधेन क्रोष्टूनां क्रो
ष्टरि पक्षे हलादौचशंभुवत् इत्यृदंताः हूहूः हूह्वौ हूह्वः हूहूं हूह्वौ हूहूनित्यादि अतिचमूशब्देतुनदीकार्यंवि
शेषः हे अतिचमु अतिचम्वै अतिचम्वाः अतिचमूनां अतिचम्वां खलपूः ओः सुपि धात्ववयवसंयोगपूर्वो
नभवति यउवर्णस्तदंतोयोधातुस्तदंतस्यानेकाचोंऽगस्ययण् स्यादजादौसुपि गतिकारकेतरपूर्वपदस्ययण्
णनेष्यते खलप्वौ खलप्वइत्यादि एवंसुल्वादयः अनेकाचः किं लूः लुवौ लुवः धात्ववयवेतिकिं उल्लूः उल्लुवौ उ
ल्लुवः असंयोगपूर्वस्य किं कटप्रुवौ कटप्रुवः गतीत्यादिकिं परमलूः परमलुवौ सुपिकिं लुलुवतुः स्वभूः नभू
सुधियोः स्वभुवौ स्वभुवः वर्षाभ्वश्च अस्योवर्णस्ययण् स्यादचिसुपि वर्षाभ्वौ वर्षाभ्वः दृंभतीतिदृंभूः
अंदूदृंभूजंबूकफेलूकर्कंधूदिधिषु इत्युणादिसूत्रेण व्युत्पादिताः दृंभ्वौ दृंभ्वः दृंभून् दृन्निति नांतेहिंसार्थे
अव्ययेभुवः क्विप् दृन्भूः दृन्करपुनः पूर्वस्यभुवोयणवक्तव्यः दृन्भ्वं दृन्भ्वः इत्यादिखलपूवत् करभ्वं

करम्भः दीर्घपाठे करएव कारः स्वार्थिकः प्रज्ञाद्यण् कारम्भौ कारम्भः पुनर्भूर्यौगिकः पुंसि पुनर्भ्वावित्यादि
दृग्भूकाराभूशब्दोतुस्वयंभूवत् इत्यूदंताः ऋदुशनेस्यनङ् अप्तृन्निति दीर्घः धाता धातारौ धातारः ऋ
तोङीतिगुणः हेधातः धातारौ धातॄन् ऋवर्णान्नस्यणत्वंवाच्यं धातॄणां इत्यादि एवंनप्त्रादयः उद्गाता
उद्गातारौ पिता व्युत्पत्तिपक्षेऽपिनप्त्रादिग्रहणस्यनियमार्थत्वान्नदीर्घः पितरौ पितरः पितरं पितरौ शेषं
धातृवत् एवंजामातृभ्रात्रादयः ना नरौ नरः हेनः नृच नृइत्यस्यनामिवादीर्घः स्यात् नृणां नॄणां इत्यृदंताः
कॄ तॄ अनयोरनुकरणे प्रकृतिवदनुकरणमितिवैकल्पिकातिदेशादित्वेरपरत्वं कीः किरौ किरः तीः तिरौ तीरः इ
त्यादिशेषं गीर्वत् इत्वाभावपक्षेऋदुशनेति ऋतोङीतिचतपरकरणादनङ् गुणौन कॄः क्रौ क्रः क्रं क्रौ कॄन् क्राके
इत्यादि इत्यॄदंताः गम्लृ शकॢ अनयोरनुकरणे अनङ् गमा शका गुणविषये तुलपरत्वं गमलौ गमलः गमलं
गमलौ गमॄन् गम्ला गम्ले ङसिङसोश्च ऋतउदित्युत्वे संयोगांतलोपः गमुल् शकुल् इत्यादि इतिॡदंताः
इनाकामेनसहवर्त्ततइति सेः सयौ सयः स्मृतेः स्मृतयौ स्मृतयः इत्येदंताः गोतोणित् गोशब्दात्परंसर्वना
मस्थानंणित्कार्यकृत्स्यात् अचोञ्णिति गौः गावौ गावः औतोम्शसोः आओतइतिच्छेदः ओकाराद-
म्शसोरचिपरे आकार एकादेशः स्यात् शसासाहचर्यात्सुबेवाम्गृह्यते नेह अचिनवं गां गावौ गाः गवा ग
वे गोः इत्यादि ओतोणिदितिवाच्यं विहितविशेषणंच तेनसुद्यौः सुद्यावौ ओकारांताद्विहितंसर्वनाम
स्थानमितिव्याख्यानान्नेह हेभानो हेभानवः उः शंभुः स्मृतो येनसः स्मृतोः स्मृतावौ स्मृतावः स्मृतां स्मृता
वौ स्मृताः इत्योदंताः रायोहलि रैशब्दस्याकारोऽतादेशः स्याद्धलिविभक्तौ अचिआयादेशः राः रायौ रा

यः राया राभ्यामित्यादि इत्यैदंताः ग्लौः ग्लावौ ग्लावः ग्लावमित्यादि औतोम्शसोरितीहनप्रवर्त्तते ऐऔ
जिति सूत्रेण ओ दौतोः सावर्ण्याभावज्ञापनात् इत्यजंताः पुल्लिंगाः रमा औङ आपः आबंतादंगात्परस्यौ
ङः शीस्यात् औङित्यौकारविभक्तेः संज्ञा रमे रमाः संबुद्धौच आपएकारस्यात्संबुद्धौ एङ् ह्रस्वादितिसंबुद्धि
लोपः हे रमे हेरमेहेरमाः रमां रमे स्त्रीत्वान्नत्वाभावः रमाः आङिचापः आङि ओसिचपरे आबंतांगस्यैकारः स्या
त् रमया रमाभ्यां रमाभिः याडापः आपः परस्यङिद्वचनस्य याडागमः स्यात् वृद्धिरेचि रमायै सवर्णदीर्घः र-
मायाः रमयोः रमाणां रमायां रमयोः रमासु एवं दुर्गादयः सर्वनाम्नः स्याड्ढ्रस्वश्च आबंतात्सर्वनाम्नः प
रस्य ङितः स्याडागमः स्यादापश्च ह्रस्वः याटोऽपवादः सर्वस्यै सर्वस्याः २ एकादेशस्य पूर्वांतत्वेन ग्रहणादा
मि सर्वनाम्न इति सुट् सर्वासां सर्वस्यां सर्वासु एवं विश्वादय आबंताः विभाषा दिक्समासे बहुव्रीहौ
अत्र सर्वनामता वा स्यात् उत्तरपूर्वस्यै उत्तरपूर्वायै दिङ्मान्यंतराल इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणा
न्नेह योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै बहुव्रीहि ग्रहणं स्पष्टार्थं अंतरस्यै शालायै बाह्यायै इत्यर्थः
अपुरीत्युक्तेर्नेह अंतरायै नगर्यै विभाषा द्वितीया तृतीयाभ्यां आभ्यां परस्य ङितः स्याड् वा स्यादापश्च ह्रस्वः इ
दं सूत्रं त्यक्तुं शक्यं तीयस्य ङित्सूपसंख्यानात् द्वितीयस्यै द्वितीयायै द्वितीयस्याः द्वितीयायाः द्वितीयस्यां द्वि
तीयायां शेषं रमावत् एवं तृतीया अंबार्थनद्योर्ह्रस्वः हे अंब हे अक्क हे अल्ल असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न
हे अंबाडे हे अंबाले हे अंबिके जरा जरसौ शीभावात्परत्वाज्जरस् आमि नुटः परत्वाज्जरस् जरसामित्यादि प
क्षे रमावत् इह पूर्वविप्रतिषेधेन शीभावं सन्निपात परिभाषाया अनित्यत्वं चाश्रित्य जरसीति केचिदाहुस्त

न्निमूलं यद्यपि जरसादेशस्य स्थानिवद्भावेनाबंततामाश्रित्य औङ आपः आङि चापः याडापः ह्रस्वन-
द्यापः ङेराम् इति पंचापि विधयः प्राप्ताः एवं नस् निश् पृत्सु तथाप्यनल्विधावित्युक्तेर्न भवंति आआबितिप्र
श्लिष्याकाररूपस्यैवापः सर्वत्र ग्रहणात् एवं हल्ङ्याादिसूत्रेपि आआपूङीई इति प्रश्लेषादतिखट्वः
निष्कौशांबिः इत्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयं नचैवमप्यतिखट्वाये स्यात्र स्वाश्रयमाकारत्वं स्थानि
वद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यं आबंतं यदंगं ततः परस्य याड्विधानात् उपसर्जनस्त्रीप्रत्यये
तदादिनियमात् पद्दन्निति नासिकायाः नस् नसः नसा नोभ्यामित्यादि पक्षे स्फटिचरमावत् निशायाः
निश् निशः निशा व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः व्रश्चादीनां सप्तानां छशांतयोश्च ष
कारोंऽतादेशः स्याज्झलि पदांते च षस्य जश्त्वेन डः निड्भ्यां निड्भिः स्फपिडः सीति पक्षे धुट्त्वर्त्वे त-
स्यासिद्धत्वाच्चयो द्वितीया इति टत्तयोष्टुथोन नपदांताट्टोरिति ष्टुत्वं न निट्त्सु निट्सु षढोः कः सि
षस्य ढस्य च कः स्यात्सकारे परे इति तु न भवति जश्त्वं प्रत्यसिद्धत्वात् केचित्तु व्रश्चादिसूत्रे दादेर्धातोरि
तिसूत्राद्धातोरित्यनुवर्त्तयंति तन्मते जश्त्वेन जकारे निज्भ्यां निज्भिः श्चुत्वं निच्छु चोः कुरिति कुत्वं तु
न भवति जश्त्वस्यासिद्धत्वात् मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा पृतः पृता पृद्
भ्यामित्यादि पक्षे स्फटिचरमावत् गोपा विश्वपावत् मतिः प्रायेण हरिवत् स्त्रीत्वान्नत्वाभावः मतीः
नात्वं न मत्या ङिति ह्रस्वश्च इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिंगावीदूतौ ह्रस्वौ च इउवर्णौ
स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे आण्नद्याः मत्यै मतये मत्याः मतेः नदीत्वपक्षे औदितिडेरौत्वे प्राप्ते इ

दुदूभ्यां नदीसंज्ञकाभ्यामिदुदूभ्यां परस्यङेरामूस्यात् पक्षेअच्चघेः मत्यां मतौ एवंश्रुतिस्मृत्यादयः
त्रिचतुरोःस्त्रियांतिसृचतसृ स्त्रीलिंगयोरेतयोरेतावादेशौस्तोविभक्तौ परतः अचिरऋतः तिसृ
चतसृएतयोर्ऋकारस्यरेफादेशःस्यादचि गुणदीर्घोत्वानामपवादः तिस्रः२तिसृभिः तिसृभ्यः२
आमिनुमचिरेतिनुट् नतिसृचतसृ एतयोर्नामिदीर्घोनस्यात् तिसृणां तिसृषु स्त्रियामितित्रिचतुरोर्वि
शेषणान्नेह प्रियास्त्रयस्त्रीणिवायस्याः साप्रियत्रिरित्यादिमतिवत् आमिप्रियत्रयाणामितिविशेषः
प्रियास्तिस्रोयस्येतिविग्रहे प्रियतिसा प्रियतिस्रौप्रियतिस्रः प्रियतिस्रं इत्यादि प्रियास्तिस्रोयस्यतत्कुलं
प्रियत्रि स्वमोर्लुकालुप्तत्वेनप्रत्ययलक्षणाभावान्नतिस्रादेशः नलुमतेतिनिषेधस्यानित्यत्वात् पक्षेप्रियति
सृ रादेशात्पूर्वविप्रतिषेधेननुम् प्रियतिसृणी प्रियतिसृणि तृतीयादिषुवक्ष्यमाणपुंवद्भावविकल्पात्प
र्यायेणनुमृरभावौ प्रियतिस्रा प्रियतिसृणा इत्यादि द्वेरत्वेसत्याप् द्वे२ द्वाभ्यां३ द्वयोः२गौरी गौर्यौ गौर्यः न-
दीकार्यं हेगौरि गौर्यै इत्यादि एवंवाणीनद्यादयः प्रातिपदिकग्रहणेलिंगविशिष्टस्यापिग्रहणादनङ्णिद्वन्द्वा
वेचप्राप्ते विभक्तौलिंगविशिष्टाग्रहणं सखी सख्यौ सख्यः इत्यादिगौरीवत् अङ्यंतत्वान्नसुलोपः लक्ष्मीः
शेषंगौरीवत् एवंतरीतंत्र्यादयः स्त्री हेस्त्रि स्त्रियाः स्त्रीशब्दस्येयङ्स्यादजादौप्रत्ययेपरे स्त्रियौ-
स्त्रियः वाम्शसोः अमिशसिचपरेस्त्रियाइयङ्वास्यात् स्त्रियं स्त्रीं स्त्रियौ स्त्रियःस्त्रिया स्त्रियै स्त्रि
याः२स्त्रियोः२ परत्वान्नुट् स्त्रीणां स्त्रियां स्त्रीषु स्त्रियमतिक्रांतो ऽतिस्त्रिः अतिस्त्रियौ गुणनाभावो
त्वनु इभिः परत्वात्पुंसिबाध्यते क्लीबेनुमाचस्त्रीशब्दस्येयङित्यवधार्यतांजसिच अतिस्त्रयः हेअति

स्त्रे वाम्शसोः अतिस्त्रियं अतिस्त्रिं अतिस्त्रियः अतिस्त्रीन् अतिस्त्रिणा घेर्ङितिअतिस्त्रये अतिस्त्रेः २ अतिस्त्रियोः अ-
तिस्त्रीणां अच्चघेः अतिस्त्रौ ओस्यौकारेचनित्यंस्यादम्शसोस्तुविभाषया इयादेशोऽचिनान्यत्रस्त्रियाः पुं-
स्युपसर्जने क्लीबेतुनुम् अतिस्त्रि अतिस्त्रिणी अतिस्त्रीणि अतिस्त्रिणे ङे प्रभृतावजादौवक्ष्यमाणपुंवद्भा
वात्पक्षेप्राग्वद्रूपं अतिस्त्रये अतिस्त्रिणः अतिस्त्रेः २ अतिस्त्रिणोः अतिस्त्रियोः इत्यादि स्त्रियांतुप्रायेण
पुं वत् शसि अतिस्त्रीः अतिस्त्रिया ङिति ह्रस्वश्चेति ह्रस्वांतत्वप्रयुक्तोविकल्पः अस्त्रीतितुइयङुवङ्स्था
नाविस्त्यस्यैवपर्युदासः तत्संबंधस्यैवानुवृत्तेर्दीर्घस्यायंनिषेधोनतुह्रस्वस्य अतिस्त्रियै अतिस्त्रये अति
स्त्रियाः अतिस्त्रेः २ अतिस्त्रियां अतिस्त्रौ श्रीः श्रियौ श्रियः नेयङुवङ्स्थानावस्त्री इयङुवङोः स्थि
तिर्ययोस्तावीदूतौनदीसंज्ञौनस्तोनतुस्त्री हेश्रीः श्रियै श्रिये श्रियाः २ श्रियः वामि इयङुवङ्स्थानौस्त्र्या
ख्यौयूअमिवानदीसंज्ञौस्तोनतुस्त्री श्रीणां श्रियां श्रियि प्रधीशब्दस्यवृत्तिकारादीनांमतेलक्ष्मीवद्रूपं
पदान्तरंविनापिस्त्रियांवर्त्तमानत्वंनित्यस्त्रीत्वमितिस्वीकारात् लिंगांतरानभिधायकत्वं तदितिकैयटमते
तुपुंवद्रूपं प्रकृष्टाधीरितिविग्रहेलक्ष्मीवत् अमिशसिचप्रध्यंप्रध्यइतिविशेषः सुष्टुधीर्यस्याः सुष्टुध्याय
तीति वाविग्रहेवृत्तिकारमतेसुधीः श्रीवत् मतांतरेतुपुंवत् सुष्टुधीरितिविग्रहेतुश्रीवदेव ग्रामणीः पुंवत्
ग्रामनयनस्योत्सर्गतः पुंधर्मतयापदांतरंविनास्त्रियामप्रवृत्तेः एवंखलपवनादेरपिपुंधर्मत्वमौत्सर्गिकंबो
ध्यं धेनुर्मतिवत् स्त्रियांच स्त्रीवाचीक्रोष्टुशब्दस्तृजंतवद्रूपंलभते ऋन्नेभ्योङीप् ऋदंतेभ्यो नांतेभ्यश्च
स्त्रियांङीप्स्यात् क्रोष्ट्री क्रोष्ट्यौ क्रोष्ट्र्यः वधूर्गौरीवत् भ्रूः श्रीवत् हेसुभ्रूः कथंतर्हिहापितः क्वासि हेसुभ्रुइ-

तिभ्रुवः प्रमादएवायमिति बहवः खलपूः पुंवत् पुनर्भूः दृन्करेतियणाउवङोबाधनान्नेयङुवङिति निषेधोन
हेपुनर्भु पुनर्भ्वं पुनर्भ्वौ पुनर्भ्वः एकाजुत्तरपदेणः एकाजुत्तरपदंयस्यतस्मिन्समासेपूर्वपदस्थान्निमि
त्तात्परस्य प्रातिपदिकांतनुम्विभक्तिस्थस्य नस्यनित्यंणत्वंस्यात् आरंभसामर्थ्यान्नित्यत्वेसिद्धेपुनर्णग्रह
णंस्पष्टार्थं यणंबाधित्वापरत्वान्नुट् पुनर्भूणां वर्षाभूः भेकजातोनित्यस्त्रीत्वाभावात् हेवर्षाभूः कैयटमते म
तांतरेतु हेवर्षाभु पुनर्नवायांतु हेवर्षाभु भेक्यांपुनर्नवायांस्त्रीवर्षाभूर्दर्दुरे पुमानितियादवः वर्षाभ्वश्च व-
र्षाभ्वौ वर्षाभ्वः स्वयंभूः पुंवत् नषट्स्वस्त्रादिभ्यः षट्संज्ञकेभ्यः स्वस्त्रादिभ्यश्चङीपूटापौनस्तः स्वसा
तिस्रश्चतस्रश्चननांदादुहितातथा याताआताते तिसप्तैते स्वस्त्रादयउदाहृताः अप्तृन्नितिदीर्घः स्वसा स्वसा
रौ स्वसारः माता पितृवत् शसिमातृः द्यौर्गौवत् राः पुंवत् नौर्ग्लौवत् इत्यजंताः स्त्रीलिंगाः अतोऽम् अ
तोऽगात्क्लीबात्स्वमोरम्स्यात् अमिपूर्वः ज्ञानं एङ्ह्रस्वादितिहल्मात्रलोपः हेज्ञान नपुंसकाच्च क्ली
बात्परस्यौङः शीस्यात् भसंज्ञायां यस्येतिच भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धितेचपरे इत्यकार
लोपे प्राप्ते औङःश्यांप्रतिषेधोवाच्यः ज्ञाने जश्शसोः शिः क्लीबादनयोः शिः स्यात् शिसर्वनाम-
स्थानं शिइत्येतदुक्तसंज्ञंस्यात् नपुंसकस्यझलचः झलंतस्याजंतस्यचक्लीबस्यनुमागमः स्यात्सर्वना
मस्थानेपरे उपधादीर्घः ज्ञानानि पुनस्तद्वच्छेषंरामवत् एवंधनवनादयः अद्ड्डतरादिभ्यः पंचभ्यः एभ्यः
क्लीबेभ्यः स्वमोरद्डादेशः स्यात् टेः डितिपरेभस्यटेर्लोपः स्यात् वावसाने कतरत् कतरद् कतरे कतरा-
णि भस्येतिकिं पंचमः टेर्लुप्तत्वात्प्रथमयोरिति पूर्वसवर्णदीर्घः एङ्ह्रस्वादितिसंबुद्धिलोपश्चनभवति हे

कतरत् पुनस्तद्वच्छेषंपुंवत् कतमत् इतरत् अन्यत् अन्यतरत् अन्यतमस्यतु अन्यतममित्येव एकतरा
त्प्रतिषेधो वक्तव्यः एकतरं सोरमादेशे कृते सन्निपातपरिभाषयानजरस् अजरं अजरसी अजरे परत्वा
ज्जरसि कृते झलंतत्वान्नुम् सांतमहतः संयोगस्य सांतसंयोगस्य महतश्चयो नकारस्तस्योपधायादीर्घः
स्यादसंबुद्धौ सर्वनामस्थाने परे अजरांसि अमिलुकोऽपवादमम्भावंबाधित्वा परत्वाज्जरस् ततः सन्नि
पातपरिभाषयानलुक् अजरसं अजरं अजरसी अजरे अजरांसि अजराणि शेषंपुंवत् पद्दन्निति त्हृदयो
दकास्यानां हृदुदन्नासन्नादेशाः स्युः शसादौवा हृंदि हृदा हृद्भ्या मित्यादि उदानि उद्ना उदभ्यामित्यादि
आसानि आस्ना आसभ्यामित्यादि मांसि मांसा माम्भ्यामित्यादि वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थं
अतएव भाष्ये मांस्पचन्या उखाया इत्युदाहृतं अयस्मयादित्वेन भत्वात्संयोगांतलोपोन पद्दन्नित्यत्रहि
छंदसीत्यनुवर्त्तितं वृत्तौ तथाप्यपो भिरित्यत्र मास श्छंदसीति वार्त्तिके छंदोग्रहण सामर्थ्याल्लोकेऽपिक
चिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यं ह्रस्वोनपुंसके प्रातिपदिकस्य
क्लीबे प्रातिपदिकस्याजंतस्य ह्रस्वः स्यात् श्रीपं श्रीपे शेषंज्ञानवत् श्रीपाय अत्रसन्निपातपरिभाषया-
आतोधातोरित्यालोपोन स्वमोर्नपुंसकात् क्लीबादंगात्स्वमोर्लुक् स्यात् वारि इकोचिविभक्तौ इगंत
स्यक्लीबस्य नुमागमः स्यादचिविभक्तौ वारिणी वारीणि नलुमतेति निषेधस्यानित्यत्वात्पक्षे संबुद्धिनि
मित्तोगुणः हेवारे हेवारि आङोनास्त्रियां वारिणा घेर्ङितीति गुणे प्राप्ते वृद्ध्यौत्वतृज्वद्भावगुणेभ्योनु
म्पूर्वविप्रतिषेधेन वारिणे वारिणः २ वारिणोः नुमचिरेति नुट् नामीनिदीर्घत्वं वारीणां वारिणि हलादौह

रिवत् तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगंतं क्लीबं पुंवद्वास्याट्टादा
वचि अनादये अनादिने इत्यादिशेषं वारिवत् पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने अत्र न पुंवत् प्रवृत्तिनिमित्त
भेदात् अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः एषामनङ् स्याट्टादावचि सचोदात्तः अल्लोपोनः दध्ना दध्ने दध्नः
दध्नोः२ विभाषाङिश्योः दध्नि दधनि शेषं वारिवत् एवमस्थिसक्थ्यक्षि तदंतस्याप्यनङ् अतिदध्ना सुधि सु
धिनी सुधीनि हे सुधे हे सुधि सुधिया सुधिना प्रध्या प्रधिना मधु मधुनी मधूनि हे मधो हे मधु एवमंबुवा
दयः सानुशब्दस्य स्नुर्वा स्नूनि सानूनि प्रियक्रोष्टु प्रियक्रोष्टुनी प्रियक्रोष्टूनि तृज्वद्भावात्पूर्वविप्रतिषेधेन
नुम् प्रियक्रोष्टूनि टादौ पुंवत्पक्षे प्रियक्रोष्ट्रा प्रियक्रोष्टुना प्रियक्रोष्ट्रे प्रियक्रोष्टवे अन्यत्र तृज्वद्भावात्पूर्ववि
प्रतिषेधेन नुमेव प्रियक्रोष्टुने नुमचिरेति नुट् प्रियक्रोष्टूनां सुलु सुलुनी सुलूनि सुल्वा सुलुना धातृ धातृ
णी धातृणि हे धातः हे धातृ धात्रा धातृणा एवं ज्ञातृ कर्त्रादयः एच इग्घ्रस्वादेशे आदिश्य मानेषु ह्रस्वे
षु मध्ये एच इगेव स्यात् प्रद्यु प्रद्युनी प्रद्यूनि प्रद्युनेत्यादि अत्र न पुंवत् यदिगंतं प्रद्यु इति तस्य भाषितपुंस्क
त्वाभावात् एवमग्रेऽपि प्रि प्रिरिणी प्ररीणि प्रिरिणा एकदेशविकृतस्यानन्यत्वाद्रायो हलीत्यात्वं प्रराभ्यां
प्रराभिः नुमचिरेति नुट्यात्वे प्रराणामिति माधवः वस्तुतस्तु सन्निपातपरिभाषया नुट्या त्वं न नामीति दीर्घ
स्त्वारंभसामर्थ्यात्परिभाषां बाधत इत्युक्तं प्ररीणां सुनु सुनुनी सुनूनि सुनुनेत्यादि इत्यजंता नपुंस
कलिंगाः हो ढः हस्य ढः स्याज्झलि पदांते च हल्ङ्याब्भ्य इति सुलोपः पदांतत्वाद्धस्य ढः जश्त्वचर्त्वे लिट्
लिड् लिहौ लिहः लिहं लिहौ लिहः लिहा लिड्भ्यामित्यादि लिट्त्सु लिट्सु दादेर्धातोर्घः उपदेशे दादे

धातोर्हस्यघः स्याज्झलिपदांतेच उपदेशेकिं अधोगित्यत्रयथास्यात् दामलिहमात्मनः इच्छतिदामलिह्य
ति ततःक्विप्दामलिट् अत्रमाभूत् एकाचोबशोभष्झषंतस्यस्ध्वोः धातोरवयवोयएकाच्झषंतस्तदव
यवस्यबशः स्थानेभष्स्यात्सकारेध्वशब्देपदांतेच एकाचोधातोरितिसामानाधिकरण्येनान्वयेतुइहनस्या
त् गर्दभमाचष्टेगर्दभयति ततःक्विप् णिलोपः गर्द्धप् झलीतिनिवृत्तं स्ध्वोर्ग्रहणसामर्थ्यात् तेनेहन दुग्धं
दोग्धा व्यपदेशिवद्भावेनधात्ववयवत्वाद्भष्भावः जश्त्वचर्त्वे धुक् धुग् दुहौ दुहः षत्वचर्त्वे धक्ष वाद्दु
हमुह ष्णुह ष्णिहां एषां हस्यवाघः स्याज्झलिपदांतेच ध्रक् ध्रग् ध्रट् ध्रड् द्रुहौ द्रुहः ध्रग्भ्यां ध्रड्भ्यां
ध्रक्ष ध्रट्सु ध्रट्त्सु एवंमुहष्णुहष्णिहां इग्यणः संप्रसारणं यणःस्थानेप्रयुज्यमानोयइक्ससंप्र
सारणसंज्ञःस्यात् वाहऊठ् भस्यवाहः संप्रसारणमूठ्स्यात् संप्रसारणाच्च संप्रसारणादचिपूर्वरूप
मेकादेशःस्यात् एत्येधत्यूठ्सु विश्वौहः विश्वौहेत्यादि छंदस्येवण्विरितिपक्षेणिजंताद्विच् चतुरनडुहोरा
मुदात्तः अनयोराम्स्यात्सर्वनामस्थानेपरेसचोदात्तः सावनडुहः अस्यनुम्स्यात्सौपरे आदित्यधिकारादवर्णा
त्परो ऽयंनुम् अतोविशेषविहितेनापिनुमाआम्नबाध्यते अमाचनुम्नबाध्यते सोर्लोपः नुम्विधिसामर्थ्या
द्वसुस्रंस्विति दत्वंन संयोगांतलोपस्यासिद्धत्वान्नलोपोन अनड्वान् अम्संबुद्धौ चतुरनडुहोरम्स्यात्संबु
द्धौ आमोपवादः हे अनड्वन् अनड्वाहौ अनड्वाहः अनडुहः अनडुहा वसुस्रंसुध्वंस्वनडुहांदः सांतव-
स्वंतस्यस्रंसादेश्चदः स्यात् पदांते अनडुद्भ्यामित्यादि सांतेतिकिं विद्वान् पदांतेकिं स्रस्तं ध्वस्तं सहेः सा
डः सः साड्रूपस्यसहेः सस्यमूर्धन्यादेशःस्यात् तुराषाट् तुराषाड् तुरासाहौ तुरासाहः तुराषाड्भ्यामित्या

दि तुरं सहत इत्यर्थे छंदसि सह इतिण्विः लोकेतु साहयतेः क्विप् अन्येषामपीतिपूर्वपदस्य दीर्घः दिवऔत्
दिविति प्रातिपदिकस्यौत्स्यात् सौपरे अल्विधित्वेनस्थानिवत्वाभावाद्धल्ङ्यादिलोपोन सुद्यौः सुदिवौ सु
दिवः सुदिवं सुदिवौ दिवउत् दिवों ऽतादेशउकारः स्यात्पदांते सुद्युभ्यां सुद्युभिः चत्वारः चतुरः चतुर्भिः
चतुर्भ्यः षट्चतुर्भ्यश्च षट्संज्ञकेभ्यश्चतुरश्च परस्यामोनुडागमः स्यात् णत्वं द्वित्वं चतुर्ण्णां रोःसुपि स
प्तमी बहुवचनेरोरेवविसर्जनीयोनान्यरेफस्य षत्वं षस्यद्वित्वे प्राप्ते शरोऽचि अचिपरेशरोनद्वे स्तः चतुर्षु
प्रियचत्वाः हेप्रियचत्वः प्रियचत्वारौ गौणत्वेतु नुट्नेष्यते प्रियचतुरां प्राधान्येतु स्यादेव परमचतुर्णां कम
लंकमलांवा आचक्षाणः कमल् कमलौ कमलः षत्वं कमलषु मोनोधातोः धातोर्मस्यनः स्यात्पदांते नत्वस्या
सिद्धत्वान्नलोपोन प्रशाम्यतीति प्रशान् प्रशामौ प्रशामः प्रशान्भ्यामित्यादि किमः कः किमःकः स्याद्विभ
क्तौ अकच्सहितस्याप्ययमादेशः कःकौके इत्यादि सर्ववत् इदमोमः इदमोमःस्यात्सौपरे त्यदाद्यत्वापवादः
इदोऽय्पुंसि इदमइदः स्थानेअय्स्यात्सौ पुंसि सोर्लोपः अयं त्यदाद्यत्वं पररूपत्वं दश्च इदमोदस्यमः
स्याद्विभक्तौ इमौ इमे त्यदादेः संबोधनंनास्तीत्युत्सर्गः अनाप्यकः अककारस्य इदम इदोऽनूस्यादापिवि
भक्तौ आबितिटाइत्यारभ्यसुपः पकारेण प्रत्याहारः अनेन हलिलोपः अककारस्यइदमइदोलोपः स्यादा
पिहलादौ नानर्थकेऽलोंऽत्यविधिरनभ्यासविकारे आद्यंतवदेकस्मिन् एकस्मिन्क्रियमाणंकार्यमादाविवांत
इवस्यात् आभ्यां नेदमदसोरकोः अककारयोरिदमदसोर्भिसऐस्नस्यात् एत्वं एभिः अत्वं नित्यत्वात्ङेस्मैप
श्चाद्धलिलोपः अस्मै आभ्यां एभ्यः अस्मात् अस्य अनयोः एषां अस्मिन् अनयोः एषु ककारयोगेतु अयकं इ

मकौ इमके इमकेन इमकाभ्यां इमकैः इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ अन्वादेशविषयस्येदमोऽनुदात्तोऽशादेशः स्यात्तृतीयादौ अश्वचनं साकच्कार्थं द्वितीयाटौस्स्वेनः द्वितीयायांटौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे किंचित्कार्यं विधातुमुपात्तस्य कार्यांतरं विधातुं पुनरुपादानमन्वादेशः यथानेन व्याकरणमधीतं एनं छंदोऽध्यापयेति अनयोः पवित्रं कुलं एनयोः प्रभूतं स्वमिति एनं एनौ एनान् एनेन एनयोः २ गणयतेर्क्विप् ऊगण् ऊगणौ ऊगणः ऊगणट्स ऊगणठ्स ऊगण्सक्विप् अनुनासिकस्यक्विझलोः क्ङितीति दीर्घः ऊगाण् ऊगाणौ ऊगाणः ऊगाणट्स ऊगाणठ्स ऊगाण्स परत्वादुपधादीर्घः हल्ङ्यादिलोपः ततो नलोपः राजा नङिसंबुद्ध्योः नस्य लोपो नस्यात् ङौ संबुद्धौ च हे राजन् ङौ तु छंदस्य उदाहरणं ऊपां ऊलुगिति ङेर्लुक् निषेधसामर्थ्यात्प्रत्ययलक्षणं परमे व्योमन् ङावुत्तरपदे प्रतिषेधो वक्तव्यः चर्मणि तिला यस्य चर्मतिलः ब्रह्मणि निष्ठा यस्य ब्रह्मनिष्ठः राजानौ राजानः राजानं राजानौ अल्लोपोनः श्रुतं न चाल्लोपः स्थानिवत् पूर्वत्रासिद्धे नेति तन्निषेधात् नापि बहिरंगतयासिद्धः यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्रुत्वस्यासिद्धतयांतरंगाभावेन परिभाषाया अप्रवृत्तेः जञोर्ज्ञः राज्ञः राज्ञा नलोपः ऊ स्वरसंज्ञातुग्विधिषु कृति ऊब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ इत्यसिद्धत्वादात्मेत्वमेत्वं च न राजभिः राज्ञे राजभ्यां राजभ्यः राज्ञः २ राज्ञोः २ राज्ञां राज्ञि राजनि प्रतिदीव्यतीति प्रतिदिवा प्रतिदिवानौ प्रतिदिवानः अस्य भविषये अल्लोपे कृते हलि च रेफवांतस्य धातोरुपधाया इको दीर्घः स्याद्धलि न चाल्लोपस्य स्थानिवत्वं दीर्घविधौ तन्निषेधात् बहिरंगपरिभाषा तूक्तन्यायेन न प्रवर्त्तते प्रति

दीघ्नः प्रतिदीघ्नेत्यादि यज्वा यज्वानौ यज्वानः नसंयोगाद्वमंतात् वकारमकारांतसंयोगात्परस्यानोऽकारस्य लोपोनस्यात् यज्वनः यज्वना यज्वभ्यामित्यादिब्रह्मणः ब्रह्मणा ब्रह्मभ्यामित्यादि इन्हन्पूषार्यम्णांशौ एषां शावेवोपधायादीर्घोनान्यत्र इतिनिषेधेप्राप्ते सौच इन्नादीनामुपधायादीर्घः स्यादसंबुद्धौ सौपरे वृत्रहा हेवृत्रहन् एकाजुत्तरपदेतिणत्वं वृत्रहणौ वृत्रहणः होहंतेर्ञ्णिन्नेषु ञितिणितिचप्रत्ययेपरेनकारेचपरेहंतेर्हस्यकुत्वंस्यात् हंतेः उपसर्गस्थान्निमित्तात्परस्यहंतेर्नस्यणत्वंस्यात् प्रहण्यात् अत्पूर्वस्य हंतेरत्पूर्वस्यैवनस्यणत्वंनान्यस्य प्रघ्नंति योगविभागसामर्थ्यादनंतरस्यविधिर्वाप्रतिषेधोवेतिन्यायंबाधित्वाएकाजुत्तरपदेइतिणत्वमपिनिवर्त्तते नकारेपरेकुत्वविधिसामर्थ्यादल्लोपोनस्थानिवत् वृत्रघ्नः वृत्रघ्नेत्यादि यत्तुवृत्रघ्नइत्यादौवैकल्पिकंणत्वंमाधवेनोक्तं तद्भाष्यवार्त्तिकविरुद्धं एवंशार्ङ्गिन्यशस्विन् अर्यमन् पूषन् यशस्विन्नितिविग्रहेत्यपीइनोऽनर्थकत्वेऽपिइन्हन्नित्यत्रग्रहणंभवत्येव अनिनस्मन्ग्रहणान्यर्थवताचानर्थकेनचतदंतविधिंप्रयोजयंतीतिवचनात् अर्यम्णि अर्यमणि पूष्णि पूषणि मघवाबहुलं मघवन्शब्दस्यवातॄइत्यंतादेशः स्यात् ऋइत् उगिदचांसर्वनामस्थानेधातोः अधातोरुगितोनलोपिनोऽचतेश्चनुमागमः स्यात्सर्वनामस्थानेपरे उपधादीर्घः मघवान् इहदीर्घेकर्त्तव्येसंयोगांतलोपस्यासिद्धत्वंन बहुलग्रहणात् तथाचश्वन्नुक्षन्निर्तिनिपातनान्मघशब्दान्मतुपाचभाषायामपिशब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रंप्रत्याख्यातमाकरे हविर्जक्षितिनिःशंको मखेषुमघवानसावितिभट्टिः मघवंतौ मघवंतः हेमघवन् मघवंतं मघवंतौ मघवतः मघवता मघवद्भ्यामित्यादि तृत्वाभावे मघवा छंदसीवनिपौचेतिवनिबंतंमध्योदात्तंछंदस्येव अं

तोदात्तं तु लोके ऽपीतिविशेषः मघवानौ मघवानः सुटि राजवत् श्वयुवमघोनामतद्धिते अन्नंतानां भसंज्ञका
नामेषामतद्धिते परे संप्रसारणं स्यात् संप्रसारणाच्च आद्गुणः मघोनः अन्नंतानां किं मघवतः मघवता स्त्रि
यां तु मघवती अतद्धिते किं माघवनं मघोना मघवद्भ्यामित्यादि शुनः शुना श्वभ्यामित्यादि युवन्शब्दे व-
स्योत्वे कृते नसंप्रसारणे संप्रसारणं संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् इति यकारस्य नेत्वं अ
तएव ज्ञापकादंत्यस्य यणः पूर्वं संप्रसारणं यूनः यूना युवभ्यामित्यादि अर्वा हे अर्वन् अर्वणस्त्रसावनञः नञा
रहितस्यार्वन्नित्यस्यांगस्य तृ इत्यंतादेशः स्यान्नतु सौ उगित्वान्नुम् अर्वंतौ अर्वंतः अर्वंतं अर्वंतौ अर्वतः अर्वता
अर्वद्भ्यामित्यादि अनञः किं अनर्वा अनर्वाणौ शेषं यज्ववत् पथिमथ्यृभुक्षामात् एषामाकारों ऽतादेशः
स्यात्सौ परे आ आदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः इतो ऽत्सर्वनामस्थाने पथ्या
देरिकारस्याकारः स्यात् सर्वनामस्थाने परे थोन्थः पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे पंथाः
पंथानौ भस्य टेर्लोपः भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् पथः पथा पथिभ्यामित्यादि एवं मंथाः ऋभुक्षाः
स्त्रियां नांतलक्षणो ङीपि भत्वाट्टिलोपः सुपथी सुमथी नगरी अनृभुक्षी सेना आत्वं नपुंसके न भवति नलु
मतेति प्रत्ययलक्षणनिषेधात् सुपथि वनं संबुद्धौ नपुंसकानां नलोपो वा वक्तव्यः हे सुपथिन् हे सुपथि
नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न द्विवचने भत्वाट्टिलोपः सुपथी शौ सर्वनामस्थान
त्वात्सुपंथानि पुनरपि सुपथि सुपथी सुपंथानि सुपथा सुपथे ष्णांता षट् षांता नांता च संख्या षट्संज्ञा
स्यात् षड्भ्यो लुक् पंच षट् २ संख्या किं विप्रुषः पामानः शतानि सहस्राणीत्यत्र तु सन्निपातपरिभाषया न लुक्

सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तद्विघातकत्वात् पंचभिः पंचभ्यः २ षट्चतुर्भ्यश्चेति नुट् नोपधायाः
नांतस्योपधाया दीर्घः स्यान्नामि नलोपः पंचानां पंचसु तदंतविधिः परम पंच परमपंचानां गौणत्वे तु नलुङ्नुटौ
प्रियपंचानौ प्रियपंचानः प्रियपंचानां एवं सप्तन् नवन् दशन् इत्यादयः अष्टन आ विभक्तौ अष्टन आत्वं स्याद्ध
लादौ विभक्तौ अष्टाभ्य औश् कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् अष्टभ्य इति वक्तव्ये कृतात्वनिर्दे
शो जश्शसोर्विषये आत्वं ज्ञापयति वैकल्पिकं चेदमष्टन आत्वं अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणात् ज्ञापका
त् अष्टौ अष्टौ अष्टाभिः अष्टभ्यः अष्टानां अष्टासु परमाष्टौ आत्वाभावे अष्ट अष्टेत्यादि पंचवत् गौणत्वे-
त्वात्वाभावे राजवत् शसि प्रियाष्टनः इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्नष्टुत्वं कार्यकालपक्षे बहिरं
गस्याल्लोपस्यासिद्धत्वाद्वा प्रियाष्टनेत्यादि जश्शसोरनुमीयमानमात्वं प्राधान्य एव न तु गौणतायां तेन प्रि
याष्टनो हलादावेव वैकल्पिकमात्वं प्रियाष्टाभ्यां ३ प्रियाष्टाभिः प्रियाष्टाभ्यः २ प्रियाष्टासु प्रियाष्टनो रा
जवत् सर्वं हाहावच्चापरं हलि भष्भावः जस्त्वं चर्त्वं भुत् भुद् बुधौ बुधः ऋत्विक् दधृक् स्रग्दिग् उष्णिगंचुयु
जिक्रुञ्चां च एभ्यः क्विन् स्यात् अलाक्षणिकमपि किंचित्कार्यं निपातनाल्लभ्यते निरुपपदात्कृजेः क्विन् क
नावितौ कृदतिङ् सन्निहिते धात्वधिकारे तिङ् भिन्नः प्रत्ययः कृत्संज्ञः स्यात् वेरपृक्तस्य अपृक्तस्य वस्य-
लोपः स्यात् कृत्तद्धितेति प्रातिपदिकत्वात् स्वादयः युजेरसमासे युजेः सर्वनामस्थाने नुम् स्यादसमासे सुलो
पः संयोगांतस्य लोपः क्विन्प्रत्ययस्य कुः क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽतादेशः स्यात् पदांते नस्य कुत्वेना
नुनासिको ङकारः युङ् नश्चापदांते ति नुमोऽनुस्वारः परसवर्णः तस्यासिद्धत्वाच्चोः कुरिति कुत्वं न भवति

युञ्जौ युञ्जः युञ्जं युञ्जौ युजः युजेत्यादि असमासेकिं चोःकुः चवर्गस्यकवर्गःस्याज्झलिपदांतेच
इतिकुत्वं क्विन्प्रत्ययस्येतिकुत्वस्यासिद्धत्वात् सुयुक् सुयुग् सुयुजौ सुयुजः युजेरितिधातुपाठपठितेकार
विशिष्टस्यानुकरणं नत्विकानिर्देशः तेनेहन युज्यतेसमाधत्तइतियुक् युजसमाधौदैवादिकआत्मनेपदी सं
योगांतस्यलोपःखन् खञ्जौ खञ्जः इत्यादि व्रश्चेतिषत्वं जश्त्वचर्त्वे राट् राड् राजौ राजः राट्सु राट
त्सु एवंविभ्राट् देवेट् देवेजौ विश्वसृट् विश्वसृजौ इहसृजियज्योः कुत्वंनेतिक्लीबेवक्ष्यते परिमृट् षत्वविधौ
राजिसाहचर्यात् टुभ्राजृदीप्तावितिफणादिरेवगृह्यते यस्तुएजृभ्राजृदीप्तावितितस्यकुत्वमेव विभ्राक् विभ्रा
ग्भ्यामित्यादि परौव्रजेःषःपदांते परावुपपदेव्रजेःक्विप्स्यात्दीर्घश्च पदांतविषयेषत्वंच परित्यज्यसर्वंव्रज
तीतिपरिव्राट् परिव्राजौ परिव्राजः विश्वस्यवसुराटोः विश्वशब्दस्यदीर्घोंतादेशः स्याद्वसौराट्शब्देचपरे वि
श्वंवसुर्यस्यसःविश्वावसुः राडितिपदांतोपलक्षणार्थं चर्त्वमविवक्षितं विश्वाराट् विश्वाराड् विश्वराजौ वि
श्वराजः विश्वाराड्भ्यामित्यादि स्कोःसंयोगाद्योरंतेच पदांतेझलिचपरेयःसंयोगस्तदाद्योः सकारकका
रयोर्लोपःस्यात् भृट् भृड् सस्यश्चुत्वेनशः तस्यजश्त्वेनजः भृज्जौ भृज्जः ऋत्विगित्यादिनाऋतावुपपदेय
जेःक्विन् क्विन्नंतत्वात्कुत्वं ऋत्विक् ऋत्विजौ ऋत्विजः रात्सस्येतिनियमान्नसंयोगांतलोपः चोःकुः ऊर्क् ऊ
र्ग् ऊर्जौ ऊर्जः त्यदाद्यत्वंपररूपत्वं तदोःसःसावनंत्ययोः त्यदादीनांतकारदकारयोरनंत्ययोःसःस्यात्सौ
परे स्यः त्यौ त्ये सः तौ ते परमसः परमतौ परमते द्व्यपर्यंतानामित्येव नेह त्वं नचतकारोच्चारणसामर्थ्यान्नेति
वाच्यं अतित्वमितिगौणेचरितार्थत्वात् संज्ञायांगौणत्वेचात्वसत्वेनस्यातां त्यद् त्यदौ त्यदः अतित्यद् अतित्यद्

अतित्यदौ अतित्यदः यः यौ ये एषः एतौ एते अन्वादेशेतु एनं एनौ एनान् एनेन एनयोः ङे प्रथमयोरम् यु
ष्मदस्मद्भ्यां परस्य ङे इत्यस्य प्रथमाद्वितीययोश्च अमादेशः स्यात् मपर्यंतस्येत्यधिकृत्य त्वाहौ सौ युष्मदस्मदो
र्मपर्यंतस्य त्व अह एतावादेशौस्तः सौ परे शेषे लोपः आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरंत्यस्य
लोपः स्यात् अतोगुणे अमिपूर्वः त्वं अहं ननु त्वं स्त्री अहं स्त्री त्यत्र त्वअम् अहअम् इतिस्थिते अमिपूर्वत्वं
परमपि बाधित्वांतरंगत्वाट्टाप्प्राप्नोति सत्यं अलिंगे युष्मदस्मदी तेन स्त्रीत्वाभावान्नटाप् यद्वा शेषे इतिसप्त
मीस्थानिनोऽधिकरणत्वविवक्षया तेन मपर्यंताच्छेषस्य अच्छब्दस्य लोपः सत्वपरोऽप्यंतरंगे अतोगुणे कृते प्र
वर्त्तते अदंतत्वाभावान्नटाप् परमत्वं अतित्वं परमाहं अत्यहं युवावौ द्विवचने द्वयोरुक्तौ युष्मदस्मदोर्मपर्यंत
स्य युवावौ स्तो विभक्तौ प्रथमयाश्च द्विवचने भाषायां इह युष्मदस्मदो राकारोऽतादेशः स्यात् औङी त्येव
कृते भाषायां किं युवं रूपाणि युवां आवां मपर्यंतस्य किं साकच्कस्य माभूत् युवकां आवकां त्वयामयेत्य
त्र त्व्याम्येति माभूत् युवकाभ्यामावकाभ्यामिति चनसिध्येत् यूयवयौ जसि स्पष्टं यूयं वयं परमयूयं पर-
मवयं अतियूयं अतिवयं इह शेषे लोपोऽस्त्यलोप इति पक्षे जसः शी प्राप्तः अंगकार्ये कृते पुनर्नांगकार्यमिति
नभवति ङे प्रथमयोरित्यत्र मकारांतरं प्रश्लिष्य अम् मांत एवावशिष्यते नतु विक्रियत इति व्याख्यानाद्वा त्व
मावेकवचने एकस्योक्तौ युष्मदस्मदोर्मपर्यंतस्य त्वमौ स्तः द्वितीयायां च युष्मदस्मदो राकारः स्यात् त्वां मां
युवां आवां शसोन नेत्यविभक्तिकं पदं युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात् अमोपवादः आदेः परस्य
संयोगांतस्य लोपः युष्मान् अस्मान् योऽचि अनयोर्यकारादेशः स्यादनादेशेऽजादौ विभक्तौ परे त्वया मया

युष्मदस्मदोरनादेशे अनयोराकारः स्यादनादेशे हलादौ प्रत्यये परे युवाभ्यां आवाभ्यां युष्माभिः अस्माभिः
तुभ्यमह्यौ ङयि अनयोर्मपर्यंतस्य तुभ्यमह्यौ स्तो ङयि अमादेशः शेषे लोपः तुभ्यं मह्यं परमतुभ्यं परमम
ह्यं अतितुभ्यं अतिमह्यं युवाभ्यां आवाभ्यां भ्यसोभ्य म् भ्यम् अभ्यम् वा आदेशः स्यात् आद्यः शेषे लो
पस्यांत्यलोपत्व एव तत्रांगवृत्त परिभाषया एत्वं न अभ्यम् तु पक्षद्वयेपि साधुः युष्मभ्यं अस्मभ्यं एकवच
नस्यत् आभ्यां पंचम्येकवचनस्य अत् स्यात् त्वत् मत् ङसेश्चेति रूकवचं युवाभ्यां आवाभ्यां पंचम्या अत्
आभ्यां पंचम्याभ्यसोत् स्यात् युष्मत् अस्मत् तवममौ ङसि अनयोर्मपर्यंतस्य तवममौ स्तो ङसि युष्मदस्म
द्भ्यां ङसो ऽश् स्यष्ट तव मम युवयोः आवयोः साम आकं आभ्यां परस्य साम आकं स्यात् भाविनः सु-
टो निवृत्त्यर्थं सस्रुट्कनिर्देशः युष्माकं अस्माकं त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु समस्यमाने-
द्व्येकत्ववाचिनी युष्मदस्मदी समासार्थो ऽन्यसंख्यश्चेत्त्तो युवावौ त्वमावपि १ सुजस् ङे ङः सुपरत आदे
शाः स्युः सदैवते त्वाहौ यूय वयौ तुभ्यमह्यौ तवममावपि २ एते परत्वाद्बाधंते युवावौ विषये स्वके त्वमावपि प्रबाधं
ते पूर्वविप्रतिषेधतः ३ द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ४
त्वां मां वा ऽतिक्रांत इति विग्रहे अतित्वं अत्यहं अतित्वां अतिमां अतियूयं अतिवयं अतित्वां २ अतिमां २ अति
त्वान् अतिमान् अतित्वया अतिमया अतित्वाभ्यां ३ अतिमाभ्यां ३ अतित्वाभिः अतिमाभिः अतितुभ्यं अ
तिमह्यं अतित्वभ्यं अतिमभ्यं अतित्वत् अतिमत् भ्यामि प्राग्वत् भ्यसि ङसि वत् अतितव अतिमम अतित्वयोः २ अ
तिमयोः २ अतित्वाकं अतिमाकं अतित्वयि अतिमयि अतित्वासु अतिमासु युवां आवां वा अतिक्रांत इति वि

ग्रहे स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् औ अम् औट् शस् अतियुवां ३ अत्यावां अतियुवान् अत्यावान् अतियुवया अत्या
वया अतियुवाभ्यां ३ अत्यावाभ्यां ३ अतियुवाभिः अत्यावाभिः भ्यसि अतियुवभ्यं अत्यावभ्यं ङसिभ्यसोः
अतियुवत् २ अत्यावत् ओसि अतियुवयोः २ अत्यावयोः २ अतियुवाकं अत्यावाकं अतियुवयि अत्यावयि अतियु
वासु अत्यावासु युष्मानस्मान्वेत्यत्रापि स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् औ अमौट्शसु अतियुष्मां ३ अत्यस्मां ३ अतियु
ष्मान् अत्यस्मान् अतियुष्मया अत्यस्मया अतियुष्माभ्यां ३ अत्यस्माभ्यां ३ अतियुष्माभिः ३ अत्यस्माभिः भ्य
सि अतियुष्मभ्यं अत्यस्मभ्यं ङसिभ्यसोः अतियुष्मत् अत्यस्मत् ओसि अतियुष्मयोः अत्यस्मयोः २ अ-
तियुष्माकं अत्यस्माकं अतियुष्मयि अत्यस्मयि अतियुष्मासु अत्यस्मासु पदस्य पदात् अनुदात्तं सर्वम
पादादौ इत्यधिकृत्य युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ पदात्परयोरपादादौ स्थितयोः ष
ष्ठ्यादिविशिष्टयोर्वान्नौ इत्यादेशौस्तः तौचानुदात्तौ बहुवचनस्य वस्नसौ उक्तविधयोरनयोः षष्ठ्यादिबहु
वचनांतयोर्वस्नसौस्तोवान्नावोरपवादः तेमयावेकवचनस्य उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनांतयो
स्तेमेएतौस्तः त्वामौद्वितीयायाः द्वितीयैकवचनांतयोस्त्वामाइत्येतौस्तः श्रीशस्त्वावतुमापीह दत्तातेमेपि
शर्मसः स्वामीतेमेपिसहरिः पातुवामपिनौविभुः १ सुखंवांनौददात्वीशः पतिर्वामपिनौविभुः सोव्याद्वोनः
शिवंवोनोदद्यात्सेव्योऽत्रवः सनः २ पदात्परयोःकिं वाक्यादौमाभूत् त्वांपातु मांपातु अपादादौकिं वेदैरशेषैः
संवेद्योऽस्मान् कृष्णः सर्वदावतुस्थ ग्रहणाच्छ्रूयमाणविभक्तिकयोरेव नेहइतियुष्मत्पुत्रोब्रवीति इत्यस्मत्पु
त्रोब्रवीति समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याः एकतिङ्वाक्यं तेनेहन ओदनंपचतवभविष्यति

इहतु स्यादेव शालीनांतेओदनं दास्यामीति एतेवान्नावादय आदेशाअनन्वादेशेवावक्तव्याः अन्वादेशेतु
नित्यंस्युः धातातेभक्तोऽस्ति धातातवभक्तोऽस्तीतिवा तस्मैतेनम इत्यादि नचवाहाहैवयुक्ते चादिपंचकयु
क्ते नैते आदेशाः स्युः हरिस्त्वांमांच रक्षतु कथंत्वांमांवा नरक्षेदित्यादि युक्तग्रहणात्साक्षाद्योगेऽयंनिषेधः
परंपरासंबंधेतुआदेशाःस्यादेव हरोहरिश्चमेस्वामी पश्यार्थैश्चानालोचने अचाक्षुषज्ञानार्थैर्धातुभिर्यो
गेनैतेआदेशाः स्युःचेतसात्वांसमीक्षते परंपरासंबंधेऽप्ययंनिषेधः भक्तस्तवरूपंध्यायति आलोचनेतु
भक्तस्त्वा पश्यति चक्षुषा सपूर्वायाः प्रथमायाविभाषा विद्यमानपूर्वात् प्रथमांतात् परयोरन्वादेशेऽप्येते
आदेशावास्युः भक्तस्त्वमप्यहंतेन हरिस्त्वांत्रायतेसमां त्वामेतिवा सामंत्रितं संबोधनेयाप्रथमातदंतमामंत्रित
संज्ञंस्यात् आमंत्रितंपूर्वमविद्यमानवत् स्पष्टं अग्नेतव देवास्मान्पाहि अग्नेनय अग्नइंद्र वरुण इहयुष्मदस्म
दोरादेशास्तिङंतनिघात आमंत्रितनिघातश्चन सर्वदा रक्षदेवनइत्यत्रतु देवेत्यस्याविद्यमानवद्भावेपिततः प्राचीनं
रक्षेत्यतदाश्रित्यादेशाः एवंइमंमेगंगे यमुनइतिमंत्रे यमुन इत्यादिभ्यः प्राचीनामंत्रिताविद्यमानवद्भावेऽपिमेशब्द
मेवाश्रित्यसर्वेषांनिघातः नामंत्रिते समानाधिकरणे सामान्यवचनं विशेष्यंसमानाधिकरणेविशेषणेआमं
त्रितेपरेनाविद्यमानवत्स्यात् हरेदयालोनःपाहि अग्नेतेजस्विन् विभाषितंविशेषवचनं अत्रभाष्यं बहुवच
नमितिवक्ष्यामीति बहुवचनांतंविशेष्यंसमानाधिकरणेविशेषणे आमंत्रितेपरेअविद्यमानवद्वास्यात् यूयंप्र
भवोदेवाः शरण्या युष्मान्भजे देवाः शरण्यावोभजतइतिवा इहान्वादेशेऽपिवैकल्पिकाआदेशाः सुपात् सुपाद्
सुपादौ सुपादः सुपादं सुपादौ पादःपत् पाच्छब्दांतंयदंगंभंतदवयवस्यपाच्छब्दस्यपदादेशःस्यात् सुपदः

स्रूपदा स्रूपाद्भ्यामित्यादि अग्निंमंथतीत्यग्निमत् अग्निमद् अग्निमथौ अग्निमथः अग्निमन्थ्यामित्यादि ऋत्वि
गादिसूत्रेणांचेः स्रुप्युपपदे क्विन् अनिदितांहलउपधायाः क्ङिति हलंतानामनिदितानामंगानामुपधायानस्य
लोपः स्यात् किति ङितिच प्रत्यये परे उगिदचामितिनुम् संयोगांतस्य लोपः नुमोनकारस्य क्विन् प्रत्ययस्येति कु
त्वेनङकारः प्राङ् अनुस्वारपरसवर्णौ प्राञ्चौ प्राञ्चः प्राञ्चं प्राञ्चौ अचः नुम्रहनकारस्यांचतेर्भस्याकार
स्यलोपः स्यात् चौ लुप्ताकारनकारेंऽचतोपरे पूर्वस्याणोदीर्घः स्यात् प्राचः प्राचा प्राग्भ्यामित्यादि प्रत्यङ् प्र
त्यञ्चौ प्रत्यञ्चः प्रत्यञ्चं प्रत्यञ्चौ अचइतिलोपस्यविषयेंऽतरंगोऽपियणनप्रवर्त्तते अकृतव्यूहाइतिप
रिभाषया प्रतीचः प्रतीचेत्यादि अमुमंचतीतिविग्रहे अदस् अंचूइतिस्थिते विष्वग्देवयोश्चटेरद्र्यंचतौवप्र
त्यये अनयोः सर्वनाम्नश्चटेरद्र्यादेशः स्यात् वप्रत्ययांतेंऽचतोपरे अदद्रिअचूइतिस्थिते यण् अदसोऽसे
र्दादुदोमः अदसोऽसांतस्य दात्परस्य उदूतौ स्तोदस्यमश्च उइति ह्रस्वदीर्घयोः समाहारद्वंद्वः आंतरतम्या
द्ध्रस्वव्यंजनयोर्ह्रस्वोदीर्घस्यदीर्घः अमुमुयङ् अमुमुत्यञ्चौ अमुमुयञ्चः अमुमुयञ्चं अमुमुय
ञ्चौ अमुमुईचः अमुमुईचा अमुमुयग्भ्यामित्यादि मुत्वस्यासिद्धत्वान्नयण् अंत्यबाधेंऽत्यसदेश
स्येति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते अदमुयङ् अः सेः सकारस्य स्थाने यस्य सः असिरि-
ति व्याख्यानात् त्यदाद्यत्वविषय एव मुत्वं नान्यत्रेति पक्षे अदद्र्यङ् उक्तंच अदसोऽद्रेः पृथङ्मुत्वं केचि
दिच्छंति लत्ववत् केचिदंत्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते विष्वग्देवयोः किं अश्वाची अंचतौ किं विष्व
ग्युक् वप्रत्यये किं विषगंचनं वप्रत्ययग्रहणं ज्ञापयति अन्यत्रधातुग्रहणे तदादिविधिरिति तेनायस्कारः

उदङ् उदञ्चौ उदञ्चः उदङ्ङीन् उच्छब्दात्परस्य लुप्तनकारास्यांचतेर्भस्याकारस्य ईत्स्यात् उदीचः उदीचा उदग्भ्या
मित्यादि समः समि: वप्रत्ययांतें ऽचतौ परे समिरादेशः स्यात् सम्यङ् सम्यञ्चौ सम्यञ्चः समीचः समीचा
सहस्यसध्रिः सध्र्यङ् तिरसस्तिर्यलोपे अलुप्ताकारें ऽचतौवप्रत्ययांते परेतिरसस्तिर्यादेशः स्यात् तिर्यङ् ति
र्यञ्चौ तिर्यञ्चः तिर्यञ्चं तिरश्चः तिरश्चा तिर्यग्भ्यामित्यादि नांचेः पूजायां पूजार्थस्यांचतेरुपधाया
नस्यलोपोनस्यात् अलुप्तनकारत्वान्नतुम् प्राङ् प्राञ्चौ प्राञ्चः नलोपाभावादकारलोपोन प्राञ्चः प्राञ्
चा प्राङ्भ्यां प्राङ्क्ष प्राङ्षु एवंपूजार्थेप्रत्यङ्ङादयः क्रुंचकौटिल्याल्पीभावयोः अस्यक्र्त्विगादिनानलो
पाभावो ऽपिनिपात्यते क्रुङ् क्रुञ्चौ क्रुञ्चः क्रुङ्भ्यामित्यादि चोकुः पयोमुक् पयोमुग् पयोमुचौ पयो
मुचः इत्यादि भ्रश्चेति षत्वं स्कोरिति सलोपः जश्त्वचर्त्वे स्रुवृट् स्रुवृड् स्रुवृश्चौ २ स्रुवृट्त्सु स्रुवृट्सु महपू
जायां वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च एतेनिपात्यंते शतृवच्चैषांकार्यंस्यात् उगित्वान्नुम् सांतमह
तइतिदीर्घः मह्यते पूज्यतेऽसाविति महान् महान्तौ महान्तः हेमहन् महतः महता महद्भ्यामित्यादि अत्वसं
तस्यचाधातोः अत्वंतस्योपधायादीर्घः स्याद्धातुभिन्नासंतस्यचासंबुद्धौ सौपरे परंनित्यंचनुमंबाधि-
त्वावचनसामर्थ्यादादौदीर्घः ततोनुम् धीमान् धीमंतौ धीमंतः हेधीमन् शसादौमहद्वत् धातोरप्यत्वंत
स्यदीर्घः गोमंतमिच्छति गोमानिवाचरतीतिवाक्यजंतादाचारक्विबंतादा कर्तरिक्विप् उगिदचामितिसूत्रेऽ
चूग्रहणंनियमार्थं धोतोश्चेदुगित्कार्यं तर्ह्यंचतेरेवेति तेनस्रत् ध्वत् इत्यादौन अधातोरितितु अधातुभूतपू
र्वस्यापिनुमर्थं गोमान् गोमंतौ गोमंतः इत्यादि भातेर्डवतुः भवान् भवंतौ भवंतः हेभवन् शत्रंतस्यत्व

त्वंतस्याभावान्नदीर्घः भवतीतिभवन् उभेअभ्यस्तं षाष्ठद्वित्वप्रकरणे येद्वेविहितेतेउभेसमुदितेअभ्यस्तसंज्ञे
स्तः नाभ्यस्ताच्छतुः अभ्यस्तात्परस्यशतुर्नुम्नस्यात् ददत् ददतौ जक्षित्यादयःषट् षड्धातवोऽन्येजक्षि
तिश्चसप्तमएंतेअभ्यस्तसंज्ञाःस्युः जक्षत् जक्षतौ जक्षतः एवंजाग्रत् दरिद्रत् शासत् चकासत् दीधीवेव्यो
र्ङित्त्वेऽपिछांदसत्वाव्द्यत्ययेनपरस्मैपदं दीध्यत् वेव्यत् गुप् गुब् गुपौ गुपः गुब्भ्यामित्यादि त्यदादिषुदृ-
शोऽनालोचनेकञ्च त्यदादिषूपपदेषु अज्ञानार्थात् दृशेर्धातोः कञ्स्याच्चात्क्विन् आसर्वनाम्नः सर्वना
म्नआकारोंऽतादेशःस्यात् दृक्दृशवतुषु कुत्वस्यासिद्धत्वाद्व्रश्चेतिषः तस्यजश्त्वेनड्ः तस्यकुत्वेनगः तस्यच
र्त्वेनपक्षेकः तादृक् तादृग् तादृशौ तादृशः षत्वापवादत्वात्कुत्वेनखकारइतिकैयटहरदत्तादिमतेषुचर्त्वाभा
वपक्षेखएवश्रूयेत नतुगः जश्त्वंप्रतिकुत्वस्यासिद्धत्वात् दिगादिभ्योयदितिनिर्देशान्नासिद्धत्वमितिवा
बोध्यं व्रश्चेतिषत्वं जश्त्व जत्वे विट् विड् विशौ विशः नशेर्वा नशेः कवर्गोंतादेशोवास्यात्पदांते नक् नग् न
ट् नड् नशौ नशः नग्भ्यां नड्भ्यामित्यादि स्पृशोऽनुदकेक्विन् अनुदकेसुप्युपपदेस्पृशेः क्विन्स्यात् घृतस्पृ
क् घृतस्पृग् घृतस्पृशौ घृतस्पृशः क्विन्प्रत्ययोयस्मादितिबहुव्रीह्याश्रयणात्क्विप्यपिकुत्वं स्पृक् स्पृग् षड
गकाः प्राग्वत् ञिधृषा प्रागल्भ्ये अस्मादृत्विगादिनाक्विन् द्वित्वमंतोदात्तत्वंचनिपात्यते कुत्वात्पूर्वंजश्त्वे
नडः गः कः धृष्णोतीतिदधृक् दधृग् दधृषौ दधृषः दधृग्भ्यामित्यादि रत्नानिमुष्णातीतिरत्नमुट् रत्नमुड् रत्नमु
षौ रत्नमुषः रत्नमुड्भ्यामित्यादि षड्भ्योलुक् षट् षड् षड्भिः षड्भ्यः२ षड्चतुर्भ्यश्चेतिनुट् अनामितिप
र्युदासान्नष्टुत्वनिषेधः यरोऽनुनासिकइतिविकल्पंबाधित्वाप्रत्ययेभाषायामितिवचनान्नित्यमनुना

सिकः षण्णां षड्क्ष षट्त्स तदंतविधिः परमषट् परमषण्णां गौणत्वेतुप्रियषषः २ प्रियषषा प्रियषषां ससजु
षोरुरितिरुत्वं र्वोरुपधायादीर्घइकः रेफवांतस्यधातोरुपधायाइकोदीर्घः स्यात्सदांते पिपठीः पिपठिषौ पि
पठिषः पिपठीर्भ्या वाशरीतिवाविसर्जनीयः नुम्विसर्जनीयशर्व्यवायेऽपि एतैः प्रत्येकंव्यवधानेऽपिइणकु
भ्यांपरस्य सस्य मूर्धन्यादेशः स्यात् ष्टुत्वेनपूर्वस्य षत्वं पिपठीष्षु पिपठीःषु प्रत्येकमितिव्याख्यानादनेकव्य
वधाने षत्वंन निंस्स्व निंस्से नुम्ग्रहणंनुम् स्थानिकानुस्वारोपलक्षणार्थमितिव्याख्यानात् तेनेहनस्यात् हि
न्स्र पुंसि अतएवनशर्ग्रहणेनगतार्थता रात्सस्येतिसलोपे विसर्गः चिकीः चिकीर्षौ चिकीर्षः रोः सुपीतिनि
यमान्नविसर्गः चिकीर्षु दमेर्डोस् डित्वसामर्थ्याट्टिलोपः रुत्वविसर्गौ दोः दोषौ दोषः पद्दन्नितिवादोषन् दो
ष्णः दोषः दोष्णा दोषा दोषभ्यामित्यादि विश् प्रवेशने सन्नतात्क्विप् षत्वस्यासिद्धत्वात्संयोगांतलोपः व्र
श्चेतिषः जश्त्वचर्त्वे विविट् विविड् विविक्षौ विविक्षः स्कोरितिकलोपः तट् तड् तक्षौ तक्षः गोरट् गोरड् गो
रक्षौ गोरक्षः तक्षिरक्षिभ्यां ण्यंताभ्यां क्विपितु स्कोरिति कलोपो नप्रवर्त्तते णिलोपस्य स्थानिवद्भावात् पूर्व-
त्रासिद्धीयेन स्थानिवदिति तुतस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषिद्धं तस्मात्संयोगांतलोपएव तक्
तग् गोरक् गोरग् स्कोरिति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगांतलोपः पिपक् पिपग् पिपक्षौ पिपक्षः एवं
विवक् दिधक् पिसगतौ सुष्ठुपेसतीति सुपीः सुपिसौ सुपिसः सुपीर्भ्यां सुपीष्षु सुपीःषु एवंसुतूः तुस
खंडने विद्वान् विद्वांसौ विद्वांसः हेविद्वन् विद्वांसं विद्वांसौ वसोः संप्रसारणं वस्वंतस्यभस्यसंप्रसारणंस्यात्
पूर्वरूपत्वं षत्वं विदुषः विदुषा वसुस्रंस्वितिदत्वं विद्वद्भ्यामित्यादि सेदिवान् सेदिवांसौ सेदिवांसः सेदिवां

सं सेदिवांसौ अंतरंगो ऽपीडागमः संप्रसारणविषयेनैवप्रवर्त्तते अकृतव्यूहाइतिपरिभषया सेदुषः सेदुषा सेदिव
द्भ्यामित्यादि सांतमहतइत्यत्रसांतसंयोगोऽपिप्रातिपदिकस्यैवगृह्यते नतुधातोः महच्छब्दसाहचर्यात् स्रुघ्रु
ह्निनस्तीति स्रहिन् स्रहिंसौ स्रहिंसः स्रहिन्भ्यां स्रहिन्त्स स्रहिन्स ध्वत् ध्वसौ ध्वसः ध्वद्भ्यामित्यादि ए
वंस्रत् पुंसो ऽसुङ् सर्वनामस्थानेविवक्षितेपुंसो ऽसुङ्स्यात् उकारउच्चारणार्थः बहुपुंसीत्यत्रउगितश्चेति
ङीबर्थं सुनेनपूञोडुम्सुन् इति प्रत्ययस्योगित्वेनैवनुम्सिद्धेः पुमान् हेपुमन् पुमांसौ पुमांसः पुमांसं पुमांसौ
पुंसः पुंसा पुंभ्यां पुंसु ऋदुशनेत्यनङ् उशना उशनसौ उशनसः अस्यसंबुद्धौ वाऽनङ् नलोपश्च वावाच्यः
हेउशनन् हेउशन हेउशनः उशनोभ्यामित्यादि अनेहा अनेहसौ अनेहसः हेअनेहः अनेहसौ अनेहसः
वेधाः वेधसौ वेधसः हेवेधः वेधोभ्यामित्यादि अधातोरित्युक्तेर्नदीर्घः सुष्ठुवस्तेसुवः सुवसौ सुवसः पिंड
ग्रसतेसौपिंडग्रः पिंडग्लुः ग्रसुग्लसुअदने अदसऔसुलोपश्च अदसओकारोंऽतादेशः स्यात्सौपरेसुलो
पश्च तदोः सः सावितिदस्यसः असौ औत्वप्रतिषेधः साकच्कस्यवावक्तव्यः सादुत्वंच प्रतिषेधसन्नियोग
शिष्टमुत्वंतदभावेनप्रवर्त्तते असकौ असुकः त्यदाद्यत्वं पररूपत्वं वृद्धिः अदसोऽसेरितिमत्वोत्वे अमू ज
सःशी आद्गुणः एतईद्बहुवचने अदसोदात्परस्यैत्तईत्स्याद्द् स्यचमोबह्वर्थोक्तौ अमी पूर्वत्रासिद्धत्व-
मितिविभक्तिकार्यंप्राक्पश्चादुत्वमत्वे अमुं अमू अमून् मुत्वेकृतेघिसंज्ञायांनाभावः नमुने नाभावेकर्त्तव्ये
कृतेचमुभावोनासिद्धः स्यात् अमुना अमूभ्यां अमीभिः अमुष्मै अमूभ्यां अमीभ्यः अमुष्मात् अमुष्य अमु
योः अमीषां अमुष्मिन् अमीषु इतिहलंताः पुल्लिंगाः नहोधः नहोहस्यधः स्याज्झलि पदांतेच जश्त्व

चर्त्वे उपानत् उपानद् उपानहौ उपानहः उपानद्भ्यामित्यादि उपानत्सु उत्पूर्वात्ष्णिह प्रीतावित्यस्मादृत्विगा
दिनाक्विन् निपातनात्तल्लोपषत्वेक्विन्नंतत्वात्कुत्वे नहस्यघः जश्त्वचर्त्वे उष्णिक् उष्णिग् उष्णिहौ उष्णिहः उष्णि
ग्भ्यां उष्णिक्षु द्यौः दिवौ दिवः द्युभ्यां द्युषु गीः गिरौ गिरः एवंपूः चतुरश्चतसृआदेशः चतस्रः२ चतसृणां चतसृषु कि
मः कादेशेटाप् का के काः सर्वावत् यः सौ इदमोदस्य यः स्यात्सौ इदमोमः इयं त्यदाद्यत्वंटाप् दश्चेतिमः इमे इ
माः इमां इमे इमाः अनया हलिलोपः आभ्यां आभिः अस्यै अस्याः२ अनयोः२ आसां अस्यां आसु अन्वादेशे
तु एनां एने एनाः एनया एनयोः२ ऋत्विगादिनासृजेःक्विन् अमागमश्चनिपातितः स्रक् स्रग् स्रजौ स्रजः स्र-
ग्भ्यां स्रक्षु त्यदाद्यत्वं टाप्स्यात्ये स्याः एवंतद् यद् एतद् वाक् वाग् वाचौ वाचः वाग्भ्यां वाक्षु अप्शब्दोनित्यं
बहुवचनांतः अप्तृन्निति दीर्घः आपः अपः अपोभि अपस्तकारः स्याद्भादौ प्रत्ययेपरे अद्भिः अद्भ्यः अपां
अप्सु दिक् दिग् दिशौ दिशः दिग्भ्यां दिक्षु त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वं दृक् दृग् दृशौ
दृशः त्विट् त्विड् त्विषौ त्विषः त्विड्भ्यां त्विट्सु त्विट्सु सहजुषतेइविसजूः सजुषौ सजुषः सजूर्भ्यां स
जूःषु सजूष्षु षत्वस्यासिद्धत्वादुत्वं आशीः आशिषौ आशिषः आशीर्भ्यां आशीःषु असौ त्यदाद्यत्वेटाप् औ
ङःशी उत्वमत्वे अमू अमूः अमुया अमूभ्यां अमूभिः अमुष्यै अमूभ्यः अमुष्याः२ अमुयोः अमूषां अमु
ष्यां अमूषु इतिहलंताः स्त्रीलिंगाः स्वमोर्लुक् दत्वं स्वनडुत् स्वनडुद् स्वनडुही चतुरनडुहोरित्याम्
स्वनड्वांहि पुनस्तद्वत् दिवउत् अहर्विमलद्यु अंतर्वर्तिनीं विभक्तिमाश्रित्यपूर्वपदस्येवोत्तरखंडस्यापिप
दसंज्ञायां प्राप्तायां उत्तरपदत्वेचापदादिविधौ प्रतिषेधः इतिप्रत्ययलक्षणंन तेनदिवउदित्युत्वंनविमलदिवी

विमलदिवि अपदादिविधौकिं दधिसेचौ इह षत्वनिषेधे कर्त्तव्ये पदत्वमस्त्येव कुत्वे तु न वाः वारी अझलंतत्वा-
न्नुम् वारि चत्वारि नलुमतेतिकादेशे न किं के कानि इदम् इमे इमानि अन्वादेशे नपुंसके एनद्वक्तव्यः ए
नत् एनद् एने एनानि एनेन एनयोः ब्रह्म ब्रह्मणी ब्रह्माणि संबुद्धौ नपुंसकानां नलोपो वा वाच्यः हे ब्रह्मन्
हे ब्रह्म ब्रह्मणी ब्रह्माणि रोऽसुपि अहर्भाति विभाषाङिश्योः अन्ही अहनी अहानि अहन् अहन्नित्य-
स्य रुः स्यात्पदांते अहोभ्यां अहोभिः अन्हे अन्हः अन्हां अन्हि अहनि अन्होः अह सु वाशरीति वा विस
र्जनीयः अहः सु इह अहः अहोभ्यामित्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते अहन्नित्यावर्त्त्य नलोपाभावं नि-
पात्य द्वितीयेन रुर्विधेयः तदंतस्यापि रुत्वरत्वे दीर्घाण्यहानि यस्मिन्स दीर्घाहाः निदाघः इह हल्ङ्यादिलोपे
प्रत्ययलक्षणे नासुपीति निषेधाद्रत्वाभावे रुः तस्यासिद्धत्वान्नांतलक्षण उपधादीर्घः संबुद्धौ तु हे दीर्घाहो-
निदाघ दीर्घाहानौ दीर्घाहानः सुटि राजवत् शेषं पूर्ववत् दंडि दंडिनी दंडीनि स्रग्वि स्रग्विणी स्रग्वीणि वाग्मि
वाग्मिनी वाग्मीनि बहुवृत्रहाणि बहुपूषाणि वक्ष्यमाणि असृजः पदांते कुत्वं सृजेः क्विनो विधानात् विश्व
सृडादौ तु न सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात् यद्यपि व्रश्चादिसूत्रे सृजियज्योः पदांते षत्वं कु
त्वापवादः स्रगृत्विक्शब्दयोस्तु निपातनादेव कुत्वं असृक्शब्दस्तु अस्यतेरौणादिके ऋज् प्रत्यये बोध्यः असृ
क् असृग् असृजी असृंजि पद्दन्नितिवाऽसन् असानि असृजा अस्ना असृग्भ्यां असभ्यामित्यादि ऊर्क् ऊ
र्ग् ऊर्जी ऊर्जि नरजानांसंयोगः बहूर्जि नुम्प्रतिषेधः अंत्यात्पूर्वो वा नुम् बहूर्जि बहूर्ञ्जि रनजानांसंयो
गः पुनरपि बहुरञ्जि वा कुलानि त्यत् त्यद् त्ये त्यानि तत् तद् ते तानि यत् यद् ये यानि एतत् एते एतानि

अन्वादेशेतु एनत् बेभिद्यतेः क्विप् बेभित् बेभिद् बेभिदी शौ अल्लोपस्य स्थानिवत्त्वाद् झलंतत्वान्न नुम् अजंत लक्षणस्तु नुम् न स्वविधौ स्थानिवत्त्वाभावात् बेभिदि ब्राह्मणकुलानि चेच्छिदि गवाक्शब्दस्य रूपाणि क्लीबेर्चा गतिभेदतः असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतं १ स्वमुसुप्सु नव षड्भादौ षट्के स्युस्त्रीणि जश्शसोः चत्वारि शेषे दशके रूपाणीति विभावय २ तथाहि गामंचतीति विग्रहे ऋत्विगित्यादिना क्विन् गतौ नलोपः अवङ्स्फोटायनस्येत्यवङ् गवाक् गवाग् सर्वत्र विभाषेति प्रकृतिभावे गोअक् एङः पदांतादतीति पूर्वरूपे गोऽक् गोऽग् पूजायां नस्य कुत्वेन ङः गवाङ् गोअङ् गोऽङ् अस्याप्येतान्येव औङः शी भस्यादचइत्यल्लोपः गोची पूजायां तु गवाञ्ची गोअञ्ची गोऽञ्ची जश्शसोः शिः सर्वनामस्थानत्वान्नुम् गवाञ्चि गोअञ्चि गोऽञ्चि गतिपूजनयोस्त्रीण्येव गोऽचा गवाञ्चा गोअञ्चा गोऽञ्चा गवाग्भ्यां गोअग्भ्यां गोग्भ्यां गवाङ्भ्यामित्यादि सुपि तु ङांतानां पक्षे ङ्णोः कुगिति कुक् गवाङ्क्षु गवाङ्क्षु गोअङ्षु गोअङ्क्षु गोङ्षु गोङ्क्षु गवाक्षु गोअक्षु गोक्षु नचेह चयोर्द्वितीयाइति पक्षे ककारस्य खकारे णषण्णामाधिक्यं शंक्यं चर्त्वस्यासिद्धत्वात् कुक्पक्षे तु तस्यासिद्धत्वात् जश्त्वाभावपक्षे द्वितीयादेशात् त्रीणि रूपाणि वर्द्धंत एव ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् रूपाण्यश्वाक्षिभूतानि भवंतीति मनीषिभिः ५२७ तिर्यक् तिर्यग् तिरश्ची तिर्यञ्ची पूजायां तु तिर्यङ् तिर्यञ्ची तिर्यञ्चि यकृत् यकृद् यकृती यकृंति पद्दन्निति वा यकन् यकानि यक्नि यक्ना यकृता शकृत् शकृती शकृंति शकानि शक्ना शकृता ददत् ददती वा नपुंसकस्य अभ्यस्तात्परो यः शतात दंतस्य क्लीबस्य नुम्वा स्यात्सर्वनामस्थाने परे ददंति ददति तुदत् आच्छीनद्योर्नुम् अवर्णांतादंगात्स

शेयः शतुरवयवस्तदंतस्यांगस्यनुम्वास्याच्छीनद्योः परतः तुदंती तुदती तुदंति भात् भांती भाती भांति पचत्
शप्श्यनोर्नित्यं श्यप्श्यनोरात्परोयः शतुरवयवस्तदंतस्यनित्यंनुम्स्याच्छीनद्योः परतः पचंती पचंति दीव्य
त् दीव्यंती दीव्यंति स्वप् स्वब् स्वपी नित्यात्परादपिनुमः प्रागसृन्निति दीर्घः प्रतिपदोक्तत्वात् स्वांपि निरवका
शत्वं प्रतिपदोक्तत्वमितिपक्षेतु प्रकृते तद्विरहान्नुमेव स्वंपि स्वपा अपोभि स्वद्भ्यां स्वद्भिः अर्तिपिपर्त्तीत्यादि
नाधनेरुस् रुत्वं धनुः धनुषी सांतेतिदीर्घः नुम्विसर्जनीयेतिषत्वं धनूंषि धनुषा धनुर्भ्यां धनुर्भिः धनुःषु
धनुःषु एवंचक्षुर्हविरादयः पिपठिषतेः क्विप् र्वोरितिदीर्घः पिपठीः पिपठिषी अल्लोपस्यस्थानिवत्वाज्झ
लंतलक्षणोनुम्न स्वविधौस्थानिवत्वाभावात् अजंतलक्षणोपिन पिपठिषि पिपठीर्भ्यां इत्यादि पयः पय
सी पयांसि पयसा पयोभ्यामित्यादि सुपुम् सुपुंसी सुपुमांसि शेषंपुंवत् अदः विभक्तिकार्यं उत्वमत्वे अ
मू अमूनि शेषंपुंवत् इतिहलंतानपुंसकलिंगाः स्वरादिनिपातमव्ययं स्वरादयोनिपाताश्चाव्ययसंज्ञाः
स्युः स्वर् अंतर् प्रातर् पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्व
स् दिवा रात्रौ सायं चिरं मनाक् ईषत् जोषं तूष्णीं बहिस् अवस् समया निकषा स्वयं वृथा नक्तं न नञ् हे-
तौ इद्धा अद्धा सामि वत् ब्राह्मणवत् क्षत्रियवत् सना सनत् सनात् उपधा तिरस् अंतरा अंतरेण ज्योक्
कं शं सहसा विना नाना स्वस्ति स्वधा अलं वषट् श्रौषट् वौषट् अन्यत् अस्ति उपांशु क्षमा विहायसा
दोषा मृषा मिथ्या मुधा पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकं प्रवाहिका आर्यहलं अभीक्ष्णं
साकं सार्द्धं नमस् हिरुक् धिक् अथ अम् आम् प्रताम् प्रशान् प्रतान् मा माङ् आकृतिगणोऽयं च

वाह् अह एव एवं नूनं शश्वत् युगपत् भूयस् कूपत् सूपत् कुवित् नेत् चेत् चण् किंचित् कंचित् यत्र नह हंति
माकिः माकीम् नकिः नकि आकीम् माङ् नञ् यावत् तावत् त्वै द्वै न्वै रै श्रौषट् वौषट् स्वाहा स्वधा वषट् तुम् त
थाहि खलु किलु अथो अथ स्मषु स्म आदह उपसर्गविभक्तिस्वरप्रतिरूपकाश्च अवदत्तं अहंयुः अस्ति-
क्षीरा अ आ इ ई उ ऊ ए ऐ ओ औ पशु स्म शुकं यथा कथा च प्याट् पाट् अंग हे है भोः अये द्य विषु एक
पदे युत् अतः चादिरप्याकृतिगणः तद्धितश्चासर्वविभक्तिः यस्मात्सर्वा विभक्तिर्नोत्पद्यते सतद्धितांतोऽ
व्ययसंज्ञः स्यात् परिगणनं कर्त्तव्यं तसिलादयः प्राक्पाशपः शस्प्रभृतयः प्राक्समासांतेभ्यः अम् आम्
कृत्वोर्थाः तसिवती नानाञाविति तेनेह न पचतिकल्पं पचतिरूपं कृन्मेजंतः कृद्योमांत एजंतश्च तदंतमव्य
यंस्यात् स्मारं स्मारं जीवसे पिबध्यै क्त्वातोसुन्कसुनः एतदंतमव्ययं स्यात् कृत्वा उदेतोः विसृपः अव्य-
यीभावश्च अधिहरि अव्ययादाप्सुपः अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् तत्रशालायां विहितविशे
षणान्नेह अस्कन्द्वैसौ अव्ययसंज्ञायां यद्यपि तदंतविधिरस्ति तथापि न गौणे प्राधान्ये तु स्यादेव परमोच्चैः
आप्ग्रहणं व्यर्थमलिंगत्वात् सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु वचनेषु च सर्वेषु यन्न व्येति तदव्ययं इति
श्रुतिर्लिंगसंख्याकारक भावपरा वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः आपं चैव हलंतानां यथावाचानि-
शादिशा वगाहः अवगाहः पिधानं अपिधानं इत्यव्ययानि स्त्रियां अधिकारोऽयं समर्थानामिति याव
त् अजाद्यतष्टाप् अजादीनामकारांतस्य च वाच्यं यत्स्त्रीत्वं तस्मिन् द्योत्येटाप् स्यात् अजाद्युक्तिर्ङीषोङी
पश्च बाधनाय अजा अतः खट्वा अजादिभिः स्त्रीत्वस्य विशेषणान्नेह पंचाजी अत्र हि समासार्थसमाहारनि

षं स्त्रीत्वं अजा एडका अश्वा चटका मूषिका एषु जातिलक्षणोङीष् प्राप्तः बाला वत्सा होढा मंदा विलाता एषु वयसि प्रथम इति ङीप् प्राप्तः संभस्त्राजिनशणपिंडेभ्यः फलात् संफला भस्त्र फला ज्ञापोरिति ह्रस्वः सद च्च कांड प्रांत शतैकेभ्यः पुष्पात् सत्पुष्पा प्राक्पुष्पा प्रत्यक्पुष्पा शूद्रा चामहत्पूर्वा जातिः पुंयोगेतु शूद्री अमहत्पूर्वा किं महाशूद्री क्रुञ्चा उष्णिहा देवविशा जेष्ठा कनिष्ठा मध्यमेति पुंयोगेपि कोकिलाजाताव पि मूलान्नञः अमूला ऋन्नेभ्योङीप् कर्त्री दंडिनी उगितश्च उगिदंतात्प्राति पदिकात्स्त्रियांङीप् स्या त् भवंती पचंती श्यप्श्यनोरिति नुम् उगिदचामिति सूत्रेच ग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यंचतेरेवेति निय-म्यते तेनेह उखास्रत् क्विप् अनिदितामिति नलोपः पर्णध्वत् अंचेरस्तस्यादेव प्राची प्रतीची वनोरच वन्नं तात्तदंताच्च प्रातिपदिकात् स्त्रियांङीप् स्यात् रश्चांतादेशः वन्निति ङ्वनिप् क्वनिप् वनिपां सामान्यग्रहणं प्र त्यय ग्रहणे यस्मात् स विहित स्तदादे स्तदंतस्य ग्रहणं तेन प्रातिपदिक विशेषणात्तदंतांतमपि लभ्यते सुत्वान् मति क्रांता अतिसुत्वरी अतिधीवरी शर्वरी वनोनहश इति वक्तव्यं हशंताद्धातोर्विहितो योवन् तदंतात् तदं-तांताच्च प्रातिपदिकात् ङीप् रश्च नेत्यर्थः ओणृ अपनयने वनिप् विड्वनोरित्यात्वं अवावा ब्राह्मणी राज-युध्वा बहुव्रीहौवा बहुधीवरी बहुधीवा पक्षेडाप् वक्ष्यते पादोऽन्यतरस्यां पाच्छब्दः कृतसमासांतस्तदंतात् प्रातिपदिकात् ङीप् वास्यात् द्विपदी द्विपात् टाबृचि ऋचिवाच्यायां पादंतात् टाप् स्यात् द्विपदा ऋक् एकप दा नषट्स्वस्रादिभ्यः पंच चतस्रः पंचेत्यत्र नलोपे कृते पिष्यांता षडिति षट्संज्ञां प्रति नलोपः सुप्स्वरेति न लोपस्यासिद्धत्वान्न षट्स्वस्रादिभ्य इति नटाप् मनः मन्नंतान्न ङीप् सीमा सीमानौ सीमानः अनो बहुव्री

हेः अन्नंताद्बहुव्रीहेर्नङीप् बहुयज्वा बहुयज्वानौ डाबुभाभ्यामन्यतरस्यां सूत्रद्वयोपात्ताभ्यां डाप्प्रतिषेधाभ्यां ङीप्प्रत्ययस्या
त् सीमा सीमे दामा दामे नपुंसि दामेत्यमरः बहुयज्वा बहुयज्वे अनउपधालोपिनोऽन्यतरस्यां अन्नंता
द्बहुव्रीहेरुपधालोपिनो वाङीप्स्यात् पक्षेडाब्निषेधौ बहुराज्ञी बहुराज्ञ्यौ बहुराजा बहुराजे बहुराजानौ
प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापिपरे स आप्सुपः
परो न चेत् सर्विका कारिका अतः किं नौका प्रत्ययस्थात्किं शक्नोतीति शका असुपः किं बहुपरिव्राजका नग
री कात् किं नंदिग्रहीतिल्युः नंदना पूर्वस्य किं परस्य माभूत् कटुका तपरः किं राका आपि किं कारकः मा
मकनरकयोरुपसंख्यानं मामिका नरान्कायतीति नरिका त्यक्त्यपोश्च दाक्षिणात्यिका इहत्यिका
नयासहोः यत्तदोरस्येन्नस्यात् यका सका यकां तकां त्यकनश्च निषेधः उपत्यका अधित्यका आशिषि
वुनश्च न जीवका भवका उत्तरपदलोपेन देवदत्तिका देवका क्षिपकादीनां च क्षिपका ध्रुवका कन्यका च
टका तारका ज्योतिषि अन्यत्र तारिका वर्णका तांतवे अन्यत्र वर्णिका वर्त्तका शकुनौ प्राचां उदीचां तु वर्त्ति
का अष्टका पितृदैवत्ये अष्टिकान्या सूतका पुत्रिका वृंदारकाणां वेति वक्तव्यं इह वा अ इति छेदः कात्पू
र्वस्य अकारादेशो वेत्यर्थः तेन पुत्रिकाशब्दे ङीनइवर्णस्य पक्षेऽकारः अन्यत्रेत्वबाधनार्थमकारस्यैव पक्षेऽ
कारः सूतका सूतकेत्यादि उदीचामातःस्थाने यकपूर्वायाः यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकार
स्तस्य कात्पूर्वस्येद्वा स्यादापि परे केणइति ह्रस्वः आर्यका आर्यिका चटकका चटकिका आतः किं सांका
श्येभवा सांकाश्यिका यकेति किं अश्विका स्त्रीप्रत्ययः किं शुभंयातीति शुभंया अज्ञाता शुभंया शुभंयिका

धात्वंतयोस्तन्नित्यं सुनयिका सुपाकिका भस्त्रैषाजाद्वास्वानञ्पूर्वाणामपि स्वेत्यंतं लुप्तषष्ठीकंपदं एषामत
इद्वास्यात् तदंतविधिनैवसिद्धेनञ्पूर्वाणामपीतिस्पष्टार्थं भस्त्राग्रहणमुपसर्जनार्थं अन्यस्यतूत्तरसूत्रेणसिद्धं
एषाद्वा एतयोस्तसपूर्वयोर्नेत्वं अंतर्वर्त्तिनीं विभक्तिमाश्रित्यासुपइतिप्रतिषेधात् अनेषका परमैषका अद्वके
परमद्वके स्वशब्दग्रहणंसंज्ञोपसर्जनार्थं इहहि आतः स्थानइत्यनुवृत्तंस्वशब्दस्या तो विशेषणं नतुद्वैषयोःअ
संभवात् नाप्यन्येषां अव्यभिचारात् स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः अर्थांतरेतुनस्त्री संज्ञो
पसर्जनीभूतस्तु कप्रत्ययांतत्वाद्भवत्युदाहरणं एवंचात्मीयायां स्विका परमस्विकेति नित्यमेवेत्वं निर्भस्त्रका
निर्भस्त्रिका एषका एषिका कृतषत्वनिर्देशान्नेहविकल्पः एतिके एतिकाः अजका अजिका ज्ञका ज्ञिका द्वके द्वि
के निःस्वका निःस्विका अभाषितपुंस्काच्च एतस्माद्विहितस्यातःस्थानेअतइद्वास्यात् गंगका गंगिका ब
हुव्रीहेर्भाषितपुंस्कत्वान्ततोविहितस्यनित्यं अज्ञाता खट्वा अखट्विका शैषिके कपितु विकल्पएव आद
चार्याणां पूर्वसूत्रविषयेआद्वास्यात् गंगाका उक्तपुंस्कात्तुशुभ्रिका अनुपसर्जनात् अधिकारोऽयं यून
स्तिरित्यभिव्याप्य अयमेवस्त्रीप्रत्ययेषु तदंतविधिंज्ञापयति टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्
ठक्ठञ्कञ्क्वरपः अनुपसर्जनं यट्टिदादितदंतंयददंतंप्रातिपदिकंततः स्त्रियांङीप्स्यात् कुरुचरी उपस
र्जनत्वान्नेह बहुकुरुचरा नदट् नदी वक्ष्यमाणेसूत्रटित्वादुगित्वाच्चङीप्प्राप्तः यासुटोङित्वेनलाश्रयमनुबं
धकार्यंनादेशानामितिज्ञापनान्नभवति श्नःशानचः शित्वेनक्वचिदनुबंधकार्येप्यनल्विधाविति निषेधज्ञाप
नाद्वा सौपर्णेयी ऐंद्री औत्सी ऊरुद्वयसी ऊरुदघ्नी ऊरुमात्री पंचतयी आक्षिकी लावणिकी यादृशी इत्वरी

तान्डीलिकेणेपि चौरी नञ्स्नञीकक्ख्युंस्तरुण तलुनानामुपसंख्यानं स्त्रैणी पौंस्नी शाक्तीकी याष्टि
की आढ्यंकरणी तरुणी तलुनी यञश्च यञंतात्स्त्रियांङीप्स्यात् अकारलोपेकृते हलस्तद्धितस्य हलउत्त
रस्योपधाभूतस्य तद्धितयकारस्य लोपः स्यादीति परे गार्गी अनपत्याधिकारस्थत्वान्नङीप् द्वीपेभवाद्वैप्या अ
धिकारग्रहणाद्देवस्यापत्यंदैव्या देवाद्यञञाविति हि प्राग्दीव्यतीयोनत्वपत्याधिकारपठितः प्राचांष्फ तद्धि
तः यञंतात् ष्फोवास्यात्स्त्रियां सचतद्धितः षः प्रत्ययस्य प्रत्ययस्यादिः षइत्स्यात् आयनेयीनीयियः
फढखछघांप्रत्ययादीनां प्रत्ययादिभूतानां फादीनांक्रमादायन्नादय आदेशाः स्युः तद्धितांतत्वात्प्रातिपदि
कसंज्ञा षित्वविधिसामर्थ्यात्ष्फेणोक्तेपिस्त्रीत्वेषिद्गौरेति वक्ष्यमाणोङीष् गार्ग्यायणी सर्वत्रलोहितादिकतं
तेभ्यः लोहितादिभ्यः कतशब्दांतेभ्योयञंतेभ्योनित्यंष्फः स्यात् लौहित्यायनी कात्यायनी कौरव्यमांडूका
भ्यांच अभ्यांष्फः स्यात् क्रमेणटाप्ङीपोरपवादः कुर्वादिभ्योण्यः कौरव्यायणी ढक्चमंडूकादित्यण् मांडू
कायनी आसुरेरुपसंख्यानं आसुरायणी वयसिप्रथमे प्रथमवयोवाचिनो ऽदंतात्स्त्रियांङीप्स्यात्
कुमारी वयस्यचरमइतिवाच्यं वधूटी चिरंटी वधूटचिरंटशब्दौ यौवनवाचिनौ अतः किं शिशुः कन्याया
न कन्यायाः कनीनचेति निर्देशात् द्विगोः अदंतात् द्विगोर्ङीप्स्यात् त्रिलोकी अजादित्वात्त्रिफला त्र्यनी
का सेना अपरिमाणबिस्ताचितकंबल्येभ्योनतद्धितलुकि अपरिमाणांताद्बिस्ताद्यंताच्चद्विगोर्नङीप्स्या
त् तद्धितलुकिसति पंचभिरश्वैः क्रीतापंचाश्वा आर्हीयष्ठक् अध्यर्धेतिलुक् द्वौबिस्तौ पचतीति द्विबिस्ता
द्व्याचिता द्विकंबल्या परिमाणात्तु द्व्याढकी तद्धितलुकिकिं समाहारेपंचाश्वी कांडांतात्क्षेत्रे क्षेत्रेयः कांडां

तो द्विगुस्ततो नङीप् तद्धितलुकि सति द्वे कांडे प्रमाणमस्याः द्विकांडा क्षेत्रभक्तिः प्रमाणे द्वयसजिति विहितस्य
मात्रचः प्रमाणे लो द्विगोर्नित्यमिति लुक् क्षेत्रे किं द्विकांडी रज्जुः पुरुषात्प्रमाणे ऽन्यतरस्यां प्रमाणेयः पुरुषः
स्तदंताद्विगोर्वा ङीप् स्यात् तद्धितलुकि सति द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी द्विपुरुषा वा परिखा ऊधसो ऽन
ङ् ऊधो ऽतस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियां इत्यनङि कृते डाप्ङीप्निषेधेषु प्राप्तेषु बहुव्रीहेरूधसो ङीष्
ऊधोंताद्बहुव्रीहेर्ङीष् स्यात् स्त्रियां कुंडोध्नी स्त्रियां किं कुंडोधो धेनुकं इहानङपि न तद्धितो स्त्रियामिति रूपसं-
ख्यानात् संख्याव्ययादेर्ङीप् ङीषोपवादः द्व्यूध्नी अत्यूध्नी बहुव्रीहेरित्येव ऊधो ऽतिक्रांता अत्यूधाः दामहा
यनांताच्च संख्यादेर्बहुव्रीहेर्दामांताद्धायनांताच्च ङीप् स्यात् दामांते डाप्प्रतिषेधयोः प्राप्तयोः हायनांते टापि प्राप्ते व
चनं द्विदाम्नी अव्ययग्रहणाननुवृत्ते रुद्दामा वडवेत्यत्र डाप्ङीप्निषेधावपि पक्षे स्तः द्विहायनी बाला त्रिचतुर्भ्यां
हायनस्य णत्वं वाच्यं वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते त्रिहायणी चतुर्हायणी वयसो ऽन्यत्र त्रिहा
यना चतुर्हायना शाला नित्यं संज्ञा छंदसोः अन्नंताद्बहुव्रीहेरुपधालोपिनो नित्यं ङीप् स्यात् संज्ञा छंदसोः
सुराज्ञी नाम नगरी अन्यत्र पूर्वेण विकल्प एव वेदे शतमूर्ध्नी केवलमामकभागधेयपापापरसमानार्यकृत
सुमंगलभेषजाच्च एभ्यो नवभ्यो नित्यं ङीप् स्यात् संज्ञा छंदसोः अथो त इंद्रः केवलीर्विशः भागधेयी पापी
अपरी समानी आर्यकृती सुमंगली भेषजी अन्यत्र केवला इत्यादि मामकग्रहणं नियमार्थं अणंतत्वादेव
सिद्धेः तेन लोके असंज्ञायां मामिका अंतर्वत्पतिवतोर्नुक् एतयोर्नुक् स्यात् स्त्रियां ऋन्नेभ्यो ङीप् गर्भिण्यां जी
वद्भर्तृकायां च प्रकृतिभागौ निपात्येते तत्रांतरस्त्यस्यां गर्भ इति विग्रहे अंतः शब्दस्याधिकरणशक्तिप्रधानतया

ऽस्तिसामानाधिकरण्याभावादप्राप्तोमतुप्निपात्यते पतिवत्नीत्यत्रतुवत्वंनिपात्यते अंतर्वत्नी पतिवत्नी प्रत्यु
दाहरणंतु अंतरस्त्यस्यांशालायांघटः पतिमती पृथ्वी पत्युर्नोयज्ञसंयोगे पतिशब्दस्यनकारादेशः स्याद्यज्ञसंबं
धे वसिष्ठस्यपत्नी तत्कर्तृकयज्ञस्यफलभोक्त्रीत्यर्थः दंपत्योः सहाधिकारात् विभाषा सपूर्वस्य पतिशब्दां
तस्य सपूर्वस्यप्रातिपदिकस्यनोवास्यात् गृहस्यपतिर्गृहपतिः गृहपत्नी अनुपसर्जनस्येती होत्तरार्थमनुवृत्त
मपिनपत्युर्विशेषणं तेनबहुव्रीहावपिदृढपत्नी दृढपतिः वृषलपत्नी अथवृषलस्यपत्नीतिव्यस्तेकथमिति
चेत् पत्नीवपत्नीत्युपचारात् यद्वा आचारक्विबंतात्कर्त्तरिक्विप् अस्मिंश्चपक्षेपत्नि यौपत्नियइति यङ्विष
येविशेषः सपूर्वस्यकिं गवांपतिः स्त्री नित्यंसपत्न्यादिषु पूर्वविकल्पापवादः समानस्यसभावोनिपा
त्यते समानःपतिर्यस्याः सासपत्नी एकपत्नी वीरपत्नी पूतक्रतोरैच अस्यस्त्रियामैआदेशोङीप्च इयं-
त्रिसूत्री पुंयोगएवेष्यते पूतक्रतोः स्त्रीपूतक्रतायी ययातुक्रतवःपूताःस्यात् पूतक्रतुरेवसा वृषाकप्यग्नि
कुसितकुसिदानामुदात्तः एषांउदात्तऐआदेशःस्यात्ङीप्च वृषाकपेः स्त्रीवृषाकपायी हरविष्णूवृषाक
पीत्यमरः वृषाकपायीश्रीगौर्यो रितिच अग्नायी कुसितायी कुसिदायी कुसितशब्दोह्रस्वमध्योनतुदीर्घम
ध्यः मनोरौवा मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्चवा ताभ्यांसन्नियोगशिष्टोङीप्च मनोः स्त्रीमनायी
मनावी मनुः वर्णादनुदात्तात्तोपधात्तोनः वर्णवाचीयोऽनुदात्तांतस्तोपधस्तदंतादनुपसर्जनात्प्रातिपदिकाद्वा
स्त्रियांङीप्स्यात्तकारस्यनकारादेशश्च एता एनी रोहिता रोहिणी वर्णानांतणतिनितांतानामितिफिट्
सूत्रेणाद्युदात्तः त्र्येण्याचशलल्येतिगृह्यसूत्रंत्रीण्येतानि यस्याइतिबहुव्रीहिः अनुदात्तात्किं श्वेता घृता

दीनांचेत्स्वंतोदात्तोऽयं अतइत्येव शितिःस्त्री पिशंगादुपसंख्यानं पिशंगा पिशंगी असितपलितयो
र्न असिता पलिता छंदसि क्नमेके असिक्नी पलिक्नी अवदातशब्दस्तु नवर्णवाची किंतुविशुद्धवाची तेना
वदातेत्येव अन्यतोङीष् तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तांतात्प्रातिपदिकात् स्त्रियांङीष्स्यात् कल्माषी
सारंगी लघावंतेद्वयोश्चबह्वषोगुरुरितिमध्योदात्तावेतौ अनुदात्तांतात्किं कृष्णा कपिला षिद्गौरादिभ्यश्च
षिद्भ्योगौरादिभ्यश्चङीष्स्यात् नर्तकी गौरी अनडुही आमुङीषिवावाच्यः अनड्वाही पिप्पल्यादयश्च
आकृतिगणोऽयं सूर्यतिष्यागस्त्यमत्स्यानांयउपधायाः अंगस्योपधायायस्यलोपः स्यात्सचेद्यः सूर्याद्यव
यवः मत्स्यस्यङ्यां सूर्यागस्त्ययोश्छेचङ्यांच तिष्यपुष्ययोर्नक्षत्राणियलोपइतिवाच्यं मत्सीमातरिषि
च्चेति षित्वादेवसिद्धेगौरादिषुमातामहीशब्दपाठादनित्यःषितांङीष् दंष्ट्रा जानपदकुंडगोणस्थलभाजना
गकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथु
नेच्छाकेशवेशेषु एभ्य एकादशभ्यःप्रातिपदिकेभ्यःक्रमाद्वृत्त्यादिष्वर्थेषुङीप्स्यात् जानपदीवृत्तिश्चेत् अ
न्यातुजानपदा उत्सादित्वादञंतत्वेनटिड्ढेतिङीप्याद्युदात्तः कुंडी अमत्रंचेत् कुंडान्या कुडिदाहे गुरोश्चह
लइत्यप्रत्ययः यस्तुअमृतेजारजः कुंडइतिमनुष्यजातिवचनस्ततोजातिलक्षणोङीष्भवत्येव अमत्रेहि
स्त्रीविषयत्वादप्राप्तोङीष् विधीयते नतुनियम्यते गोणी आवपनंचेत् गोणान्यास्थली अकृत्रिमाचेत्
स्थलान्या भाजी श्राणाचेत् भाजान्या नागी स्थूलाचेत् नागान्या गजवाचीनागशब्दः स्थौल्यगुणयोगाद
न्यत्रप्रयुक्तउदाहरणं सर्पवाचीतुदैर्घ्यगुणयोगादन्यत्रप्रयुक्तःप्रत्युदाहरणं काली वर्णश्चेत् कालान्या नीली

आनाच्छादनंचेत् नीलान्या नील्यारक्ताशाटीत्यर्थः नील्याअन्वक्तव्य इत्यन् अनाच्छादनेपिनसर्वत्र किंतुनीला
दोषधौ नीली प्राणिनिच नीलीगौः संज्ञायांवा नीली नीला कुशी अयोविकारश्चेत् कुशान्या कामुकी मैथुने
च्छाचेत् कामुकान्या कबरी केशानांसन्निवेशविशेषः कबरान्या चित्रेत्यर्थः शोणात्प्राचां शोणी शोणा वोतो
गुणवचनात् उदंतात् गुणवाचिनोवा ङीष्स्यात् मृद्वी मृदुः उतः किं शुचिः गुणेति किं आखुः खरुसंयोगोप
धान्न खरुः पतिंवरा कन्या पांडुः बह्वादिभ्यश्च एभ्योवाङीष् बह्वी बहुः कृदिकारादक्तिनः रात्रिः रात्री स
र्वतो ऽक्तिन्नर्थादित्येके शकटी शकटिः अक्तिन्नर्थोत्किं अजननिः क्तिन्नंतत्वादप्राप्तेविध्यर्थं पद्धतिशब्दोग-
णेपठ्यते हिमकाषिहतिषुचेतिपद्भावः पद्धतिः पद्धती पुंयोगादाख्यायां यापुमाख्यापुंयोगात्स्त्रियांव
र्त्ततेततोङीष्स्यात् गोपस्यस्त्रीगोपी पालकांतान्न गोपालिका अश्वपालिका सूर्याद्देवतायांचापूवाच्यः
सूर्यस्यस्त्रीदेवतासूर्या देवतायांकिं सूरी कुंती मानुषीयं इंद्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमा
तुलाचार्याणामानुक् एषामानुगागमः स्यात्ङीष्च इंद्रादीनांषण्णांमातुलाचार्ययोश्चपुंयोगएवेष्यते तत्र-
ङीषिसिद्धेअनुगागममात्रंविधीयते इतरेषांचतुर्णामुभयं इंद्राणीत्यादि हिमारण्ययोर्महत्वे महद्धिमंहिमा
नी अरण्यानी यवाद्दोषे दुष्टोयवोयवानी यवनाल्लिप्यां यवनानांलिपिर्यवनानी मातुलोपाध्याययोर्वानु
ग्वा मातुलानी मातुली उपाध्यायानीउपाध्यायी यातुस्वयमेवाध्यापिकातत्रवाङीष्वाच्यः उपाध्यायी उ-
पाध्याया आचार्यादणत्वंच आचार्यस्यस्त्री आचार्यानी पुंयोग इत्येव आचार्या स्वयंव्याख्यात्री अर्यक्ष
त्रियाभ्यांवास्वार्थेअर्याणी अर्या स्वामिनीवैश्यावेत्यर्थः क्षत्रियाणी क्षत्रिया पुंयोगेतु अर्यी क्षत्रियी

कथंतर्हि ब्रह्माणीति ब्रह्माणमानयतिजीवयतीतिकर्मण्यण् क्रीतात्करणपूर्वात् क्रीतांताददंतात्करणादेः स्त्रियां
ङीष्स्यात् वस्त्रक्रीती क्वचिन्न धनक्रीता क्तादल्पाख्यायां करणादेः क्तांताददंतात्ङीष्स्याद् ल्पत्वेद्योत्ये अभ्र
लिप्तीद्यौः बहुव्रीहेश्चांतोदात्तात् बहुव्रीहेः क्तांतादंतो दात्तादंतात् स्त्रियांङीष्स्यात् जातिपूर्वादिति वक्तव्यं
तेनबहुनञ्सुकालसुखादिपूर्वान्न ऊरुभिन्नी नेह बहुकृता जातांतान्न दंतजाता पाणिगृहीतीभार्यायां पा
णि गृहीतान्या अस्वांगपूर्वपदाद्वा पूर्वेणनित्येप्राप्तेविकल्पो ऽयंसुरा पीती सुरापीता अंतोदात्तात्किं वस्त्र
च्छन्ना अनाच्छादनादित्युदात्तनिषेधः अतएव पूर्वेणापि नङीष् स्वांगाच्चोपसर्जनादसंयोगोपधात् असं
योगोपधमुपसर्जनं यत्स्वांगं तदंताददंतात्प्रातिपदिकाद्वाङीष् केशानतिक्रांतातिकेशी अतिकेशा चंद्रमुखी
चंद्रमुखा संयोगोपधात्तु सुगुल्फा उपसर्जनात्किं शोभनाशिकासु शिखास्वांगंत्रिधा अद्रवंमूर्तिमत्स्वां
गंप्राणिस्थम विकारजं सुस्वेदा द्रवत्वात् सुज्ञाना अमूर्त्तत्वात् सुमुखाशाला अप्राणिस्थत्वात् सुशोफाधि-
कारजत्वात् अतत्स्थंतत्र दृष्टंच सुकेशी सुकेशावारथ्या अप्राणिस्थस्यापिप्राणिनि दृष्टत्वात् तेनचेत्तत्तथा
युतं सुस्तनी सुस्तनावा प्रतिमा प्राणिवत्प्राणिसदृशेस्थितत्वात् नासिकोदरौष्ठजंघादंतकर्णशृंगाच्च ए
भ्योवाङीष् आद्ययोर्बह्वज्लक्षणोनिषेधोबाध्यते पुरस्तादपवादन्यायात् ओष्ठादीनांपंचानांतु असंयो
गोपधादितिबाध्यते मध्ये ऽपवादन्यायात् सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्यबाधकः तुंगनासिकी
तुंगनासिकेत्यादि नेह सहनासिका अनासिका अत्रवृत्तिः अंगगात्रकंठेभ्योवक्तव्यं स्वंगी स्वंगेत्या
दि एतच्चानुक्तसमुच्चयार्थेनचकारेण संग्राह्यमितिकेचित् भाष्याद्यनुक्तत्वादप्रमाणमितिप्रामाणिकाः

अत्रवार्तिकानि पुच्छाच्च सूपुच्छी सूपुच्छा कबरमणिविषशरेभ्योनित्यं कबरं चित्रंपुच्छंयस्याः सा
कबरपुच्छीत्यादि उपमानात्पक्षाच्चपुच्छाच्च नित्यमित्येव उलूकपक्षीशाला उलूकपुच्छीसेना नक्रोडा
दिबह्वचः क्रोडादेर्बह्वचश्चस्वांगान्नङीष् कल्याणक्रोडा अश्वानामुरः क्रोडा आकृतिगणोऽयंसूज
घना सहनञ्विद्यमानपूर्वाच्च सहेत्यादित्रिकपूर्वान्नङीष् सकेशा अकेशाविद्यमाननासिका नखमु
खात्संज्ञायां नङीष्स्यात् शूर्पणखा गौरमुखा संज्ञायांकिं ताम्रमुखी कन्या दिक्पूर्वपदान्ङीप् दिक्पू
र्वपदात्स्वांगांतात्प्रातिपदिकात् परस्यङीषोङी बादेशःस्यात् प्राङ्मुखी आद्युदात्तंपदं वाहः वाहांतात्प्रा
तिपदिकात्ङीष्स्यात् ङीषेवानुवर्तते नङीप् दित्यवाट्चमेदित्यौहीन्वमे सख्यशिश्वीतिभाषायां इति
शब्दः प्रकारेभाषायामित्यस्यानंतरंद्रष्टव्यः तेनच्छंदस्यपिक्वचित् सखी अशिश्वी आधेनवोधुनयंता
मशिश्वीः जातेरस्त्रीविषयादयोपधात् जातिवाचियन्नचस्त्रियांनियतमयोपधंततः स्त्रियांङीष्स्या
त् आकृतिग्रहणाजातिः अनुगतसंस्थानव्यंग्येत्यर्थः तटी लिंगानांचनसर्वभाक् सकृदाख्यातनिर्ग्रा
ह्या असर्वलिंगत्वेसति एकस्यांव्यक्तौकथनात्व्यक्त्यंतरे कथनंविनापिसुग्रहाजातिरितिलक्षणांतरं वृष
ली सत्यंतंकिं शुक्ला सकृदित्यादिकिं देवदत्ता गोत्रंचचरणैःसह अपत्यप्रत्ययांतः शाखाध्येतृवाचीचश
ब्दोजातिकार्यंलभत इत्यर्थः औपगवी कठी बह्वृची ब्राह्मणीत्यत्रतुशार्ङ्गरवादिपाठात्ङीनाङीष्बा-
ध्यते जातेःकिं मुंडा अस्त्रीविषयात्किं बलाका अयोपधात्किं क्षत्रिया योपधप्रतिषेधेगवयहयमुक
यमत्स्यमनुष्याणामप्रतिषेधः गवयी हयी मुकयी हलस्तद्धितस्येति यलोपः मत्स्यस्यङ्यां मत्सी

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपिङीष्स्यात् ओदनपाकी शं
कुकर्णी शालपर्णी शंखपुष्पी दासीफली दर्भमूली गोवाली ओषधिविशेषेरूढाएते इतोमनुष्यजातेः ङीष्स्यात् दा-
क्षी योपधादपि उदमेयस्यापत्यमौदमेयी मनुष्येतिकिं तित्तिरिः ऊङुतः उकारांतादयोपधान्मनुष्यजातिवाचिनःस्त्रि
यामूङ्स्यात् कुरूः कुरुनादिभ्योण्यः तस्यस्त्रियामवंतीत्यादिनालुक् अयोपधात्किं अध्वर्युर्ब्राह्मणी अप्राणिजा
तेश्चारज्ज्वादीनामुपसंख्यानं रज्ज्वादिपर्युदासादुवर्णांतेभ्यएव अलाब्वा कर्कंध्वा अनयोर्दीर्घांतत्वेपिनोङ्धा
त्वोरितिविभक्त्युदात्तत्वप्रतिषेधऊङः फलं प्राणिजातेस्तु कृकवाकुः कृकवाकुस्ताम्रचूड इत्यमरः रज्ज्वादेस्तु र
ज्जुः हनुः बाह्वंतात्संज्ञायां स्त्रियामूङ् भद्रबाहूः संज्ञायांकिं वृत्तबाहुः पंगोश्च पंगूः श्वशुरस्योकाराकार
लोपश्च चादूङ् पुंयोगलक्षणस्यङीषोऽपवादः लिंगविशिष्टपरिभाषयास्वादयः श्वश्रूः ऊरूत्तरपदादौपम्ये उप
मानवाचिपूर्वपदं ऊरूत्तरपदंयत् प्रातिपदिकंतस्मादूङ्स्यात् करभोरूः संहितशफलक्षणवामादेश्च अनौप-
म्यार्थसूत्रं संहितोरूः सैवशफोरूः शफौखुरौताविवसंश्लिष्टत्वादुपचारात् लक्षणशब्दादर्शआद्यच् लक्षणोरूः
वामोरूः सहितसहाभ्यांचेतिवाच्यं हितेनसह सहितौऊरूयस्याः सासहितोरूः सहेतेइतिसहौऊरूयस्याः
साासहोरूः यद्वाविद्यमानवचनस्यसहशब्दस्यऊर्वतिशयप्रतिपादनायप्रयोगः संज्ञायांकुद्रुकमंडल्वोः स्त्रि
यामूङ्स्यात् कद्रूः कमंडलूः संज्ञायांकिं कद्रुः कमंडलुः अच्छंदोर्थंवचनं शार्ङ्गरवाद्यञोङीन् शार्ङ्गरवादेरञो
योऽकारस्तदंताच्चजातिवचनोङीन्स्यात् शार्ङ्गरवी बैदी जातेरित्यनुवृत्तेः पुंयोगेङीषेव नृनरयोर्वृद्धिश्चेतिग
णसूत्रं नारी यङश्चाप् यङंतात्स्त्रियांचाप्स्यात् ञ्यङ्ष्यङोः सामान्यग्रहणं आंब ष्ठ्या कारीषगंध्या षाः

द्यञश्चाब्वाच्यः पौतिमाष्या अवट्याञ्च अस्माञ्चास्यात् यञश्चेतिङीषोपवादः अवटशब्दोगर्गादिः आवट्या तद्धि
ताः आपंचमसमाप्तेरधिकारोऽयं यूनस्तिः युवन्शब्दात्तिप्रत्ययःस्यात्सचतद्धितः लिंगविशिष्टपरिभाषयासिद्धे-
तद्धिताधिकारउत्तरार्थः युवतिः अनुपसर्जनादित्येव बहवोयुवानोयस्यांसा बहुयुवा युवतीतितुयौतेःशत्रंतान्
ङीपिबोध्यं इतिस्त्रीप्रत्ययाःसमाप्ताः प्रातिपदिकार्थलिंगपरिमाणवचनमात्रेप्रथमा नियतोपस्थि
तिकः प्रातिपदिकार्थः मात्रशब्दस्यप्रत्येकंयोगः प्रातिपदिकार्थमात्रेलिंगमात्राद्याधिक्येपरिमाणमात्रेसंख्या-
मात्रेचप्रथमास्यात् उच्चैः नीचैः कृष्णः श्रीः ज्ञानं अलिंगानियतलिंगाश्चप्रातिपदिकार्थमात्रइत्यस्योदाहरणं
अनियतलिंगास्तुलिंगमात्राधिक्यस्य तटः तटी तटं परिमाणमात्रे द्रोणोव्रीहिः द्रोणरूपंयत्परिमाणंतत्परि
च्छिन्नइत्यर्थः प्रत्ययार्थेपरिमाणेप्रकृत्यर्थोऽभेदेनसंसर्गेणविशेषणं प्रत्ययार्थस्तुपरिच्छेद्यपरिच्छेदकभा
वेनव्रीहौविशेषणमितिविवेकः वचनंसंख्या एकः द्वौ बहवः इहोक्तार्थत्वात्विभक्तेरप्राप्तौवचनं संबोधनेचइ
हप्रथमास्यात् हेराम इतिप्रथमा कारके इत्यधिकृत्य कर्तुरीप्सिततमंकर्म कर्तुःक्रिययाप्तुमिष्टतमंकारकं
कर्मसंज्ञंस्यात् कर्तुःकिं माषेष्वश्वंबध्नाति कर्मणईप्सितामाषानतुकर्त्तुः तमप्ग्रहणंकिं पयसा ओदनंभुंक्ते क-
र्मेत्यनुवृत्तौकर्मग्रहणंआधारनिवृत्त्यर्थं अन्यथागेहंप्रविशतीत्यत्रैवस्यात् अनभिहिते इत्यधिकृत्य कर्मणि
द्वितीया अनुक्तेकर्मणिद्वितीयास्यात् हरिंभजति अभिहितेतुकर्मणिप्रातिपदिकार्थमात्रइति प्रथमैव अभि
धानंचप्रायेणतिङ्कृत्तद्धितसमासैः तिङ् हरिःसेव्यते कृत् लक्ष्म्यासेवितः तद्धितः शतेनक्रीतः शत्यः शतिकः
समासः प्राप्तआनंदोयंप्राप्तानंदः क्वचिन्निपातेनाभिधानं यथाविषवृक्षोऽपिसंवर्ध्यस्वयंच्छेत्तुमसांप्रतं सांप्र

तमित्यस्यहियुज्यतइत्यर्थः तथायुक्तंचानीप्सितं ईप्सिततमवत्क्रिययायुक्तमनीप्सितमपिकारकंकर्मसंज्ञंस्या
त् ग्रामंगच्छंस्तृणंस्पृशति विषंभक्षते अकथितंच अपादानादिविशेषैरविवक्षितंकारकंकर्मसंज्ञंस्यात् दुह्या
च्पच्दंड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषां कर्मयुक्स्यादकथितंतथास्यान्नीहृकृष्वहां दुह्यादीनांद्वादशानांत-
थानीप्रभृतीनांचचतुर्णांकर्मणायद्युज्यतेतदेवाकथितंकर्मेतिपरिगणनंकर्त्तव्यमित्यर्थः गांदोग्धिपयः बलिंया
चतेवसुधां अविनीतं विनयंयाचते तंदुलानोदनंपचति गर्गान्शतंदंडयति व्रजमवरुणद्धिगां माणवकंपंथानं
पृच्छति वृक्षमवचिनोतिफलानि माणवकंधर्मंब्रूतेशास्तिवा शतंजयतिदेवदत्तं सुधांक्षीरनिधिंमथ्नाति देव
दत्तंशतंमुष्णाति ग्राममजांनयति हरति कर्षति वहतिवा अर्थनिबंधनेयंसंज्ञा बलिंभिक्षतेवसुधां माणव-
कंधर्मंभाषतेअभिधत्तेवक्तीत्यादि कारकंकिं माणवकस्यपितरंपंथानंपृच्छति अकर्मकधातुभिर्योगेदेशःका
लोभावोगंतव्योऽध्वाचकर्मसंज्ञकइतिवाच्यं कुरून्स्वपिति मासमास्ते गोदोहमास्ते क्रोशमास्ते गतिबुद्धि
प्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्तासणौ गत्याद्यर्थानांशब्दकर्मकाणामकर्मकाणांचाणौयःकर्त्ता
सणौकर्मस्यात् शत्रूनगमयत्स्वर्गंवेदार्थंस्वानवेदयत् आशयच्चामृतंदेवान्वेदमध्यापयद्विधिं आसयत्सलिले
पृथ्वींयःसमेश्रीहरिर्गतिः गतीत्यादिकिं पाचयत्योदनंदेवदत्तेन अण्यंतानांकिं गमयतिदेवदत्तोयज्ञदत्तंतमप
रःप्रयुंक्तेगमयतिदेवदत्तेनयज्ञदत्तंविष्णुमित्रः नीवह्योर्न नाययतिवाहयतिवाभारंभृत्येन नियंतृकर्तृकस्य
वहेरनिषेधः वाहयतिरथंवाहान्सूतः आदिखाद्योर्न आदयतिखादयतिवान्नंबटुना भक्षेरहिंसार्थस्यन
भक्षयत्यन्नंबटुना अहिंसार्थस्यकिं भक्षयतिबलिवर्दान्सस्यं जल्पतिप्रभृतीनामुपसंख्यानं जल्पयतिभा-

षयतिवाधर्मंपुत्रंदेवदत्तः दृशेश्च दर्शयतिहरिंभक्तान् सूत्रेज्ञानसामान्यार्थानामेवग्रहणं नतुतद्विशेषार्थानामि
त्यनेनज्ञाप्यते तेनस्मरतिजिघ्रतीत्यादीनांन स्मारयति घ्रापयतिदेवदत्तेन शब्दायतेर्न शब्दाययतिदेवदत्ते
न धात्वर्थसंगृहीतकर्मत्वेनाकर्मकात्वात्प्राप्तिः येषांदेशकालादिभिन्नंकर्मनसंभवति तेऽत्राकर्मकाः नत्वविव
क्षितकर्माणोऽपि तेनमासमासयतिदेवदत्तमित्यादौकर्मत्वंभवति देवदत्तेनपाचयतीत्यादौतुन ह्रक्रोरन्यतर
स्यां ह्रक्रोरणौयःकर्तासणौवाकर्मस्यात् हारयतिकारयतिवाभृत्यंभृत्येनवा कटं अभिवादिदृशोरात्मनेपदेवे
तिवाच्यं अभिवादयते दर्शयतेदेवंभक्तंभक्तेनवा अधिशीङ्स्थासांकर्म अधिपूर्वाणामेषामाधारःकर्मस्यात् अ
धिशेते अधितिष्ठति अध्यास्तेवावैकुंठंहरिः अभिनिविशश्च अभिनीत्येतत्संघातपूर्वस्यविशतेराधारःकर्मस्या
त् अभिनिविशतेसन्मार्गं परिक्रयणेसंप्रदानमितिसूत्रादिहमंडूकप्लुत्यान्यतरस्याम्ग्रहणमनुवर्त्यव्यवस्थित-
विभाषाश्रयणात् क्वचिन्न पापेऽभिनिवेशः उपान्वध्याङ्वसः उपादिपूर्वस्यवसतेराधारःकर्मस्यात् उपवस
ति अनुवसति अधिवसति आवसतिवावैकुंठंहरिः अभक्त्यर्थस्यन वनेउपवसति उभसर्वतसोः कार्या-
धिगुपर्यादिषुत्रिषु द्वितीयाम्रेडितांतेषुततोऽन्यत्रापिदृश्यते १ उभयतः कृष्णंगोपाः सर्वतःकृष्णंधि
क्कृष्णाभक्तं उपर्युपरिलोकंहरिः अध्यधिलोकं अधोधोलोकम् अभितःपरितःसमयानिकषाहाप्रतियो
गेऽपि अभितःकृष्णं परितःकृष्णं ग्रामंसमया निकषालंकां हाकृष्णाभक्तं तस्यशोच्यतेइत्यर्थः बुभुक्षितं
नप्रतिभातिकिंचित् अंतरांतरेणयुक्ते आभ्यांयोगेद्वितीयास्यात् अंतरात्वांमांहरिः अंतरेणहरिंनसु-
खं कर्मप्रवचनीयाइत्यधिकृत्य अनुर्लक्षणे लक्षणेद्योत्येऽनुरुक्तसंज्ञःस्यात् गत्युपसर्गसंज्ञापवादःकर्म

प्रवचनीययुक्तेद्वितीया एतेनयोगेद्वितीयास्यात् जपमनुप्रावर्षत् हेतुभूतजपोपलक्षितंवर्षणमित्यर्थः
परापिहेतौतृतीयानेनबाध्यते लक्षणेत्थंभूतेत्यादिनासिद्धे पुनः संज्ञाविधानसामर्थ्यात् तृतीयार्थे अस्मि
न्द्योत्ये ऽनुरुक्तसंज्ञः स्यात् नदीमन्ववसितासेना नद्यासहसंबद्धेत्यर्थः षिञ्बंधनेक्तः हीने हीनेद्योत्ये ऽनुः
प्राग्वत् अनु हरिंसुराः हरेर्हीना इत्यर्थः उपो ऽधिकेच अधिकेहीनेचद्योत्येउपेत्ययंप्राक्संज्ञः स्यात् अधि
केसप्तमीवक्ष्यते हीने उपहरिंसुराः लक्षणेत्थंभूताख्यानभागवीप्सासुप्रतिपर्यनवः एष्वर्थेषुविषयभूतेषुप्र-
त्यादयउक्तसंज्ञाः स्युः लक्षणे वृक्षंप्रतिपर्यनुवाविद्योततेविद्युत् इत्थंभूताख्याने भक्तोविष्णुंप्रतिपर्यनुवा भागे ल
क्ष्मीर्हरिंप्रतिपर्यनुवा हरेर्भागइत्यर्थः वीप्सायां वृक्षंवृक्षंप्रतिपरिअनुवासिंचति अत्रोपसर्गत्वाभावान्नषत्वं
एषुकिं परिषिंचति अभिरभागे भागवर्जेलक्षणादावभिरुक्तसंज्ञः स्यात् हरिमभिवर्त्तते भक्तोहरिमभि
देवंदेवमभिषिंचति अभागेकिं यदत्रममाभिष्यात्तद्दीयतां अधिपरीअनर्थकौ उक्तसंज्ञौस्तः कुतो ऽध्याग-
च्छति कुतःपर्यागच्छतिगतिसंज्ञाभावात्गतिर्गतावितिनिघातोन सुः पूजायां सुसिक्तं सुस्तुतं अनुप
सर्गत्वान्नषः पूजायांकिं सुषिक्तंकिंतवात्रक्षेपोयं अतिरतिक्रमणेच अतिक्रमणेपूजायांचातिः कर्मप्र
वचनीयः स्यात् अतिदेवान्कृष्णः अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु एषुद्योत्येषुअपिरु
क्तसंज्ञः स्यात् सर्पिषो ऽपिस्यात् अनुपसर्गत्वान्नषः संभावनायांलिङ् तस्याएवविषयभूतेभवनेकर्तृ
दौर्लभ्यंद्योतयन्नपिशब्दः स्यादित्यनेनसंबध्यते सर्पिषइतिषष्ठीत्वपिशब्दबलेनगम्यमानस्यबिंदोर
वयवावयवीभावसंबंधे इयमेवत्वपिशब्दस्यपदार्थद्योतकत्वानाम द्वितीयातुनेह प्रवर्त्तते सर्पिषो

बिंदुना योगे नत्वपि नेरुक्तत्वात् अनुसर्गत्वान्नषः अपिस्त्कयाद्विष्णुं संभावनंशक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः अपिस्तुहि अन्ववसर्गः कामचारानुज्ञा धिग्देवदत्तमपिस्त्कयाद्वृषलं गर्हा अपिसिंच अपिस्तुहि समुच्चये कालाध्वनोरत्यंतसंयोगे इहद्वितीयास्यात् मासंकल्याणी मासमधीते मासंगुडधानाः क्रोशंकुटिला नदी क्रोशमधीते क्रोशंगिरिः अत्यंतसंयोगे किं मासस्यद्विरधीते क्रोशस्यैकदेशेपर्वतः इतिद्वितीया स्वतंत्रः कर्त्ता क्रियायां स्वातंत्र्येणविवक्षितोर्थः कर्त्तास्यात् साधकतमंकरणं क्रियासिद्धौप्रकृष्टोपकारकंकरणसंज्ञंस्यात् तमप्ग्रहणंकिं गंगायांघोषः कर्तृकरणयोस्तृतीया अनभिहिते कर्त्तरिकरणेचतृतीया स्यात् रामेणबाणेनहतोवाली प्रकृत्यादिभ्यउपसंख्यानं प्रकृत्याचारुः प्रायेणयाज्ञिकः गोत्रेणगार्ग्यः समेनैति विषमेणैति द्विद्रोणेनधान्यंक्रीणाति सुखेनदुःखेनवा यातीत्यादि दिवः कर्मच दिवःसाधकतमंकर्मसंज्ञंस्यात्चात्करणसंज्ञं अक्षैरक्षान्वादीव्यति अपवर्गे तृतीया अपवर्गःफलप्राप्तिस्तस्यांद्योत्यायांकालाध्वनोरत्यंतसंयोगे तृतीयास्यात् अन्हाक्रोशेनवाअनुवाकोऽधीतः अपवर्गेकिं मासमधीतोनायातः सहयुक्तेप्रधाने सहार्थेनयुक्ते अप्रधाने तृतीयास्यात् पुत्रेणसहागतःपिता एवंसाकंसार्द्धंसमंयोगेऽपि विनापि तद्योगंतृतीया वृद्धोयूनेतिनिर्देशात् येनांगविकारः येनांगेनविकृतेनांगिनोविकारोलक्ष्यतेततस्तृतीयास्यात् अक्ष्णाकाणः अक्षिसंबंधिकाणत्वविशिष्टइत्यर्थः अंगविकारःकिं अक्षिकाणमस्य इत्थंभूतलक्षणे किंचित्प्रकारंप्राप्तस्यलक्षणे तृतीयास्यात् जटाभिस्तापसः जटाज्ञाप्यतापसत्वविशिष्टइत्यर्थः संज्ञोऽन्यतरस्यांकर्मणि सपूर्वस्यजानातेः कर्मणितृतीयावास्यात् पित्रापितरंवासंजानीते हेतौ हेत्वर्थे

तृतीयास्यात् द्रव्यादिसाधारणंनिर्व्यापारसाधारणंच हेतुत्वं करणत्वंतुक्रियामात्रविषयंव्यापारनियतंच
दंडेनघटः पुण्येनदृष्टोहरिः फलमपीहहेतुः अध्ययनेनवसति गम्यमानापिक्रियाविभक्तौप्रयोजिका अ
लंश्रमेण श्रमेणसाध्यंनास्तीत्यर्थः इहसाधनक्रियां प्रति श्रमः करणं शतेनशतेनवत्सान्पाययतिपयः शा
तेनपरिच्छिद्येत्यर्थः अशिष्टव्यवहारेदाणः प्रयोगेचतुर्थ्यर्थेतृतीया दास्यासंयच्छतेकामुकः धर्मेतुभा
र्यायैसंयच्छति कर्मणायमभिप्रैतिससंप्रदानं दानस्यकर्मणायमभिप्रैतिससंप्रदानसंज्ञः स्यात् च
तुर्थीसंप्रदाने विप्रायगांददाति अनभिहितइत्येव दानीयोविप्रः क्रिययायमभिप्रैतिसोऽपिसंप्रदानं
पत्येशेते कर्मणः करणसंज्ञासंप्रदानस्यचकर्मसंज्ञा पशुनारुद्रंयजते पशुंरुद्रायददातीत्यर्थः रुच्य
र्थानांप्रीयमाणः रुच्यर्थानांधातूनांप्रयोगेप्रीयमाणोऽर्थः संप्रदानंस्यात् हरयेरोचतेभक्तिः अन्यकर्तृ
कोऽभिलाषोरुचिः हरिनिष्ठप्रीतेर्भक्तिः कर्त्री प्रीयमाणः किं देवदत्तायरोचतेमोदकः पथि श्लाघह्नुङ्-
स्थाशपांज्ञीप्स्यमानः एषांप्रयोगेबोधयितुमिष्टः संप्रदानंस्यात् गोपीस्मरात्कृष्णायश्लाघते ह्नुतेति
ष्ठते शपतेवाज्ञीप्स्यमानः किं देवदत्तायश्लाघतेपथि धारेरुत्तमर्णः धारयतेः प्रयोगेउत्तमर्णउक्तसंज्ञः
स्यात् भक्तायधारयतिमोक्षंहरिः उत्तमर्णः किं देवदत्तायशतंधारयतिग्रामे स्पृहेरीप्सितः स्पृहयतेः प्रयोगे
इष्टः संप्रदानंस्यात् पुष्पेभ्यः स्पृहयति ईप्सितः किं पुष्पेभ्योवनेस्पृहयति ईप्सितमात्रेइयंसंज्ञा प्रकर्षविव
क्षायांतुपरत्वात्कर्मसंज्ञा पुष्पाणिस्पृहयति क्रुधद्रुहेर्ष्यासूयार्थानांयंप्रतिकोपः क्रुधाद्यर्थानांप्रयोगे
यंप्रतिकोपः सउक्तसंज्ञः स्यात् हरयेक्रुध्यतिद्रुह्यतिईर्ष्यति असूयति यंप्रतिकोपः किं भार्यामीर्ष्यति

मैनामन्योऽद्राक्षीदिति क्रोधोऽमर्षः द्रोहोऽपकारः ईर्ष्याऽक्षमा असूयागुणेषुदोषाविष्करणं द्रोहादयोऽपि
कोपप्रभवा एवगृह्यंते अतोविशेषणंसामान्येन यंप्रतिकोप इतिक्रुधद्रुहोरुपसृष्टयोः कर्म सोपसर्गयोरनयो
र्यंप्रतिकोपस्तत्कारकंकर्मसंज्ञंस्यात् क्रूरमभिक्रुध्यति अभिद्रुह्यति राधीक्ष्योर्यस्यविप्रश्नः एतयोःका
रकंसंप्रदानंस्यात् यदीयोविविधःप्रश्नःक्रियते कृष्णायराध्यति ईक्षतेवा पृष्टोगर्गः शुभाशुभंपर्यालो
चयतीत्यर्थः प्रत्याङ्भ्यांश्रुवःपूर्वस्यकर्ता आभ्यांपरस्यशृणातेः प्रयोगे पूर्वस्यप्रवर्तनारूपव्यापारस्य-
कर्तासंप्रदानंस्यात् विप्रायगांप्रतिशृणोति आशृणोतिवा विप्रेणमह्यंदेहीतिप्रवर्तितःप्रतिजानीतइत्यर्थः अनुप्रतिगृणश्च
आभ्यांगृणातेः कारकंपूर्वव्यापारस्यकर्तृभूतमुक्तसंज्ञंस्यात् होत्रेऽनुगृणाति प्रतिगृणाति होताप्रथमंशं
सतितमध्वर्युः प्रोत्साहयतीत्यर्थः परिक्रयणेसंप्रदानमन्यतरस्यां नियतकालंभृत्यास्वीकरणंपरिक्र
यणंतस्मिन्साधकतमंकारकंवासंप्रदानंस्यात् शतेनशतायवापरिक्रीतः तादर्थ्येचतुर्थीवाच्या मुक्त
येहरिंभजति क्लृपिसंपद्यमानेच भक्तिर्ज्ञानायकल्पते संपद्यते जायते इत्यादि उत्पातेनज्ञापितेच वा
तायकपिलाविद्युत् हितयोगेच ब्राम्हणायहितं क्रियार्थोपपदस्यचकर्मणिस्थानिनः क्रियार्थाक्रि
क्रियासाउपपदंयस्यतस्यस्थानिनोऽप्रयुज्यमानस्यतुमुनः कर्मणिचतुर्थीस्यात् फलेभ्योयाति फला
न्याहर्तुंयातीत्यर्थः नमस्कुर्मोनृसिंहाय नृसिंहमनुकूलयितुमित्यर्थः एवंस्वयंभुवेनमस्कृत्येत्यादावपि
तुमर्थाच्चभाववचनात् भाववचनाश्चेतिसूत्रेणयोविहितस्तदंताच्चतुर्थीस्यात् यागाययाति यष्टुंयाती
त्यर्थः नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च एभिर्योगेचतुर्थीस्यात् हरयेनमः उपपदविभक्तेः कार

कविभक्तिर्बलीयसी नमस्करोति देवान् प्रजाभ्यः स्वस्ति अग्नये स्वाहा पितृभ्यः स्वधा अलमिति पर्याप्त्यर्थग्रह
णं तेनं दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि प्रभ्वादियोगे षष्ठ्यपि साधुः तस्मै प्रभवति स एषां ग्रामणीरि
त्यादिनिर्देशात् तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धं वषडिंद्राय चकारः पुनर्विधानार्थः तेनाशीर्विवक्षायांप
रामपि चतुर्थी चाशिषीति षष्ठीं बाधित्वा चतुर्थ्येव भवति स्वस्ति गोभ्यो भूयात् मन्यकर्मण्यनादरे विभाषाप्रा
णिषु प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे नत्वां तृणं मन्ये तृणाय वा श्यना निर्देशात्तानादिकयो
गेन नत्वां तृणं मन्ये अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वक्तव्यं तेन नत्वां नावमन्नं
वा मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न नत्वां शुने मन्य इत्यत्र प्राणित्वेऽपि भवत्येव गत्यर्थकर्मणि द्वितीयाच
तुर्थ्यौ चेष्टायामनध्वनि अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायां ग्रामं ग्रामाय वा गच्छति चेष्टायां-
किं मनसा हरिं व्रजति अनध्वनीति किं पंथानं गच्छति गंत्राधिष्ठितेऽध्वन्ये वायं निषेधः यदा तूत्पथात्पथ्याए
वाक्रमितुमिष्यते तदा च तुर्थी भवत्येव उत्पथेन पथे गच्छति ध्रुवमपायेऽपादानं अपायो विश्लेषस्तस्मिन्
साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् अपादाने पंचमी ग्रामादायाति धावतोऽश्वात्पतति कारकं
किं वृक्षस्य पर्णं पतति जुगुप्साविरामप्रमादार्थानामुपसंख्यानं पापाज्जुगुप्सते विरमति धर्मात्प्रमा
द्यति भीत्रार्थानां भयहेतुः भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानं स्यात् चोराद्बिभेति चोरात्त्राय
ते भयहेतुः किं अरण्ये बिभेति त्रायते वा पराजेरसोढः पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् अध्ययनात्प
राजयते ग्लायतीत्यर्थः असोढः किं शत्रून्पराजयते अभिभवतीत्यर्थः वारणार्थानामीप्सितः प्रवृत्तिविघा

तोवारणं वारणार्थानां प्रयोगे ईप्सितो ऽर्थो ऽपादानं स्यात् यवेभ्यो गां वारयति ईप्सितः किं यवेभ्यो गां वारयति क्षे
त्रे अंतर्द्धौ येनादर्शनमिच्छति व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् मातु-
र्निलीयते कृष्णः अंतर्द्धौ किं चोरान्न दिदृक्षते इच्छति ग्रहणं किं अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्
आख्यातो पयोगे नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् उपाध्यायादधीते उपयोगे किं नटस्य गा
थां शृणोति जनिकर्तुः प्रकृतिः जायमानस्य हेतुरपादानं स्यात् ब्रह्मणः प्रजाः प्रजायंते भुवः प्रभवः भवनं भूः
भू कर्त्तुः प्रभवस्तथा हिमवतो गंगा प्रभवति तत्र प्रकाशत इत्यर्थः ल्यब्लोपे कर्मण्यधिकरणे च प्रासादात्प्रेक्ष
ते आसनात्प्रेक्षते प्रासादमारुह्यासने उपविश्य प्रेक्षत इत्यर्थः श्वशुरात् जिह्रेति श्वशुरं वीक्ष्येत्यर्थः गम्यमा
नापि क्रिया कारकविभक्तीनां निमित्तं कस्मात्त्वं नद्याः यतश्चाध्वकालनिर्माणं तत्र पंचमी तद्युक्तादध्वनः प्रथ
मासप्तम्यौ कालात्सप्तमी च वक्तव्या वनाद्ग्रामो योजने योजनं वा कार्तिक्या आग्रहायणी मासे अन्यारादि
तरर्त्तेदिक्शब्दांचूत्तरपदाजाहियुक्ते एतैर्योगे पंचमी स्यात् अन्य इत्यर्थग्रहणं इतरग्रहणं प्रपंचार्थं अन्यो-
भिन्न इतरो वा कृष्णात् आराद्वनात् ऋते कृष्णात् पूर्वो ग्रामात् दिशि दृष्टः शब्दो दिक्शब्दस्तेन संप्रति देश
कालवृत्तिना योगे ऽपि भवति चैत्रात्पूर्वः फाल्गुनः अवयववाचियोगे तु न तस्य परमाम्रेडितमिति निर्देशात्
पूर्वं कायस्य अंचूत्तरपदस्य दिक्शब्दत्वे ऽपि षष्ठ्यतसर्थेति षष्ठीं बाधितुं पृथक्ग्रहणं प्राक् प्रत्यग्वा ग्रामात्
आच् दक्षिणा ग्रामात् आहि दक्षिणाहि ग्रामात् अपादाने पंचमीति सूत्रे कार्तिक्याः प्रभृतीति भाष्यप्रयोगा
त् प्रभृत्यर्थयोगे पंचमी भवात्प्रभृति भवादारभ्य वा सेव्यो हरिः अपपरि बहिरिति समासविधानात् ज्ञापका

बहिर्योगे पंचमी ग्रामाद्बहिः अपपरी वर्जने एतौ वर्जने कर्मप्रवचनीयसंज्ञौस्तः आङ्मर्यादावचने आङ्म
र्यादायामुक्तसंज्ञः स्यात् वचनग्रहणादभिविधावपि पंचम्यपाङ्परिभिः एतैः कर्मप्रवचनीयैर्योगे पंचमी–
स्यात् अपहरेः परिहरेः संसारः परिरत्रवर्जने लक्षणादौ तु हरिं परि आमुक्तेः संसारः आसकलात् ब्रह्म प्र
तिः प्रतिनिधिप्रतिदानयोः एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् प्रति प्रतिनिधि प्रतिदाने च यस्मात् अत्र
कर्मप्रवचनीयैर्योगे पंचमी स्यात् प्रद्युम्नः कृष्णात्प्रति तिलेभ्यः प्रतियच्छति माषान् अकर्तर्यृणे पंचमी
कर्तृवर्जितं यदृणं हेतुभूतं ततः पंचमी स्यात् शताद्बद्धः अकर्त्तरि किं शतेन बंधितः विभाषा गुणेऽस्त्रियां
गुणे हेतावस्त्रीलिंगे पंचमी वा स्यात् जाड्याज्जाड्येन वा बद्धः गुणे किं धनेन कुलं अस्त्रियां किं बुद्ध्या मुक्तः
विभाषेति योगविभागादगुणे स्त्रियां च क्वचित् धूमादग्निमान् नास्ति घटोऽनुपलब्धेः पृथग्विनानानाभिस्तृ
तीयान्यतरस्यां एभिर्योगे तृतीया स्यात् पंचमीद्वितीये च अन्यतरस्यां ग्रहणं समुच्चयार्थं पंचमीद्वितीये अनु
वर्त्तेते पृथग्रामेण रामात् रामं वा एवं विनानाना करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य
एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापंचम्यौ स्तः स्तोकेन स्तोकाद्वा मुक्तः द्रव्ये तु स्तोकेन विषेण हतः दूरांति
कार्थेभ्यो द्वितीया च एभ्यो द्वितीया स्यात् चात्पंचमीतृतीये प्रातिपदिकार्थमात्रे विधिरयं ग्रामस्य दूरं दूरात्
दूरेण वा अंतिकमंतिकादंतिकेन वा असत्ववचनस्येत्यनुवृत्तेर्नेह दूरः पंथाः षष्ठी शेषे कारकप्रातिपदिका
र्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी स्यात् राज्ञः पुरुषः कर्मादीनामपि संबंधमात्रविवक्षायां षष्ठ्ये
व सतां गतं सर्पिषो जानीते मातुः स्मरति एधोदकस्योपस्कुरुते भजे शंभोश्चरणयोः फलानां तृप्तः षष्ठी हेतु

प्रयोगे हेतुशब्दस्यप्रयोगेहेतौद्योत्येषष्ठीस्यात् अन्नस्यहेतोर्वसति सर्वनाम्नस्तृतीयाच सर्वनाम्नोहेतुशब्द
स्यचप्रयोगेहेतौद्योत्येतृतीयास्यात् षष्ठीच केनहेतुनावसति कस्यहेतोः निमित्तपर्यायप्रयोगेसर्वासांप्रा
यदर्शनं किंनिमित्तंवसति केननिमित्तेनवसति कस्मैनिमित्तायेत्यादि एवंकिंकारणंकोहेतुःकिंप्रयोजनमि-
त्यादि प्रायग्रहणादसर्वनाम्नःप्रथमाद्वितीयेनस्तः ज्ञानेननिमित्तेनहरिःसेव्यः ज्ञानायनिमित्तायेत्यादि षष्ठ्यत
सर्थप्रत्ययेन एतद्योगेषष्ठीस्यात् दिक्शब्देतिपंचम्यापवादः ग्रामस्यदक्षिणतः पुरः पुरस्तात् उपर्युपरिष्टात् ए
नपाद्वितीया एनबंतेनयोगेद्वितीयास्यात् एनपेतियोगविभागात्षष्ठ्यपि दक्षिणेनग्रामंग्रामस्यवा एवमुत्तरे
ण दूरांतिकार्थैःषष्ठ्यन्यतरस्यां एतैर्योगेषष्ठीस्यात्पंचमीच दूरंनिकटंग्रामस्यग्रामाद्वा ज्ञोऽविदर्थस्यक
रणे जानातेरज्ञानार्थस्यकरणेशेषत्वेनविवक्षितेषष्ठीस्यात् सर्पिषोज्ञानं अधीगर्थदयेशांकर्मणि एषांक
र्मणिशेषेषष्ठीस्यात् मातुःस्मरणं सर्पिषोदयनं ईशनंवा कृञःप्रतियत्ने कृञः कर्मणिशेषेषष्ठीस्याद्गुणा
धाने एधोदकस्योपस्करणं रुजार्थानांभाववचनानामज्वरेः भावकर्तृकाणांज्वरिवर्जितानांरुजार्थानांक
र्मणिशेषेषष्ठीस्यात् चौरस्यरोगस्यरुजा अज्वरिसंताप्योरितिवाच्यं रोगस्यचौरज्वरः चौरसंतापोवा रोग
कर्तृकचौरकर्तृकसंबंधिज्वरादिकमित्यर्थः आशिषिनाथः आशीरर्थस्यनाथतेः कर्मणिशेषेषष्ठीस्यात्
सर्पिषोनाथनंआशिषीतिकिं माणवकनाथनं तत्संबंधिनीयाञ्चेत्यर्थः जासिनिप्रहणनाटक्राथपिषां
हिंसायां हिंसार्थानामेषांकर्मणिशेषेषष्ठीस्यात् चौरस्योज्जासनं निप्रौसंहतौविपर्यस्तौव्यस्तौच चौरस्यनि
प्रहणनं प्रणिहननं निहननं प्रहणनंवा नटअवस्यंदने चुरादिः चौरस्योन्नाटनं चौरस्यक्राथनं वृषलस्यपेषणं

हिंसायांकिं धानापेषणं व्यवहृपणोः समर्थयोः शेषेकर्मणि षष्ठीस्यात् द्यूतेक्रयविक्रय व्यवहारेचानयो-
स्तत्वार्थता शतस्यव्यवहरणं पणनंवा समर्थयोः किं शलाकाव्यवहारः गणनेत्यर्थः ब्राह्मणपणनंस्तुतिरि
त्यर्थः दिवस्तदर्थस्य द्यूतार्थस्यक्रयविक्रय व्यवहारार्थस्यचदिवः कर्मणिषष्ठीस्यात् शतस्यदीव्यति तदर्थ
स्यकिं ब्राह्मणंदीव्यति स्तौतीत्यर्थः विभाषोपसर्गे पूर्वयोगापवादः शतस्य शतंवाप्रतिदीव्यति प्रेष्यब्रुवो
र्हविषोदेवतासंप्रदाने देवतासंप्रदानकेर्थेवर्त्तमानयोः प्रेष्यब्रुवोः कर्मणोहविर्विशेषस्यवाचकाच्छब्दात्ष
ष्ठीस्यात् अग्नयेछागस्यहविषोवपायामेदसः प्रेष्यअनुब्रूहिवा कृत्वोऽर्थप्रयोगेकालेधिकरणे कृत्वोर्था
नांप्रयोगेकालवाचिन्यधिकरणेशेषेषष्ठीस्यात् पंचकृत्वोन्होभोजनं शेषेकिं द्विरहन्यध्ययनं कर्तृकर्मणोः
कृति कृद्योगेकर्तरि कर्मणिचषष्ठीस्यात् कृष्णस्यकृतिः जगतः कर्त्ताकृष्णः गुणकर्मणि वेष्यते नेताश्वस्य
स्त्रुघ्नंस्त्रुघ्नस्यवा कृतिकिं तद्धितेमाभूत् कृतपूर्वीकटं उभयप्राप्तौकर्मणि उभयोः प्राप्तिर्यस्मिन्कृति तत्रकर्म
ण्येवषष्ठीस्यात् आश्चर्योगवांदोहोऽगोपेन स्त्रीप्रत्यययोरकाकारयोर्नायंनियमः भेदिका बिभित्सावारु
द्रस्यजगतः शेषेविभाषा स्त्रीप्रत्ययइत्येके विचित्राजगतः कृतिर्हरेर्हरिणावा केचिदविशेषेणविभाषामि
च्छंति शब्दानामनुशासनमाचार्येणाचार्यस्यवा क्तस्यचवर्त्तमाने वर्त्तमानार्थस्यक्तस्ययोगेषष्ठीस्यात् न
लोकेति निषेधस्यापवादः राज्ञांमतोबुद्धः पूजितोवा अधिकरणवाचिनश्च क्तस्ययोगेषष्ठीस्यात् इदमेषामा
सितंगतंभुक्तंवा नलोकाव्ययनिष्ठाखलर्थतृनां एषांप्रयोगेषष्ठीन लादेशाः कुर्वन् कुर्वाणः सृष्टिंहरिः
उहरिंदिदृक्षुः अलंकरिष्णुर्वा उक दैत्यान्घातुकोहरिः कमेरनिषेधः लक्ष्म्याः कामुकः अव्ययंजगत्सृष्ट्वा

सुखंकर्त्तुं निष्ठा दैत्यान् हतवान् विष्णुना हता दैत्याः खलर्थः ईषत्करः प्रपंचो हरिणा तृन्निति प्रत्याहारः
शतृशानचावितितृशब्दादारभ्यतृनोनकारात् शानन् सोमंपवमानः चानश् आत्मानंमंडयमानः शतृ वेदम
धीयन् तृन् कर्त्तालोकान् द्विषःशतुर्वा मुरस्य मुरंवाद्विषन् सर्वोऽयंकारकषष्ठ्याः प्रतिषेधः शेषषष्ठीतुस्या
देवब्राह्मणस्य कुर्वन् नरकस्यजिष्णुः अकेनोर्भविष्यदाधमर्ण्ययोः भविष्यत्यकस्यभविष्य दाधमर्ण्या
र्थेनश्चयोगे षष्ठीनस्यात् सतःपालकोवतरति व्रजंगामी शतंदायी कृत्यानांकर्त्तरिवा षष्ठीवास्यात् म
याममवासेव्योहरिः कर्त्तरीतिकिं गेयोमाणवकः साम्नां भव्यगेयेतिकर्त्तरियद्विधानादनभिहितंकर्म
अत्रयोगोविभज्यते कृत्यानां उभयप्राप्ताविति नेतिचानुवर्त्तते तेननेतव्याः व्रजंगावः कृष्णेन ततः कर्त्तरि
वा उक्तोऽर्थः तुल्यार्थैरतुलोपमाभ्यांतृतीयान्यतरस्यां तुल्यार्थैर्योगेतृतीयावास्यात् पक्षे षष्ठी तुल्यः
सदृशः समोवाकृष्णस्य कृष्णेनवा अतुलोपमाभ्यांकिं तुलाउपमावा कृष्णस्यनास्ति चतुर्थीचाशिष्या
युष्यमद्रभद्रकुशलसुखार्थहितैः एतदर्थैर्योगेचतुर्थीवास्यात्पक्षेषष्ठी आयुष्यंचिरंजीवितंकृष्णाय
कृष्णस्यवाभूयात् एवंमद्रंभद्रंकुशलंनिरामयंसुखंशमर्थः प्रयोजनंहितंपथ्यंभूयात् आशिषिकिंदेवद
त्तस्यायुष्यमस्ति व्याख्यानात्सर्वत्रार्थग्रहणंमद्रभद्रयोः पर्यायत्वादन्यतरोनपठनीयः आधारोऽधिकर
णं कर्तृकर्मद्वारा तन्निष्ठक्रियायाः आधारः कारकमधिकरणसंज्ञंस्यात् सप्तम्यधिकरणेच अधिकरणे
सप्तमीस्याच्चकाराद्दूरांतिकार्थेभ्यः औपश्लेषिकोवैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधाकटेआस्तेस्था
ल्यांपचति मोक्षेइच्छास्ति सर्वस्मिन्नात्मास्ति वनस्यदूरेंतिकेवादूरांतिकार्थेभ्यइतिविभक्तित्रयेणसह

चतस्त्रोऽत्रविभक्तय: फलिता: क्तस्येन्विषयस्य कर्मण्युपसंख्यानं अधीतीव्याकरणे अधीतमनेनेति
विग्रहे इष्टादिभ्यश्चेति कर्त्तरीनि: निमित्तात्कर्मयोगे निमित्तमिहफलं योग: संयोगसमवायात्मक: चर्मणि
द्वीपिनंहंतिदंतयोर्हंतिकुंजरं केशेषुचमरींहंतिसीम्निपुष्कलकोहत: हेतु तृतीयात्रप्राप्ता सीमाअंडकोश: पुष्क
लकोगंडमृग: योगविशेषेकिं वेतनेनधान्यंलुनाति यस्यचभावेनभावलक्षणं यस्यक्रियाक्रियांतरंलक्ष्य
तेततः सप्तमीस्यात् गोषुदुह्यमानासुगत: साध्वसाधुप्रयोगेच साधु: कृष्णोमातरिअसाधुर्मातुले अर्हा-
णांकर्तृत्वेअनर्हाणामकर्तृत्वे तद्वैपरीत्येच सत्सुतरत्सुअ संतआसते असत्सुतिष्ठत्सु संतस्तरंति सत्सु
तिष्ठत्सु असंतस्तरंति असत्सुतरत्सु संतस्तिष्ठंति षष्ठीचानादरे अनादराधिकेभावलक्षणेषष्ठीसप्तम्यौ
स्त: रुदतिरुदतोवाप्राव्राजीत् रुदंतंपुत्रादिकमनादृत्यसंन्यस्तवानित्यर्थ: स्वामीश्वराधिपतिदायादसा
क्षिप्रतिभूप्रसूतैश्च एतै: सप्तभिर्योगेषष्ठीसप्तम्यौस्त: षष्ठ्यामेवप्राप्तायां पाक्षिकसप्तम्यर्थंवचनं गवांगो
षुवास्वामी गवांगोषुवाप्रसूत: गाएवानुभवितुंजातइत्यर्थ: आयुक्तकुशलाभ्यांचासेवायां आभ्यांयोगे
षष्ठीसप्तम्यौस्तस्तात्पर्येआयुक्तोव्यापारित: आयुक्त: कुशलोवाहरिपूजने हरिपूजनस्यवा असेवायांकिं
आयुक्तोगौ: शकटे ईषद्युक्त इत्यर्थ: यतश्चनिर्धारणं जातिगुणक्रियासंज्ञाभि: समुदायादेकदेशस्यपृ
थक्करणंनिर्धारणंयतस्तत: षष्ठीसप्तम्यौस्त: नृणांनृषुवाद्विज: श्रेष्ठ: गवांगोषुवा कृष्णाबहुक्षीरा गच्छ
तांगच्छत्सुवाधावन्शीघ्र: छात्राणांछात्रेषु वामैत्र: पटु: पंचमीविभक्ते विभागोविभक्तं निर्धार्यमाण
स्ययत्रभेदएवतत्रपंचमीस्यात् माथुरा: पाटलिपुत्रकेभ्यआढ्यतरा: साधुनिपुणाभ्यामर्चायांसप्तम्यप्रते:

आभ्यांयोगेसप्तमीस्यादर्चायांनतुप्रतेः प्रयोगे मातरिसाधुर्निपुणोवा अर्चायांकिं निपुणोराज्ञोभृत्यः
इहतत्वकथनेतात्पर्यं अप्रत्यादिभिरितिवक्तव्यं साधुर्निपुणोवामातरंप्रतिपरिअनुवा प्रसितोत्सुका
भ्यांतृतीयाच आभ्यांयोगे तृतीयास्यात्चात्सप्तमी प्रसितः उत्सुकोवा हरिणाहरौवा नक्षत्रेचलुपि नक्ष
त्रेप्रकृत्यर्थेसतियोलुप्संज्ञयालुप्यमानस्यप्रत्ययस्यार्थस्तत्रवर्त्तमानात्तृतीयासप्तम्योस्तो ऽधिकरणे मू
लेनावाहयेद्देवींश्रवणेनविसर्जयेत् मूलेश्रवणेइतिवा लुपिकिं पुष्येशनिः सप्तमीपंचम्यौकारकमध्ये शा
क्तिद्वयमध्येयौकालाध्वनौताभ्यामेतेस्तः अद्यभुक्तायंद्व्यहे द्व्यहाद्वाभोक्ता कर्तृशक्त्योर्मध्ये ऽयंकालः
इहस्थो ऽयंक्रोशेक्रोशाद्वालक्ष्यंविध्येत् कर्तृकर्मशक्त्योर्मध्ये ऽयंदेशः अधिकशब्देनयोगे सप्तमीपंच
म्याविष्येते तदस्मिन्नधिकमिति यस्मादधिकमितिचसूत्रनिर्देशात् लोकेलोकाद्वाधिकोहरिः अधिरीश्व
रे स्वस्वामिभावसंबंधे ऽधिः कर्मवचनीयसंज्ञः स्यात् यस्मादधिकंयस्यचेश्वरवचनंतत्रसप्तमी अत्र
कर्मप्रवचनीययुक्तेसप्तमीस्यात् उपपरार्धेहरेर्गुणाः परार्द्धादधिकाइत्यर्थः ऐश्वर्येतुस्वस्वामिभ्यांपर्या
येणसप्तमी अधिभुविरामः अधिरामेभूः सप्तमीशौंडैरिति समासपक्षेतुरामाधीना अषडक्षेत्यादिनाखः
विभाषाकृञि अधिःकरोतौप्राक्संज्ञोवास्यादीश्वरे ऽर्थे यदत्रमामधिकरिष्यति विनियोक्ष्यतइत्यर्थः
इहविनियोक्तुरीश्वरत्वंगम्यते अगतित्वात्तिङिचोदात्तवतीतिनिघातोन इतिविभक्त्यर्थाः सम
र्थः पदविधिः पदसंबंधीयोविधिः ससमर्थाश्रितोबोध्यः प्राक्कडारात्समासः कडाराःकर्मधारयइत्यतः
प्राक्समासइत्यधिक्रियते सहसुपा सहेतियोगोविभज्यते सुबंतंसमर्थेनसहसमस्यते योगविभागस्य

श्वसिध्यर्थत्वात्कृतिपर्यंतिङंतोत्तरपदोऽयंसमासः सचच्छंदस्येव पर्यभूषत् अनुव्यचलत् सुपा सुप्सुपासह
समस्यते समासत्वात्प्रातिपदिकत्वंसुपोधातुप्रातिपदिकयोः एतयोरवयवस्य सुपोलुक्स्यात् भूतपूर्वेचर
डितिनिर्देशात्पूर्वनिपातः पूर्वंभूतोभूतपूर्वः इवेनसमासोविभक्त्यलोपश्च जीमूतस्येव अव्ययीभावः
अधिकारोऽयं अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानु
पूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यांतवचनेषु अव्ययमितियोगोविभज्यते अव्ययंसमर्थेनसहसमस्य
तेसोऽव्ययीभावः प्रथमानिर्दिष्टंसमासउपसर्जनं समासशास्त्रेप्रथमानिर्दिष्टमुपसर्जनसंज्ञंस्यात् उप
सर्जनंपूर्वं समासेउपसर्जनंप्राक्प्रयोज्यं एकविभक्तिचापूर्वनिपाते विग्रहेयन्नियतविभक्तिकंतदुपस
र्जनसंज्ञंस्यात् नतुतस्यपूर्वनिपातः गोस्त्रियोरुपसर्जनस्य उपसर्जनंयोगोशब्दः स्त्रीप्रत्ययांतंचतदंत
स्यप्रातिपदिकस्यन्हस्वःस्यात् अव्ययीभावश्चेत्यव्ययत्वं नाव्ययीभावादतोऽम्त्वपंचम्याः अदंताद
व्ययीभावात्सुपोनलुक्तस्यपंचमींविनाअमादेशः दिशयोर्मध्येअपदिशं क्लीबाव्ययंत्वपदिशंदिशोर्म
ध्येविदिक्स्त्रियामित्यमरः तृतीयासप्तम्योर्बहुलं अदंतादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः
स्यात् अपदिशं अपदिशेन अपदिशे बहुलग्रहणात्सुमुद्रसुन्मत्तगंगमित्यादौनित्यमम्भावः विभक्त्या
देरयमर्थः विभक्त्यर्थादिषुवर्त्तमानमव्ययंसुबंतेनसमस्यतेसोऽव्ययीभावः विभक्तौतावत् हरौइत्यधि
हरिसप्तम्यर्थस्यैवाऽत्रद्योतकोऽधिः हरिङि अधिइत्यलौकिकंविग्रहवाक्यं अत्रनिपातेनाभिहितेप्य-
धिकरणे वचनसामर्थ्यात्सप्तमी अव्ययीभावश्च अयंनपुंसकः स्यात् ह्रस्वोनपुंसकेप्रातिपदिकस्य

गोपायतीतिगाः पातीतिवागोपाः तस्मिन्नित्यधिगोपं समीपे कृष्णस्यसमीपमुपकृष्णं समयाग्रामंनिकषालंकां
आराद्वनादित्यत्रतुनाव्ययीभावः अभितः परितः अन्यारादितिद्वितीयापंचम्योर्विधानसामर्थ्यात् मद्राणांसमृ
द्धिःसुमद्रं यवनानां व्यृद्धिर्दुर्यवनं विगताऋद्धिर्व्यृद्धिः मक्षिकाणामभावोनिर्मक्षिकं हिमस्यात्ययोऽतिहि-
मं अत्ययोध्वंसः निद्रासंप्रतिनयुज्यतेइत्यतिनिद्रं हरिशब्दस्यप्रकाशइतिइहरि विष्णोःपश्चादनुविष्णु प
श्चाच्छब्दस्यतुनायंसमासः ततःपश्चात्स्रंस्यतइतिभाष्यप्रयोगात् योग्यतावीप्सापदार्थानतिवृत्तिसादृश्या
नियथार्थाः अनुरूपं रूपस्ययोग्यमित्यर्थः अर्थमर्थंप्रतिप्रत्यर्थं प्रतिशब्दस्यवीप्सायांकर्मप्रवचनीयसंज्ञा
विधानसामर्थ्यात्तद्योगेद्वितीयागर्भवाक्यमपि शक्तिमनतिक्रम्ययथाशक्ति हरेःसादृश्यंसहरि वक्ष्यमाणे
नसहस्यसः ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठं चक्रेणयुगपदितिविग्रहे अव्ययीभावेचाकालेसहस्यसःस्या
दव्ययीभावेनतुकाले सचक्रं कालेतुसहपूर्वाण्हं सदृशः सख्यासससखि यथार्थत्वेनैवसिद्धेपुनःसादृश्य
ग्रहणं गुणभूतेपिसादृश्येयथास्यादित्येवमर्थं क्षत्राणांसंपत्तिः सक्षत्रं ऋद्धेराधिक्यंसमृद्धिः अनुरूप
आत्मभावःसंपत्तिरितिभेदः तृणमप्यपरित्यज्यसतृणमत्ति साकल्येनेत्यर्थः नत्वत्रतृणभक्षणेतात्पर्यं अं
ते अग्निग्रंथपर्यंतमधीतेसाग्नि यथासादृश्ये असादृश्येएवयथाशब्दःसमस्यते तेनेहन यथाहरिस्तथाह
रः हरेरुपमानत्वंयथाशब्दोद्योतयति तेनसादृश्यइतिवा यथार्थइतिवाप्राप्तंनिषिध्यते यावदवधारणे
यावंतःश्लोकास्तावंतोऽच्युतप्रणामाइतियावच्छ्लोकं सूप्प्रतिनामात्रार्थे शाकस्यलेशः शाकप्रति मा
त्रार्थेकिं वृक्षंप्रतिविद्योततेविद्युत् अक्षशलाकासंख्याःपरिणा द्यूतव्यवहारेपराजयएवायंसमासः

अक्षेणविपरीतं वृत्तं अक्षपरि शलाकापरि एकपरि विभाषा अधिकारोऽयं एतत्सामर्थ्यादेव प्राचीनानां नि
त्यसमासत्वं स्फुरस्फुपेति तु न नित्यसमासः अव्ययमित्यादिसमासविधानाज्ज्ञापकात् अपपरिबहिरंचवः
पंचम्या अपविष्णु संसारः अपविष्णोःपरिविष्णु परिविष्णोः बहिर्वनं बहिर्वनात् प्राग्वनं प्राग्वनात् आ
ङ् मर्यादाभिविध्योः एतयोराङ् पंचम्यंतेन वा समस्यते सोऽव्ययीभावः आमुक्तिसंसारः आमुक्तेः आबा
लं हरिभक्तिः आबालेभ्यः लक्षणेनाभिप्रती आभिमुख्ये आभिमुख्यद्योतकावभिप्रती चिन्हवाचिना सह
प्राग्वत् अभ्यग्निशलभाः पतंति अग्निमभि प्रत्यग्नि अग्निं प्रति अनुर्यत्समया यंपदार्थं समयातेन लक्ष
णभूतेनानुः समस्यते सोऽव्ययीभावः अनुवनमशनिर्गतः वनस्य समीपं गत इत्यर्थः यस्य चायामः य
स्य दैर्घ्यमनुनाद्योत्यते तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः अनुगंगं वाराणसी गंगाया अनु गंगा
दैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः तिष्ठद्गुप्रभृतीनि च एतानि निपात्यंते तिष्ठंति गावो यस्मिन्काले सति तिष्ठ
द्गु दोहनकालः आयतीगवं इह शत्रादेशः पुंवद्भावविरहः समासांतश्च निपात्यते इत्यादि पारेमध्ये षष्ठ्या वा
पारमध्यशब्दौ षष्ठ्यंतेन सह वा समस्येते एदंतत्वं चानयोर्निपात्यते पक्षे षष्ठीतत्पुरुषः पारेगंगादानय गंगापा
रात् मध्येगंगादानय गंगामध्यात् महाविकल्पेन वाक्यमपि गंगायाः पारात् गंगाया मध्यात् संख्या वंश्येन वंशो द्विधा वि
द्यया जन्मना च तत्र भवो वंश्यः तद्वाचिना सह संख्या वा समस्यते द्वौ मुनी वंश्यौ द्विमुनि व्याकरणस्य त्रि
मुनि विद्यातद्वतामभेदविवक्षायां त्रिमुनि व्याकरणं एकविंशति भारद्वाजं नदीभिश्च नदीभिः संख्या
प्राग्वत् समाहारे चायमिष्यते सप्तगंगं द्वियमुनं अन्यपदार्थे च संज्ञायां अन्यपदार्थे विद्यमानं सुबंतं

नदीभिःसहनित्यंसमस्यतेसंज्ञायां विभाषाधिकारेऽपिवाक्येनसंज्ञानवगमादिहनित्यसमासः उन्मत्तगं
गंनामदेशः लोहितगंगं समासांताइत्यधिकृत्य अव्ययीभावेशरत्प्रभृतिभ्यः शरदादिभ्यष्टच् स्यात्स-
मासांतोऽव्ययीभावे शरदः समीपमुपशरदं प्रतिविपाशं शरद् विपाश् अनस् मनस् उपानह् दिव् हिमवत् अ
नडुह् दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यत् कियत् जरायाजरश्च उपजरसं प्रतिपरसमनुभ्योऽक्ष्णः य
स्येतिच प्रत्यक्षं अक्ष्णः परमितिविग्रहे समासांतविधानसामर्थ्यादव्ययीभावः परोक्षेलिडितिनिपातना
त्परस्यौकारादेशः परोक्षं परोक्षाक्रियेत्यादित्वर्शआद्यचि समक्षं अन्वक्षं अनश्च अन्नंतादव्ययीभावा
ट्टच्स्यात् नस्तद्धिते नांतस्यभस्यटेर्लोपः स्यात्तद्धिते उपराजं अध्यात्मं नपुंसकादन्यतरस्यां अन्नंतंयत्
क्लीबंतदंतादव्ययीभावाट्टज्वास्यात् उपचर्मं उपचर्म नदीपौर्णमास्याग्रहायणीभ्यः वाटच् उपनदं उपनदि
उपपौर्णमासं उपपौर्णमासि उपाग्रहायणं उपाग्रहायणि झयः झयंतादव्ययीभावात्टज्वा उपसमिधंउ
पसमित् गिरेश्चसेनकस्य गिर्यंतादव्ययीभावाट्टज्वा सेनकग्रहणं पूजार्थंउपगिरं उपगिरि इत्यव्ययी
भावः तत्पुरुषः अधिकारोयं प्राग्बहुव्रीहेः द्विगुश्च द्विगुरपितत्पुरुषसंज्ञः स्यात् इदंसूत्रंत्यक्तुंश-
क्यं संख्यापूर्वोद्विगुश्चेतिपठित्वाचकारबलेनसंज्ञासमावेशस्यसूचनत्वात् समासांतः प्रयोजनं पंच-
राजं द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः द्वितीयांतंश्रितादिप्रकृतिकैः सुबंतैः सहवासम
स्यतेसतत्पुरुषः कृष्णंश्रितः कृष्णश्रितः दुःखातीतः गम्यादीनामुपसंख्यानं ग्रामंगमी ग्रामगमी
अन्नंबुभुक्षुः अन्नबुभुक्षुः स्वयंक्तेन द्वितीयेतिनसंबध्यते अयोग्यत्वात् स्वयंकृतस्यापत्यंस्वायंकृतिः

खट्वाक्षेपे खट्वाप्रकृतिकं द्वितीयांतं क्तांतप्रकृतिकेन सुबंतेन समस्यते निंदायां खट्वारूढोजाल्मः नित्यसमा
सोयं नहिवाक्येननिंदागम्यते सामि सामिकृतं कालाः क्तेनेत्येव अनत्यंतसंयोगार्थं वचनं मासप्रमितः
प्रतिपच्चंद्रः मासं परिच्छेत्तुमारब्धवान् अत्यंतसंयोगेच कालाइत्येव अक्तांतार्थं वचनं मुहूर्तसुखं मुहू
र्तसुखं तृतीयातत्कृतार्थेनगुणवचनेन तत्कृतेतिलुप्ततृतीयाकं तृतीयांतं तृतीयांतार्थकृतगुणवचनेनार्थ
शब्देनचसहवाप्राग्वत् शंकुलयाखंडः शंकुलाखंडः धान्येनार्थोधान्यार्थः तत्कृतेतिकिं अक्ष्णाकाणः पूर्वस
दृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः तृतीयांतमेतैः प्राग्वत् मासपूर्वः मातृसदृशः पितृसमः ऊनार्थे
माषोनं कार्षापणं माषविकलं वाक्कलहः आचारनिपुणः गुडमिश्रः आचारश्लक्ष्णः मिश्रग्रहणे सोपसर्गस्या
पिग्रहणं मिश्रंचानुपसर्गमसंधाविति यत्रानुपसर्गग्रहणात् गुडसंमिश्राधानाः अवरस्योपसंख्यानं मासेना
वरोमासावरः कर्तृकरणेकृताबहुलं कर्त्तरिकरणेचतृतीयाकृदंतेनबहुलंप्राग्वत् हरिणात्रातोहरित्रातः न-
खैर्भिन्नोनखभिन्नः कृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणं नखनिर्भिन्नः कृताकिं काष्ठैः पचतितरां कृत्यैर
धिकार्थवचने स्तुतिनिंदाफलकमर्थवादवचनमधिकार्थवचनंतत्रकर्त्तरिकरणेच तृतीयाकृत्यैः सहप्राग्वत्
वातच्छेद्यं तृणं काकपेयानदी अन्नेनव्यंजनं संस्कारकद्रव्यवाचकं तृतीयांतमन्नेनप्राग्वत् दध्नाओदनो
दध्योदनः इहांतर्भूतोपसेकक्रियाद्वारासामर्थ्यं भक्ष्येणमिश्रीकरणं गुडेनधानाः गुडधानाः मिश्रणक्रि
याद्वारासामर्थ्यं चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः चतुर्थ्यंतार्थाययत्तद्वाचिनाअर्थादिभिश्चतु-
र्थ्यंतंवाप्राग्वत् तदर्थेनप्रकृतिविकृतिभावएव बलिरक्षितग्रहणात्ज्ञापकात् यूपायदारुयूपदारु नेह रं

धनाय स्थाली अश्वघासादयस्तु षष्ठीसमासाः अर्थे ननित्यसमासो विशेष्यलिंगता चेति वक्तव्यं द्विजाया
यं द्विजार्थः सूपः द्विजार्थाय यवागूः द्विजार्थं पयः भूतबलिः गोहितं गोसुखं गोरक्षितं पंचमी भयेन चोरा
द्भयं चोरभयं भयभीतभीतिभीभिरिति वाच्यं वृकभीतः वृकभीतिः अपेतापोढमुक्तपतितापत्रस्तैर-
ल्पशः एतैः सहाल्पं पंचम्यंतं समस्यते स तत्पुरुषः सुखापेतः कल्पनापोढः चक्रमुक्तः स्वर्गपतितः तरंगा
पत्रस्तः अल्पशः किं प्रासादात्पतितः स्तोकांतिकदूरार्थकृच्छ्राणि क्तेन स्तोकान्मुक्तः अल्पान्मुक्तः अंति
कादागतः अभ्याशादागतः दूरादागतः विप्रकृष्टादागतः कृच्छ्रादागतः पंचम्याः स्तोकादिभ्य इत्यलुक् षष्ठी राज्ञः पुरुषो
राजपुरुषः याजकादिभिश्च एभिः षष्ठ्यंतं समस्यते तृजकाभ्यां कर्त्तरीत्यस्य प्रतिप्रसवोऽयं ब्राह्मणयाज
कः देवपूजकः गुणात्तरेण तरलोपश्चेति वक्तव्यं तरबंतं यद्गुणवाचि तेन समासः ननिर्धारण इति पूरणगुणेति
च निषेधस्य प्रतिप्रसवोऽयं सर्वेषां श्वेततरः सर्वश्वेतः सर्वेषां महत्तरः सर्वमहान् कृद्योगा च षष्ठी समस्यत
इति वाच्यं इध्मप्रव्रश्चनः न निर्धारणे निर्धारणे या षष्ठी सा न समस्यते नृणां द्विजः श्रेष्ठः प्रतिपदविधाना ष
ष्ठी न समस्यत इति वाच्यं सर्पिषो ज्ञानं पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन पूरणाद्यर्थैः
सदादिभिश्च षष्ठी न समस्यते पूरणे सतां षष्ठः गुणे काकस्य कार्ष्ण्यं ब्राह्मणस्य शुक्लाः यदा प्रकरणादिना
दंता इति विशेष्यं ज्ञातं तदेदमुदाहरणं अनित्योऽयं गुणे ननिषेधः संज्ञाप्रमाणत्वादिस्यादिनिर्देशात् ते-
नार्थगौरवं बुद्धिमांद्यमित्यादि सिद्धं सुहितार्थास्तृप्त्यर्थाः फलानां सुहितः तृतीयासमासस्तु स्यादेव
स्वरे विशेषः सत् द्विजस्य कुर्वन् कुर्वाणो वा किंकर इत्यर्थः अव्यये ब्राह्मणस्य कृत्वा पूर्वोत्तरसाहचर्यात्कृद

व्ययमेव गृह्यते तेननतदुपरीत्यादिसिद्धमितिरक्षितः तव्य ब्राह्मणस्य कर्त्तव्यं तव्य तातु भवस्येव स्वकर्त्तव्यं
स्वरेभेदः समानाधिकरणे तक्षकस्य सर्पस्य विशेषणसमासस्त्विह बहुलग्रहणान्न गोर्धेनोरित्यादिषु पोटा
युवतीत्यादीनां विभक्त्यंतरे चरितार्थानां परत्वाद्बाधकः षष्ठी समासः प्राप्तः सोऽप्यनेन वार्यते क्तेनच पूजा
यां मतिबुद्धीति सूत्रेण विहितो यः क्तस्तदंतेन षष्ठी न समस्यते राज्ञां मतो बुद्धः पूजितो वा राजपूजित इत्या
दौ तु भूते क्तांतेन सह वृत्तीयां तस्य समासः अधिकरणवाचिनाच क्तेन षष्ठी न समस्यते इदमेषामासितं ग
तं भुक्तं वा कर्मणिच उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते आश्चर्यो गवां दोहोऽगोपेन तृजकाभ्यां
कर्त्तरि कर्त्रर्थ तृजकभ्यां षष्ठ्या न समासः अपां स्रष्टा वज्रस्य भर्त्ता ओदनस्य पाचकः कर्त्तरि किं इक्षूणां
भक्षणमिक्षुभक्षिका पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः भूभर्त्ता कथं तर्हि घटानां निर्मातुस्त्रि
भुवन विधातुश्च कलह इति शेषषष्ठ्या समास इति कैयटः कर्त्तरिच कर्तृषष्ठ्या अकेन न समासः भवतः
शायिका नेह तृजनुवर्त्तते तद्योगे कर्त्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् नित्यं क्रीडाजीविकयोः एत
योरर्थयोरकेन नित्यं षष्ठी समस्यते उद्दालकपुष्पभंजिका क्रीडाविशेषस्य संज्ञा संज्ञायामिति भावे ण्वु
ल् जीविकायां दंतलेखकः तत्र क्रीडायां विकल्पे जीविकायां तृजकाभ्यां कर्त्तरीति निषेधे प्राप्ते वचनं पू
र्वापराधरोत्तरमेकदेशिनैकाधिकरणे अवयविना सह पूर्वादयः समस्यंते एकत्वसंख्याविशिष्टश्चेदव
यवी षष्ठीसमासापवादः पूर्वं कायस्य पूर्वकायः अपरकायः एकदेशिना किं पूर्वं नाभेः कायस्य एकाधि
करणे किं पूर्वश्छात्राणां सर्वोऽप्येकदेशोऽन्हा सह समस्यते संख्याविसायेति ज्ञापकात् मध्यान्हः सा

यान्हः केचित्तुसर्वएकदेशः कालेनसमस्यते नत्वन्हैव ज्ञापकस्यसामान्यापेक्षत्वात् तेनमध्यरात्रः उपरताः
पश्चिमरात्रगोचराइत्यादिसिद्धमित्याहुः अर्द्धंनपुंसकं समांशवाच्यर्धशब्दोनित्यंक्लीबेसप्राग्वत् एकवि
भक्तावषष्ठ्यंतवचनं एकदेशिसमासविषयको ऽ यमुपसर्जनसंज्ञानिषेधः तेनपंचखट्वीत्यादिसिद्ध्यति
अर्धपिप्पल्याः अर्धपिप्पली क्लीबेकिं ग्रामार्द्धः द्रव्यैक्यएव अर्द्धंपिप्पलीनां द्वितीयतृतीयचतुर्थतुर्या
ण्यन्यतरस्यां एतान्येकदेशिनासहप्राग्वद्वा द्वितीयंभिक्षायाः द्वितीयभिक्षा एकदेशिनाकिं द्वितीयंभिक्षा
याभिक्षुकस्य अन्यतरस्यांग्रहणसामर्थ्यात् पूरणगुणेतिचनिषेधंबाधित्वापक्षेषष्ठीसमासः भिक्षाद्वि
तीयं प्राप्तापन्नेचद्वितीयया पक्षेद्वितीयाश्रितेतिसमासः प्राप्तोजीविकांप्राप्तजीविकः जीविकाप्राप्तः
आपन्नजीविकः जीविकापन्नः इहसूत्रेद्वितीयया अइतिच्छित्वाअकारो ऽ पिविधीयते तेनजीविकांप्रा
प्तास्त्रीप्राप्तजीविका आपन्नजीविका कालाःपरिमाणिना परिच्छेद्यवाचिनासुबंतेनसहकालाःसमस्यं
ते मासोजातस्ययस्यसमासजातः द्व्यहजातः द्वयोरन्होःसमाहारोद्व्यहः द्व्यहोजातस्यास्येतिविग्रहे
उत्तरपदेन परिमाणिनाद्विगोः सिद्धयेबहूनांतत्पुरुषस्योपसंख्यानं द्वेअहनीजातस्ययस्यसद्व्यन्हजा
तः अन्हो ऽ न्हइतिवक्ष्यमाणो ऽ न्हादेशः पूर्वत्रतुनसंख्यादेः समाहारेइतितन्निषेधः सप्तमीशौंडैः सप्त-
म्यंतंशौंडादिभिर्वाप्राग्वत् अक्षेषुशौंडो ऽ क्षशौंडः अधिशब्दो ऽ त्रपठ्यते अध्युत्तरपदादितिखः ईश्व
राधीनः सिद्धशुष्कपक्वबंधैश्च एतैः सप्तमीप्राग्वत् सांकाश्यसिद्धः आतपशुष्कः स्थालीपक्वः चक्र
बंधः ध्वांक्षेणक्षेपे ध्वांक्षवाचिनासहसप्तम्यंतंप्राग्वन्निंदायां तीर्थेध्वांक्षइवतीर्थध्वांक्षः तीर्थकाकः कुत्से

ऋणे सप्तम्यंतं कृत्यप्रत्ययांतैः सह प्राग्वदावश्यके मासेदेयमृणं पूर्वाण्हे गेयं साम तत्पुरुषे कृति बहुलमित्य
लुक् ऋणेर्किं मासेदेयाभिक्षाऋणग्रहणं नियोगोपलक्षणार्थं संज्ञायां सप्तम्यंतं सुपाप्राग्वत्संज्ञायां वाक्ये
नसंज्ञानवगमान्नित्यसमासोऽयं अरण्येतिलकाः वनेकसेरुकाः हलदंतात्सप्तम्या इत्यलुक् क्तेनाहोरात्राव
यवाः अन्होरात्रेश्चावयवाः सप्तम्यंताः क्तांतेन सह प्राग्वत् पूर्वाण्हकृतं अपररात्रकृतं अवयवग्रहणं किं अ
न्हिदृष्टं तत्र तत्रेत्येतत्सप्तम्यंतं क्तांतेन सह प्राग्वत् तत्रभुक्तं क्षेपे सप्तम्यंतं क्तांतेन सह प्राग्वन्निंदायां अव
तप्तेनकुलस्थितं तएतत् पात्रेसंमितादयश्च एते निपात्यंते क्षेपे पात्रेसंमिताः भोजनसमयएव संगताः
नतुकार्ये गेहेशूरः गेहेनर्दी आकृतिगणोऽयं चकारोऽवधारणार्थः तेनैषां समासांतरे घटकतया प्रवेशो
न पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन विशेषणंविशेष्येणेति सिद्धे पूर्वनिपातनि
यमार्थं सूत्रं एकशब्दस्य दिक्संख्ये संज्ञायामिति नियमबाधनार्थं च पूर्वस्नातः पश्चादनुलिप्तः स्नातानु
लिप्तः एकनाथः सर्वयाज्ञिकाः जरन्नैयायिकाः पुराणमीमांसकाः नवपाठकाः केवलवैयाकरणाः दिक्
संख्ये संज्ञायां समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः संज्ञायामेवेति नियमार्थं सूत्रं पूर्वेषुका
मशमी सप्तर्षयः नेह उत्तराः वृक्षाः पंचब्राह्मणाः तद्धितार्थोत्तरपदसमाहारेच तद्धितार्थेविषये उत्तरपदे
चपरतः समाहारेच वाच्ये दिक्संख्ये वाप्राग्वत् पूर्वस्यांशालायांभवः पौर्वशालः समासे कृते दिक्पूर्वप
दादसंज्ञायांञइतिञः सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः आपरशालः पूर्वाशालाप्रियायस्येति त्रिपदेब
हुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः तेन शालाशब्द आकार उदात्तः पूर्वशालाप्रियः दिक्षुस

माहारोनास्त्यनभिधानात् संख्यायास्तद्धितार्थे षण्णांमातॄणामपत्यंषाण्मातुरः पंचगावोधनंयस्येतित्रिपदेब
हुव्रीहाववांतरतत्पुरुषस्यविकल्पेप्राप्ते द्वंद्वतत्पुरुषयोरुत्तरपदेनित्यसमासवचनं गोरतद्धितलुकि गों
तात्तत्पुरुषाट्टच् स्यात् समासांतोनतु तद्धितलुकि पंचगवधनः पंचानांगवांसमाहारः संख्यापूर्वोद्विगुः
तद्धितार्थेत्यत्रोक्तः संख्यापूर्वोद्विगुः स्यात् द्विगुरेकवचनं द्विग्वर्थः समाहारएकवत्स्यात् सनपुंसकमितिनपुं
सकत्वं पंचगवं कुत्सितानिकुत्सनैः कुत्स्यमानानिकुत्सनैः सहप्राग्वत् वैयाकरणखसूचिः मीमांसकदु
र्दुरूढः पापाणके कुत्सितैः पूर्वसूत्रापवादः पापनापितः अणककुलालः उपमानानि सामान्यवचनैः घन
इवश्यामः घनश्यामः इहपूर्वपदं तत्सदृशे लाक्षणिकमितिसूचयितुंलौकिकविग्रहे इवशब्दः प्रयुज्यते पूर्व
निपातनियमार्थंसूत्रं उपमितंव्याघ्रादिभिः सामान्याप्रयोगे उपमेयंव्याघ्रादिभिः सहप्राग्वत् साधारणध
र्मस्याप्रयोगेसति विशेष्यस्यपूर्वनिपातार्थंसूत्रं पुरुषव्याघ्रः नृसोमः व्याघ्रादिराकृतिगणः सामान्याप्रयोगे
किं पुरुषोव्याघ्रइवशूरः विशेषणंविशेष्येणबहुलं भेदकंसमानाधिकरणेनभेद्येनबहुलंप्राग्वत् नीलंउ
त्पलंनीलोत्पलं बहुलग्रहणात् क्वचिन्नित्यं कृष्णसर्पः क्वचिन्न रामोजामदग्न्यः पूर्वापरप्रथमचरमज
घन्यसमानमध्यममध्यमवीराश्च पूर्वनिपातनियमार्थमिदं पूर्ववैयाकरणः अपराध्यापकः अपरस्या
र्द्धेपश्चभावोवक्तव्यः अपरश्चासावर्द्धश्चपश्चार्द्धः कथमेकवीरइति पूर्वकालैकेति बाधित्वापरत्वादनेनस
मासेवीरैकइतिहिस्यात् बाहुलकाद्भविष्यति श्रेण्यादयः कृतादिभिः श्रेण्यादिषुच्व्यर्थवचनंकर्त्तव्यं
अश्रेणयः श्रेणयः कृताः श्रेणीकृताः क्तेननञ्विशिष्टेनानञ् नञ्विशिष्टेनक्तांतेननञ्क्तांतंसमस्यते

कृतंच तदकृतंचकृताकृतं शाकपार्थिवादीनांसिद्धयेउत्तरपदलोपस्योपसंख्यानं शाकप्रियःपार्थिवःशाकपार्थि
वःकदेवपूजकोब्राह्मणोदेवब्राह्मणः सन्महत्परमोत्तमोत्कृष्टाःपूज्यमानैः सद्वैद्यः वक्ष्यमाणेनमहत
आकरः महावैयाकरणः पूज्यमानैः किं उत्कृष्टोगौः पंकादुद्धृतइत्यर्थः वृंदारकनागकुंजरैःपूज्यमानं
गोवृंदारकः व्याघ्रादेराकृतिगणत्वादेवसिद्धेसामान्यप्रयोगार्थंवचनं कतरकतमौजातिपरिप्रश्ने कत
रकठः कतमकलापः गोत्रंचचरणैःसहेतिजातित्वं किंक्षेपे कुत्सितोराजाकिंराजा योनरक्षति पोटायुव
तिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः तत्पुरुषःसमाना
धिकरणःकर्मधारयः पुंवत्कर्मधारयजातीयदेशीयेषु कर्मधारयेजातीयदेशीययोश्चपरतोभाषितपुं
स्कादनूङ्भावोयस्मिंस्तथाभूतंपूर्वंपुंवत् पूरणीप्रियादिष्वप्राप्तःपुंवद्भावोऽनेनविधीयते महानवमी
कृष्णाचतुर्दशी महाप्रिया तथाकोपधादेःप्रतिषिद्धःपुंवद्भावःकर्मधारयादौप्रतिप्रसूयते पाचकस्त्री दत्त
भार्या पंचमभार्या स्त्रौघ्नभार्या सुकेशभार्या ब्राह्मणभार्या एवंपाचकजातीया पाचकदेशीया इत्यादि
इभपोटा पोटास्त्रीपुंसलक्षणा इभयुवतिः अग्निस्तोकः उदश्वित्कतिपयं गृष्टिःसकृत्प्रसूता गोगृष्टिःधे
नुर्नवप्रसूतिका गोधेनुःवशावंध्या गोवशा वेहद्गर्भघातिनी गोवेहत् बष्कयणी तरुणवत्सा गोबष्कय
णी कठप्रवक्ता कठश्रोत्रियः कठाध्यापकः कठधूर्तः प्रशंसावचनैश्च एतैःसहजातिःप्राग्वत् गोमत
ल्लिका गोमचर्चिका गोप्रकांडं गवोद्धः गोतल्लजः प्रशस्तागौरित्यर्थः मतल्लिकादयोनियतलिंगाः न
तुविशेष्यनिघ्नाःजातिःकिं कुमारीमतल्लिका युवाखलतिपलितवलिनजरतीभिः पूर्वनिपातनिय

मार्थसूत्रं लिंगविशिष्टपरिभाषया फलतिशब्दोऽपि समस्यते युवाखलतिः युवखलतिः युवतिः खलतीयुवखलती युवजरती युवत्यामेवजरतीधर्मोपालंभेनतद्रूपारोपात्सामानाधिकरण्यं कृत्यतुल्याख्या अजात्या भोज्योष्णं तुल्यश्वेतः सदृशश्वेतः अजात्याकिं भोज्यआदनः प्रतिषेधसामर्थ्याद्विशेषणसमा-सोपिन वर्णो वर्णेन समानाधिकरणेनसहप्राग्वत् कृष्णसारंगः कडाराः कर्मधारये कडारादयः शब्दाः कर्मधारयेवापूर्वंप्रयोज्याः कडारजैमिनिः जैमिनिकडारः कुमारश्रमणादिभिः कुमारीश्रमणा कुमारश्रमणा इहगणेश्रमणाप्रव्रजितागर्भिणीत्यादयः स्त्रीलिंगाः पठ्यंते लिंगविशिष्टपरिभाषायाएतदेव ज्ञापकंबोध्यं चतुष्पादोगर्भिण्या चतुष्पाज्जातिवाचिनोगर्भिणीशब्देनसहप्राग्वत् गोगर्भिणी मयूरव्यंसकादयश्च एतेनिपात्यंते मयूरोव्यंसकोमयूरव्यंसकः व्यंसकोधूर्त्तः उदक्अवाक्चउच्चावचं निश्चितंचप्रचितंचनिश्चप्रचं नास्तिकिंचनंयस्यसअकिंचनः आख्यातमाख्यातेनक्रियासातत्यते अश्नीतपिबते त्येवंसततं यत्राभिधीयतेसाऽश्नीतपिबता पचभृज्जता खादतमोदता एहीडादयोऽन्यपदार्थे एहीड इतियस्मिन्कर्मणितदेहीडंएहियवं उद्धर कोष्ठात्उत्सृजदेहीतियस्यांक्रियायांसाउद्धरोत्सृजा उद्धमविधमा असातत्त्यार्थमिहपाठः जहिकर्मणाबहुलमाभीक्ष्ण्येकर्त्तारंचाभिदधाति जहीत्येतत्कर्मणाबहुलंसमस्यते आभीक्ष्ण्येगम्ये समासेनचेत्कर्ताभिधीयतइत्यर्थः जहिजोडः जहिस्तंबः नास्तिकुतोभयंयस्यसोऽकुतोभयः अन्योराजाराजांतरं चिदेवचिन्मात्रं ईषदकृता ईषत्पिंगलः ईषद्गुणवचनेनेतिवाच्यं ईषद्रक्तं नञ् नञ्सुपासहसमस्यते नलोपोनञः नञोनस्यलोपः स्यादुत्तरपदेअ

ब्राह्मणः तस्मान्नुडचि लुप्तनकारान्नञउत्तरपदस्याजादेर्नुडागमः स्यात् अनश्वः अर्थाभावेऽव्ययीभा
वेनसहार्थविकल्प्यते रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति अद्भुतायामसंहितमितिचभाष्यवार्तिकप्र
योगात् तेनाऽनुपलब्धिरविवादोऽविघ्नमित्यादिसिद्धं नञोनलोपस्तिङिक्षेपे अपचसित्वंजाल्म नैक
धेत्यादौतुनशब्देनसहसुप्सुपेतिसमासः नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्ष
त्रनक्रनाकेषुप्रकृत्या यादितिशत्रंतः वेदाइत्युक्तन्नंतः नसत्याः असत्याः नअसत्याः नासत्याः नमुंचती
तिनमुचिः नकुलमस्य नखमस्यनस्त्रीनपुमान् नपुंसकं स्त्रीपुंसयोः पुंसकभावोनिपातनात् नक्षरती
तिनक्षत्रं क्षीयतेः क्षरतेर्वाक्षत्रमितिनिपात्यते नक्रामतीतिनक्रः क्रमेर्डः नअकमस्मिन्नितिनाकः नगोप्रा
णिष्वन्यतरस्यां नगइत्यत्रनञ् प्रकृत्यानगाः अगाः पर्वताः अप्राणिषुकिं अगोवृषलः शीतेन नित्यंक्रीडे
त्यतोनित्यमित्यनुवर्तमाने कुगतिप्रादयः एते समर्थेन नित्यंसमस्यंते कुत्सितः पुरुषः कुपुरुषः गतिश्चेत्य
नुवर्त्तमाने ऊर्यादिच्विडाचश्च एतेक्रियायोगे गतिसंज्ञाः स्युः ऊरीकृत्य उररीकृत्य शुक्लीकृत्य पटपटाकृ
त्य कारिकाशब्दस्योपसंख्यानं कारिकाक्रिया कारिकाकृत्य अनुकरणंचानितिपरं खाट्कृत्य अनिति
परंकिं खाडितिकृत्वानिरष्ठीवत् आदरानादरयोः सदसती सत्कृत्य असत्कृत्य भूषणेऽलं अलंकृत्यभू
षणेकिं अलंकृत्वौदनंगतः पर्याप्तमित्यर्थः अनुकरणमित्यादित्रिसूत्रीस्वभावात् कृञ्विषया अंतरपरि
ग्रहे अंतर्हत्य मध्येहत्वेत्यर्थः अपरिग्रहेकिं अंतर्हत्वागतः हतंपरिगृह्यागतइत्यर्थः कणेमनसीश्रद्धाप्रती
घाते कणेहत्यपयः पिबति मनोहत्य कणेशब्दः सप्तमीप्रतिरूपकोनिपातोऽभिलाषातिशये वर्त्तते मनः

शब्दोऽप्यत्रैव पुरोऽव्ययं पुरस्कृत्य अस्तंच अस्तमितिमांतमव्ययंगतिसंज्ञंस्यात् अस्तंगत्य अच्छ
गत्यर्थवदेषु अव्ययमित्येव अच्छगत्य अच्छोद्य अभिमुखंगत्वाउक्त्वाचेत्यर्थः अव्ययंकिं जलमच्छंग
च्छति अदोऽनुपदेशे अदःकृत्य अदःकृतं परमत्युपदेशे प्रत्युदाहरण तिरोंऽतर्द्धौ तिरोभूय विभाषा
कृञि तिरःकृत्य तिरस्कृत्य तिरःकृत्वा उपाजेऽन्वाजे एतौ कृञिवागतिसंज्ञौस्तः उपाजेकृत्य उपाजेकृ
त्वा अन्वाजेकृत्य अन्वाजेकृत्वा दुर्बलस्य बलमाधायेत्यर्थः साक्षात्प्रभृतीनिच कृञिवागतिसंज्ञा-
निस्युः च्व्यर्थइतिवक्तव्यं साक्षात्कृत्य साक्षात्कृत्वा लवणंकृत्य लवणंकृत्वा मांतत्वंनिपातनात् अ
नत्याधानउरसिमनसी उरसिकृत्य उरसिकृत्वा अभ्युपगम्येत्यर्थः मनसिकृत्य मनसिकृत्वा निश्चित्ये
त्यर्थः अत्याधानउपश्लेषस्तत्रन उरसिकृत्वा पाणिंशेते मध्येपदेनिवचनेच एतेकृञिगतिसंज्ञावास्युः
अनत्याधाने मध्येकृत्य मध्येकृत्वा पदेकृत्य पदेकृत्वा निवचनेकृत्य निवचनेकृत्वा वाचंनियम्येत्यर्थः
नित्यंहस्ते पाणावुपयमने कृञि उपयमनंविवाहः स्वीकारमात्रमित्यन्ये हस्तेकृत्य पाणौकृत्य प्राध्वं
बंधने प्राध्वमितिमांतमव्ययं प्राध्वंकृत्य बंधनेनानुकूलंकृत्वेत्यर्थः प्रार्थनादिनात्वानुकूल्यकरणेप्रा-
ध्वंकृत्वा जीविकोपनिषदावौपम्ये जीविकामिवकृत्वा जीविकाकृत्य उपनिषदमिवकृत्वाउपनिषत्कृत्य
औपम्येकिं जीविकांकृत्वा प्रादिग्रहणमगत्यर्थंकुपुरुषः अत्रवार्त्तिकानि प्रादयोगताद्यर्थेप्रथमया प्र
गतआचार्यः प्राचार्यः अत्यादयःक्रांताद्यर्थेद्वितीयया अतिक्रांतोमालामतिमालः अवादयःक्रुष्टा
द्यर्थेतृतीयया अवक्रुष्टःकोकिलयाऽवकोकिलः पर्यादयोग्लानाद्यर्थेचतुर्थ्या परिग्लानोऽध्ययनाय

पर्यध्ययनः निरादयः क्रांताद्यर्थे पंचम्या निष्क्रांतः कौशांब्या निष्कौशांबिः कर्मप्रवचनीयानां प्रति
षेधः वृक्षं प्रति तत्रोपपदं सप्तमीस्थं सप्तम्यंते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुंभादि तद्वाचकं पदमु
पपदसंज्ञं स्यात् तस्मिंश्च सत्येव वक्ष्यमाणाः प्रत्ययाः उपपद मतिङ् उपपदं सुबंतं समर्थेन नित्यं समस्य
ते अतिङंतश्च समासः कुंभं करोतीति कुंभकारः इह कुंभ अस्कारइत्यलौकिकं विग्रहवाक्यं अतिङ् किं मा
भवान् भूत् माङि लुङिति सप्तमीनिर्देशान्माङुपपदं अतिङ्ग्रहणं ज्ञापयति सुपेत्येतन्नेहानुवर्त्ततइति पूर्व
सूत्रे ऽपि गतिग्रहणं पृथक्कुर्त्यातिङ्ग्रहणं तत्रापकृष्यते सुपेति च निवृत्तं तथा च गतिकारकोपपदानां कृद्भिः
सह समासवचनं प्राक् सुबुत्पत्तेरिति सिद्धं व्याघ्री अश्वक्रीती कच्छपी अमैवाव्ययेन अमैव तुल्यवि
धानं यदुपपदं तदेवाव्ययेन सह समस्यते स्वादुंकारं नेह कालसमयवेलासु तुमुन् कालः समयो वेला
वा भोक्तुं अमैवेति किं अग्रेभोजं अग्रेभुक्त्वा विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ अमा चान्येन तुल्य-
विधानमेतत् तृतीयाप्रभृतीन्यन्यतरस्यां उपदंशस्तृतीयायामित्यादीन्युपपदान्यमंतेनाव्ययेन सह
वा समस्यंते मूलकेनोपदंशं भुंक्ते मूलकोपदंशं क्त्वा च तृतीयाप्रभृतीन्युपपदानि क्त्वांतेन सह वा समस्य
ते उच्चैः कृत्य उच्चैः कृत्वा अव्यये यथाभिप्रेतेति क्त्वा तृतीयाप्रभृतीनीति किं अलंकृत्वा खलुकृत्वा त-
त्पुरुषस्यांगुलेः संख्याव्ययादेः संख्याव्ययादेरंगुल्यंतस्य तत्पुरुषस्य समासांतो ऽच् स्यात् द्वे अंगु
ली प्रमाणमस्य द्व्यंगुलं दारु निर्गतमंगुलिभ्यो निरंगुलं अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः ए
भ्यो रात्रेरच् स्यात् चात् संख्याव्ययादेः अहर्ग्रहणं द्वंद्वार्थं अहश्च रात्रिश्चाहोरात्रः सर्वरात्रिः सर्वरात्रः

पूर्वंरात्रेः पूर्वरात्रः संख्यातरात्रः पुण्यरात्रः द्वयोरात्र्योः समाहारो द्विरात्रं अतिक्रांतो रात्रिमति रात्रः रा-
जाहः सखिभ्यष्टच् एतदंतात्तत्पुरुषाट्टच् स्यात् परमराजः अतिराजः अतिराजी कृष्णसखः अन्हष्ट
खोरेव टिलोपः स्यान्नान्यत्र उत्तमाहः द्वे अहनी भृतो द्व्यहीनः तद्धितार्थेति द्विगुः तमधीष्ट इत्यधिका
रे द्विगोर्वेत्यनुवृत्तौ रात्र्यहः संवत्सराच्चेति खः लिंगविशिष्टपरिभाषाया अनित्यत्वान्नेह मद्राणां राज्ञी म
द्रराज्ञी अन्होऽन्ह एतेभ्यः सर्वादिभ्यः परस्य अहन् शब्दस्याऽन्हादेशः स्यात् समासांते परे अन्होदं
तात् अदंतपूर्वपदस्थाद्रेफात्परस्याऽन्हो नस्य णत्वं स्यात् सर्वाण्हः पूर्वाण्हः संख्यातान्हः द्वयोरन्होर्भ
वो द्व्यन्हः कालाट्ठञ् द्विगोर्लुगनपत्य इति ठञो लुक् द्व्यन्हः स्त्रियामदंतत्वाट्टाप् द्व्यन्हा द्व्यन्हप्रियः
अत्यन्हः क्षुम्नादिषु च एषु णत्वं न स्यात् दीर्घान्ही प्रावृट् एवं चैतदर्थमन्ह इत्यदंतानुकरणं क्लेशोनक
र्त्तव्यः प्रातिपदिकांतेति णत्ववारणाय क्षुम्नादिपाठस्यावश्यकत्वात् अदंतादिति तपरकरणान्नेह परा
गतमहः परान्हः नसंख्यादेः समाहारे समाहारे वर्त्तमानस्य संख्यादेरन्हादेशो न संख्यादेरिति स्पष्टा
र्थं द्वयोरन्होः समाहारो द्व्यहः त्र्यहः उत्तमैकाभ्यां च आभ्यामन्हादेशो न उत्तमशब्दोऽन्त्यार्थः पुण्य
शब्दमाह पुण्यैकाभ्यामित्येव सूत्रयितुमुचितं पुण्याहं एकाहः उत्तमग्रहणमुपांत्यस्यापि संग्रहार्थ
मित्येके संख्याताहः अग्राख्यायामुरसः टच् स्यात् अश्वानामुर इवाश्वोरसं मुख्योऽश्व इत्यर्थः अ
नोश्मायः सरसां जातिसंज्ञयोः टच् उपानसं अमृताश्मः कालायसं मंडूकसरसमिति जातिः महा
नसं पिंडाश्मः लोहितायसं जलसरसमिति संज्ञा ग्रामकौटाभ्यां च तक्ष्णः ग्रामस्य तक्षा ग्रामतक्षा

साधारणइत्यर्थः कुड्यांभवः कीटः स्वतंत्रःसचासौतक्षान्वकौटतक्षः अतेः शूनः अतिश्वोवराहः अतिश्वी
सेना उपमानादप्राणिषु अप्राणिविषयकोपमानवाचिनः शूनष्टच् स्यात् आकर्षःश्वेवआकर्षश्वः अप्राणि
षुकिं वानरः श्वेववानरश्वा उत्तरमृगपूर्वाच्चसक्थ्नः चादुपमानात् उत्तरसक्थं मृगसक्थं पूर्वसक्थं फल
कमिवसक्थिफलकसक्थं नावोद्विगोः नौशब्दांताद्विगोष्टच् स्यात् नतुतद्धितलुकि द्वाभ्यांनौभ्यामा
गतोद्विनावरूप्यः द्विगोर्लुगनपत्यइत्यत्रअचीत्यस्याऽपकर्षणाद्धलादेर्नलुक् पंचनावप्रियः द्विनावं त्रि
नावं अतद्धितलुकीतिकिं पंचभिर्नौभिः क्रीतःपंचनौः अर्द्धाच्च अर्द्धान्नावष्टच् स्यात् नावः अर्द्धमर्द्धना
वं क्लीबत्वंलोकात् खार्याःप्राचां द्विगोरर्धाच्चखार्याष्टज्वा द्विखारं द्विखारि अर्धखारं अर्धखारि द्वि
त्रिभ्यामंजलेः टज्वास्यात् द्विगोः द्व्यंजलं द्व्यंजलि अतद्धितलुकीत्येव द्वाभ्यामंजलिभ्यांक्रीतः
द्व्यंजलिः ब्रह्मणोजनपदाख्यायां ब्रह्मांतात्तत्पुरुषाट्टच् स्यात् समासेनजानपदत्वमाख्यायतेचेत्
सुराष्ट्रेब्रह्मासुराष्ट्रब्रह्मः कुमहद्भ्यामन्यतरस्यां आभ्यांब्रह्मणोवाटच् स्यात्तत्पुरुषे कुत्सितोब्रह्मा
कुब्रह्मः कुब्रह्मा आन्महतःसमानाधिकरणजातीययोः महतआकारोऽतादेशःस्यात् समाना
धिकरणेउत्तरपदेजातीयेचपरेमहाब्रह्मा महाब्रह्मः महादेवः महाजातीयः समानाधिकरणेकिं मह
तःसेवामहत्सेवा लाक्षणिकंविहायप्रतिपदोक्तः सन्महदितिसमासोग्रहीष्यतइतिचेत् महाबाहुर्नस्या
त् तस्माल्लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैवेतिपरिभाषानेहप्रवर्त्तते समानाधिकरणग्रहणसाम-
र्थ्यात् आदितियोगविभागादात्वं प्रागेकादशभ्यइतिनिर्देशाद्वा एकादशमहतीशब्दस्यपुंवत्कर्म

धारयेति पुंवद्भावे कृते आत्वं महाजातीया महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च असा
मानाधिकरण्यार्थमिदं महतो महत्या वा घासो महाघासः महाकरः महाविशिष्टः अष्टनः कपाले हवि
षि अष्टाकपालः गवि च युक्ते गोशब्दे परे युक्त इत्यर्थे गम्ये अष्टन आत्वं वक्तव्यमित्यर्थः अष्टागवं शक
टं अच् प्रत्यन्ववेत्यत्राऽजिति योगविभागाद्बहुव्रीहावप्यच् अष्टानां गवां समाहारोऽष्टगवं तद्युक्तत्वाच्छ-
कटमष्टागवमिति वा द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः आत् स्यात् द्वौ च दश च द्वादश द्व्यधिका दशे
ति वा द्वाविंशतिः अष्टादश अष्टाविंशतिः अबहुव्रीह्यशीत्योः किं द्वित्राः द्व्यशीतिः प्राक्शताद्वक्तव्यं ने
ह द्विशतं द्विसहस्रं त्रेस्त्रयः त्रिशब्दस्य त्रयः स्यात्पूर्वविषये त्रयोदश त्रयोविंशतिः बहुव्रीहौ तु त्रिर्दश त्रि
दशाः सुजर्थे बहुव्रीहिः अशीतौ तु त्र्यशीतिः प्राक्शतादित्येव त्रिशतं त्रिसहस्रं विभाषा चत्वारिंशत्प्र
भृतौ सर्वेषां द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्यात् चत्वारिंशदादौ परे द्विचत्वारिंशत् द्वाचत्वारिंशत् अष्टचत्वारिं
शत् अष्टाचत्वारिंशत् त्रिचत्वारिंशत् त्रयश्चत्वारिंशत् एवं पंचाशत् षष्टि सप्तति नवतिषु एकादिश्चैक
स्य चादुक् एकादिर्नञ् प्रकृत्या स्यात् एकस्य चादुगागमश्च नञो विंशत्या समासे कृते एकशब्देन सहतृ
तीयेति योगविभागात्समासः अनुनासिकविकल्पः एकेनन्नविंशतिः एकान्नविंशतिः एकाद्नविंशतिः
एकोनविंशतिरित्यर्थः षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यं षोडन् षोडश षोढा
षड्धा परवल्लिंगं द्वंद्वतत्पुरुषयोः एतयोः परपदस्येव लिंगं स्यात् कुक्कुटमयूर्याविमे मयूरीकुक्कुटावि
मौ अर्धपिप्पली द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः पंचसु कपालेषु संस्कृतः पंच

कपालः पुरोडाशः प्राप्तोजीविकांप्राप्तजीविकः आपन्नजीविकः अलंकुमार्य्यै अलं कुमारिः अतएवज्ञाप

कात्समासः निष्कौशांबिः पूर्ववदश्ववडवौ द्विवचनमतंत्रं अश्ववडवौ अश्ववडवान् अश्ववडवैः रात्रा

न्हाहाः पुंसि एतदंतौ द्वंद्वतत्पुरुषौ पुंस्येव अनंतरत्वात्परवल्लिंगतापवादोऽप्ययं परत्वात्समाहार नपुंस

कतां बाधते अहोरात्रः रात्रेः पूर्वभागः पूर्वरात्रः पूर्वाण्हः द्व्यहः संख्यापूर्वं रात्रंक्लीबं द्विरात्रं त्रिरात्रं

गणरात्रं अपथंनपुंसकं तत्पुरुषइत्येव अन्यत्र त्वपथोदेशः कृतसमासांतनिर्देशान्नेह अपंथाः अर्द्ध

र्चाः पुंसिच अर्द्धर्चादयः शब्दाः पुंसिक्लीबेचस्युः अर्धर्चः अर्द्धर्चं ध्वजः ध्वजं एवंतीर्थशरीर मंडपयूप

पदेह अंकुश कुलिशइत्यादि जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यां एकोऽप्यर्थोबहुवद्वाभव

ति ब्राह्मणाः पूज्याः ब्राह्मण पूज्यः अस्मदोद्वयोश्च एकत्वेद्वित्वेचविवक्षितेऽस्मदो बहुवचनंवास्यात् व

यंब्रूमः अहंब्रवीमि आवांब्रूवइतिवा सविशेषणस्यप्रतिषेधः पटुरहंब्रवीमि फल्गुनीप्रोष्ठपदानांच

नक्षत्रे द्वित्वे बहुत्वप्रयुक्तंकार्यंवास्यात् पूर्वेफल्गुन्यौ पूर्वाः फल्गुन्यः पूर्वेप्रोष्ठपदे पूर्वाः प्रोष्ठपदाः न-

क्षत्रेकिं फल्गुन्योमाणविके तिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वे बहुवचनस्यद्विवचनंनित्यं बहुत्वेद्वित्ववद्भव

ति तिष्यश्च पुनर्वसूचतिष्यपुनर्वसू तिष्येतिकिं विशाखानुराधाः नक्षत्रेतिकिं तिष्यपुनर्वस्वो माण

वकाः सनपुंसकं समाहारेद्विगुर्द्वंद्वश्च नपुंसकंस्यात् परवल्लिंगापवादः पंचगवं दंतोष्ठं अकारां

तोत्तरपदोद्विगुः स्त्रियामिष्टः पंचमूली आबंतोवा पंचखट्वं पंचखट्वी अनोनलोपश्चवाद्वि

गुः स्त्रियां पंचतक्षं पंचतक्षी पात्राद्यंतस्यन पंचपात्रं त्रिभुवनं चतुर्युगं पुण्यसुदिनाभ्यामन्हः

क्लीबत्वेष्टा पुण्याहं सुदिनाहं सुदिनशब्दोऽत्रप्रशस्तवाची पथः संख्याव्ययादेः संख्याव्ययरूपादेः परः कृतसमांतः पथिशब्दः क्लीबमित्यर्थः त्रयाणांपंथास्त्रिपथं विरूपःपंथाः विपथं कृतसमासांतग्रहणान्नेह सुपंथाः अतिपंथाः सामान्ये नपुंसकं मृदुपचति प्रातः कमनीयं तत्पुरुषो नञ्कर्मधारयः अधिकारोऽयं संज्ञायांकंथोशीनरेषु कंथांतस्तत्पुरुषः क्लीबंस्यात्सा चेदुशीनरदेशोत्पन्नायाः कंथायाः संज्ञा सुशमस्यापत्यानि सौशमयः तेषांकंथासौशमिकंथं संज्ञायांकिं वीरणकंथा उशीनरेषु किं दाक्षिकंथा उपज्ञोपक्रमंतदाद्याचिख्यासायां उपज्ञांतउपक्रमांतश्च तत्पुरुषो नपुंसकंस्यात् तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यंचेदाख्यातुमिष्यते पाणिनेरुपज्ञापाणिन्युपज्ञं ग्रंथः नंदोपक्रमंद्रोणः छायाबाहुल्ये छायांतस्तत्पुरुषो नपुंसकंस्यात् पूर्वपदार्थबाहुल्ये इक्षूणां छायाइक्षुच्छायं विभाषासेनेतिविकल्पस्यापवादः इक्षुच्छायानिषादिन्य इतितुआसमंतान्निषादिन्य इत्याङः प्रश्लेषोबोध्यः सभाराजामनुष्यपूर्वा राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभांतस्तत्पुरुषो नपुंसकंस्यात् इनसभं ईश्वरसभं पर्यायस्यैवेष्यते नेह राजसभा राजमनुष्यपूर्वाकिं चंद्रगुप्तसभा अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह रक्षःसभं पिशाचसभं अशालाच संघातार्थायासभातदंतस्तत्पुरुषः क्लीबंस्यात् स्त्रीसभं स्त्रीसंघातइत्यर्थः अशालाकिं धर्मसभा धर्मशालेत्यर्थः विभाषासेनासुराच्छायाशालानिशानां एतदंतस्तत्पुरुषः क्लीबंवास्यात् ब्राह्मणसेनं ब्राह्मणसेना यवसुरं यवसुरा कुड्यच्छायं कुड्यच्छाया गोशालं गोशाला श्वनिशं श्वनिशा तत्पुरु

षो ऽ नञ्कर्मधारय इत्यनुवृत्तेर्नेह दृढसेनो राजा असेना परमसेना इति तत्पुरुषः शेषो बहुव्रीहिः अधिकारो
यम् द्वितीयाश्रितेत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमांतमित्यर्थः अनेकमन्यप
दार्थे अनेकं प्रथमांतमन्यस्य पदस्यार्थे वर्त्तमानं वा समस्यते स बहुव्रीहिः अप्रथमाविभक्त्यर्थे बहुव्रीहि
रिति समानाधिकरणानामिति च फलितं प्राप्तमुदकं यं प्राप्तोदको ग्रामः ऊढरथो ऽ नड्वान् उपहृतपशू रु
द्रः उद्धृतौदना स्थाली पीतांबरो हरिः वीरपुरुषको ग्रामः प्रथमार्थे तु न वृष्टे देवे गतः व्यधिकरणानाम
मपि न पंचभिर्भुक्तमस्य प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः प्रपतितपर्णः प्रपर्णः नञो ऽ
स्त्यर्थानां वोत्तरपदलोपः अविद्यमानः पुत्रो ऽ पुत्रः अस्तीति विभक्तिप्रतिरूपकमव्ययं अस्तिक्षीरा-
गौः स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु भाषितपुंस्काद
नूङ् ऊङभावो ऽ स्यामिति बहुव्रीहिः निपातनात्सप्तम्या अलुक् षष्ठ्याश्च लुक् तुल्ये प्रवृत्तिनिमित्ते यदु
क्तपुंस्कं तस्मात्पर ऊङभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे
स्त्रीलिंगे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः गोस्त्रियोरिति ह्रस्वः चित्रा गावो यस्येति लौकिकविग्रहे चि
त्रा अस् गो अस् इत्यलौकिकविग्रहे चित्रगुः रूपवद्भार्यः चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनां बहु
व्रीहिः अत्र केचित् चित्रजरतीगुः जरतीचित्रागुर्वा एवं दीर्घा तन्वी जंघा तन्वीदीर्घजंघः त्रिपदे बहुव्रीहौ
तु प्रथमं न पुंवत् उत्तरपदस्य मध्यमेन व्यवधानात् द्वितीयमपि न पुंवत् पूर्वपदत्वाभावात् उत्तरपदशब्दो-
हि समासस्य चरमावयवे रूढः पूर्वपदशब्दस्तु प्रथमावयवे इति वदंति वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते

आनङ् ऋतद्दत्यत्रयथा तेनोपांत्यस्य पुंवदेव चित्राजरद्गुरित्यादि अतएवचित्राजरत्यौगावौयस्येतिद्वंद्वगर्भे ऽ
पिचित्राजरद्गुरितिभाष्यं कर्मधारयपूर्वपदे तुद्वयोरपिपुंवत् जरच्चित्रगुः कर्मधारयोत्तरपदेतु चित्रजरद्गवीकः
स्त्रियाः किं ग्रामणि कुलंदृष्टिरस्य ग्रामणिदृष्टिः भाषितपुंस्कात्किं गंगाभार्यः अनूङ् किं वामोरूभार्यः स
मानाधिकरणेकिं कल्याण्याः माता कल्याणीमाता स्त्रियांकिं कल्याणी प्रधानंयस्य सकल्याणीप्रधानः पू
रण्यांतु अप्पूरणीप्रमाण्योः पूरणार्थप्रत्ययांतंयत्स्त्रीलिंगं तदंतात्प्रमाण्यंताच्च बहुव्रीहेरप्स्यात् कल्या
णीपंचमीयासांरात्रीणांताः कल्याणीपंचमारात्रयः स्त्रीप्रमाणीयस्यसस्त्रीप्रमाणः पुंवद्भावनिषेधोऽप्र
त्ययश्च प्रधानपूरण्यामेव रात्रिः पूरणीवाच्याचेत्स्फक्तोदाहरणेमुख्या अन्यत्रतु नद्यृतश्च नद्युत्तरपदाद्
तंतोत्तरपदाच्च बहुव्रीहेः कप्स्यात् पुंवद्भावः केऽणः केपरेऽणोह्रस्वः स्यादितिप्राप्ते नकपि कपिपरे ह्र-
स्वोनस्यात् कल्याणपंचमीकः पक्षः अत्रतिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतयारात्रिरप्रधानम्
बहुकर्तृकः अप्रियादिषुकिं कल्याणीप्रियः प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्व-
सा कांता क्षांता समा चपला दुहिता वामा अबला तनया सामान्येनपुंसकं दृढंभक्तिर्यस्यसदृढभक्तिः
स्त्रीत्वविवक्षायांतु दृढाभक्तिः तसिलादिष्वाकृत्वसुचः तसिलादिषुआकृत्वसुजंतेषुपरेषुस्त्रियांपुं
वत्स्यात् परिगणनंकर्त्तव्यं अव्याप्त्यतिव्याप्तिपरिहाराय त्रतसौ तरप्तमपौ चरट्जातीयरौ कल्पब्दे
शीयरौ रूपप्पाशपौ थाल् तिल्थ्यनौ बह्वीषुबहुत्र बहुतः दर्शनीयतरा दर्शनीयतमा घरूपेति वक्ष्य-
माणो ह्रस्वः परत्वात्पुंवद्भावंबाधते पट्वितरा पट्वितमा पटुचरी पटुजातीया दर्शनीयकल्पा दर्शनीय

देशीया दर्शनीयरूपा दर्शनीयपाशा बहुथाप्रशस्ता वृकी वृकतिः अजाभ्योहिताअजाथ्या शासिबह्व
ल्पार्थस्यपुंवद्भावोवक्तव्यः बह्वीभ्योदेहि बहुशः अल्पशः त्वतलोर्गुणवचनस्य शुक्लायाःभावःशु
क्लत्वं शुक्लता गुणवचनस्यकिं कर्त्र्याःभावः कर्त्रीत्वं शरदः कृतार्थतेत्यादौतुसामान्येनपुंसकं भस्या
ढेतद्धिते हस्तिनीनांसमूहोहास्तिकं अढेकिं रौहिणेयः स्त्रीभ्योढगितिढोऽत्रगृह्यते अग्नेर्ढगितिढकि
तुपुंवदेव अग्नायीदेवतास्यस्थालीपाकस्यआग्नेयः सपत्नीशब्दस्त्रिधा शत्रुपर्यायासपत्नशब्दात्तुशा
र्ङ्गरवादित्वात्ङीन्येकः समानः पतिर्यस्या इतिविग्रहे विवाहनिबंधनं पतिशब्दमाश्रित्यनित्यस्त्रीलिं
गोद्वितीयः स्वामिपर्यायपतिशब्देनभाषितपुंस्कस्तृतीयः आद्ययोःशिवाद्यण् सपत्न्याअपत्यंसाप
त्नः तृतीयात्तुलिंगविशिष्टपरिभाषयापत्युत्तरपदलक्षणोण्यएव नत्वण् शिवादौ रूढयोरेवग्रहणात्सा
पत्नः ठक्छसोश्च भवत्याश्छात्राभावत्काः भवदीयाः एतद्वार्त्तिकमेकतद्धितेचेति सूत्रंचनकर्त्तव्यं सर्व
नाम्नोवृत्तिमात्र इतिभाष्यकारेष्ट्यागतार्थत्वात् सर्वमयः सर्वकाम्यति सर्विकाभार्यायस्यस सर्वकभा
र्यः सर्वप्रियइत्यादि पूर्वस्यैवेदं भस्त्रैषाद्वेतिलिंगात् तेनाकचिएकशेषवृत्तौचन सर्विका सर्वाः कुक्कु
ट्यादीनामंडादिषु कुक्कुट्याःअंडंकुक्कुटांडं मृग्याः पदं मृगपदं मृगक्षीरं काकशावः क्यङ्मानिनो
श्च एतयोःपरतःपुंवत् एनीवाचरति एतायते श्येनीवाचरतिश्येतायते स्वभिन्नांकांचिद्दर्शनीयांमन्यते
दर्शनीयमानिनी दर्शनीयांस्त्रियंमन्यतेदर्शनीयमानीचैत्रः नकोपधायाः कोपधायाःस्त्रियानपुंवत्
पाचिकाभार्यः रसिकाभार्यः मद्रिकायतेमद्रिकामानिनी कोपधप्रतिषेधेतद्धितवुग्रहणंकर्तव्यं नेह पा

काभार्यायस्यसपाकभार्यः संज्ञापूरण्योश्च अनयोर्नपुंवत् दत्ताभार्यः दत्तामानिनी दानक्रियानिमि
त्तः स्त्रियांपुंसिचसंज्ञाभूतोयमितिभाषितपुंस्कत्वमस्ति पंचमीभार्यः पंचमीपाशा वृद्धिनिमित्तस्यचत
द्धितस्यारक्तविकारे वृद्धिशब्देनविहितायावृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदंतास्त्रीनपुंव
त् स्रौघ्नीभार्यः माथुरीयते माथुरीमानिनी वृद्धिनिमित्तस्यकिं मध्यमभार्यः तद्धितस्यकिं कांडलाव
भार्यः वृद्धिशब्देनकिं तावद्भार्यः रक्तेतु काषायीकंथायस्यसः काषायकंथः विकारेतु हैमीमुद्रिकाय
स्यहैममुद्रिकः वृद्धिशब्देन वृद्धिंप्रतिफलोपधानाभावादिहपुंवत् वैय्याकरणभार्यः सौवश्वभार्यः
स्वांगाच्चेतः स्वांगाद्य इकारस्तदंतास्त्रीनपुंवत् स्वांगात्किं पटुभार्यः इतः किं अकेशभार्यः अमानि
नीतिवक्तव्यं स्रुकेशमानी स्रुकेशमानिनी जातेश्च जातेः परोयः प्रत्ययस्तदंतं नपुंवत् शूद्राभार्यः
ब्राह्मणीभार्यः सौत्रस्यैवायं निषेधस्तेन हस्तिनीनांसमूहोहास्तिकमित्यत्रभस्याढेतद्धितेभवत्येव सं
ख्यायाव्ययासन्नादूराधिकसंख्याःसंख्येये संख्येयार्थयासंख्ययाऽव्ययःदयः समस्यंतेसबहु
व्रीहिः दशानांसमीपे ये संतितेउपदशाः नवएकादशवेत्यर्थः बहुव्रीहौ संख्येयेडजिति वक्ष्यमाणोडच्
तिर्विंशतेर्डिति विंशतेर्भस्यतिशब्दस्यलोपः स्यादिडितिआसन्नविंशाः विंशतेरासन्ना इत्यर्थः अदू
रत्रिंशाः अधिकचत्वारिंशाः द्वौवात्रयोवाद्वित्राः द्विरावृत्तादशद्विर्दश विंशतिरित्यर्थः दिङ्नामान्यंत
राले दिशोनामान्यंतराले वाच्ये प्राग्वत् दक्षिणस्याः पूर्वस्याश्चदिशोंऽतरालंदिक्दक्षिणपूर्वा नामग्र
हणाद्यौगिकानांन ऐंद्र्याश्चकौबेर्याश्चांतरालं तत्रतेनेदमितिसरूपे सप्तम्यंते ग्रहणविषये सरूपेप

दे तृतीयांतेच प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे स बहुव्रीहिः इतिशब्दादयंविषय
विशेषो लभ्यते अन्येषामपि दृश्यते दीर्घ इत्यनुवर्त्तते इति कर्मव्यतिहारे बहुव्रीहौ पूर्वपदांतस्य दीर्घः इ
च् समासांतो वक्ष्यते तिष्ठद्गुप्रभृतिषिच् प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वंच केशेषु केशेषु गृहीत्वे
दं युद्धं प्रवृत्तं केशाकेशि दंडैश्च दंडैश्च प्रहृत्येदं युद्धं प्रवृत्तं दंडादंडि मुष्टीमुष्टि ओर्गुणः उवर्णांतस्य भस्य
गुणः स्यात्तद्धिते अवादेशः बाहूबाहवि ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञा
पयितुं तेन स्वायंभुवमित्यादि सिद्धं सरूपेकिं हलेन मुसलेन तेन सहेति तुल्ययोगे तुल्ययोगे वर्त्तमा
नं सहे त्येतत् तृतीयांतेन प्राग्वत् वोपसर्जनस्य बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा पुत्रेण सह सपुत्रः
सहपुत्रो वागतः तुल्ययोगवचनं प्रायिकं सकर्मकः सलोमकः प्रकृत्याशिषि सहशब्दः प्रकृत्या स्यादाशि
षि स्वस्ति राज्ञे सहपुत्राय सहामात्याय अ गोवत्सहलेष्विति वक्तव्यं सगवे सवत्साय सहलाय बहु
व्रीहौ संख्येये डजबहुगणात् संख्येये यो बहुव्रीहिस्तस्मात् डच् स्यात् उपदशाः अबहुगणात्किं उप
बहवः उपगणाः अत्र स्वरे विशेषः संख्यायास्तत्पुरुषस्य वाच्यः निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षा
णि चैत्रस्य निर्गतस्त्रिंशतोंऽगुलिभ्यो निस्त्रिंशः खड्गः बहुव्रीहौ सक्थ्यक्ष्णोः स्वांगात्षच् व्यस्य
येन षष्ठी स्वांगवाचि सक्थ्यक्ष्यंताद्बहुव्रीहेः षच् स्यात् दीर्घे सक्थिनी यस्य स दीर्घसक्थः जलजाक्षी स्वां
गात्किं दीर्घसक्थि शकटं स्थूलाक्षा वेणुयष्टिः अक्ष्णोऽदर्शनादित्यच् अंगुलेर्दारुणि अंगुल्यंतस्य बहु
व्रीहेः षच् स्याद्दारुण्यर्थे पंच अंगुलयो यस्य तत्पंचांगुलं दारु अंगुलिसदृशावयवं धान्यादिविक्षेपकं का

षमुच्यते बहुव्रीहेः किं द्वे अंगुली प्रमाणमस्या द्व्यंगुला यष्टिः तद्धितार्थेति तत्पुरुषे तत्पुरुषस्यांगुलेरित्यच् दा
रुणि किं पंचांगुलिर्हस्तः द्वित्रिभ्यां षमूर्ध्नः आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ द्विमूर्धः त्रिमूर्धः नेतुर्नक्षत्रे अब्व
क्तव्यः मृगो नेता यासां ताः मृगनेत्रा रात्रयः पुष्यनेत्राः अंतर्बहिर्भ्यां च लोम्नः आभ्यां लोम्नो अप् स्याद्बहु
व्रीहौ अंतर्लोमः बहिर्लोमः अञ्नासिकायाः संज्ञायां नसं चास्थूलात् नासिकांताद्बहुव्रीहेरच् स्यान्नासि
काशब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात् पूर्वपदात्संज्ञायामगः पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्या
त् संज्ञायां न तु गकारव्यवधाने द्रुरिव नासिका यस्य द्रुणसः अगः किं ऋचामयनमृगयनं अणृगयनादि
भ्य इति निपातनाण्णत्वाभावमाश्रित्य अग इति प्रत्याख्यातं भाष्ये अस्थूलात् किं स्थूलनासिकः खुरखरा
भ्यां वा नस् खुरणाः खरणाः पक्षे अजपीष्यते खुरणसः खरणसः उपसर्गाच्च प्रादेर्यो नासिकाशब्दस्तदंता
द्बहुव्रीहेरच् स्यान्नासिकाया नसादेशश्च असंज्ञार्थं वचनं उन्नता नासिका यस्य उन्नसः उपसर्गादनोत्परइति सू
त्रं तं त्यक्त्वा भाष्यकार आह उपसर्गाद्बहुलं उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलं प्रणसः
वेर्ग्रो वक्तव्यः विगता नासिका यस्य विग्रः ख्यश्च विख्यः कथं तर्हि विनसा हतबांधवा इति भट्टिः विग
तया नासिकयोपलक्षितेति व्याख्येयं सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः
एते बहुव्रीहावच्प्रत्ययांता निपात्यंते शोभनं प्रातरस्य सुप्रातः शोभनं श्वोऽस्येति सुश्वः शोभनं दिवा अ-
स्य सुदिवः शारेरिव कुक्षिरस्य शारिकुक्षः चतस्रोऽश्रयो यस्य चतुरश्रः एण्या इव पादा अस्य एणीपदः अ
जपदः प्रोष्ठो गौः तस्येव पादा यस्य प्रोष्ठपदः नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्यां अच् स्याद्वा अहलः

अङ्गुलिः असक्थः असक्थिः एवं दुःसुभ्यां शक्त्योरिति पाठांतरं अशक्तिः अशक्तः नित्यमसिच्प्रजामेधयोः नञ्दुःसुभ्य इत्येव अप्रजाः दुःप्रजाः सुप्रजाः अमेधाः दुर्मेधाः सुमेधाः धर्मादनिच्केवलात् केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदंताद्बहुव्रीहेरनिच्स्यात् कल्याणधर्मा केवलात्किं परमः स्वधर्मो यस्येति त्रिपदे बहुव्रीहौ माभूत् स्वशब्दो ह्यत्र न केवलं पूर्वपदं किंतु मध्यमस्त्वादापेक्षिकं संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः एवं तु परमस्वधर्मेत्याद्यपि साध्वेव निवृत्तिधर्मा अनुच्छित्तिधर्मेत्यादिवत् पूर्वपदं तु बहुव्रीहिणाक्षिप्यते जंभासुहरिततृणसोमेभ्यः जंभेति कृतसमासांतमनिजंतं निपात्यते जंभो भक्ष्ये दंते च शोभनो जंभोऽस्य सुजंभा हरितजंभा तृणं भक्ष्यं यस्य तृणमिव दंता यस्येति वा तृणजंभा एवं सोमजंभा स्वादिभ्यः किं पतितजंभः दक्षिणेर्मा लुब्धयोगे दक्षिणे ईर्मं व्रणं यस्य स दक्षिणेर्मा मृगः व्याधेन कृतव्रण इत्यर्थः इच्कर्मव्यतिहारे कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच्स्यात् समासांतः केशाकेशि मुसलामुसलि द्विदंड्यादिभ्यश्च तादर्थ्ये चतुर्थ्येषा एषां सिद्ध्यर्थमिच्प्रत्ययः स्यात् द्वौ दंडौ यस्मिन्प्रहरणे तत् द्विदंडि द्विमुसलि उभाहस्ति उभयाहस्ति प्रसंभ्यां जानुनोर्ज्ञुः आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ प्रगते जानुनी अस्य प्रज्ञुः संज्ञुः ऊर्ध्वाद्विभाषा ऊर्ध्वज्ञुः ऊर्ध्वजानुः धनुषश्च धनुरंतस्य बहुव्रीहेरनङादेशः स्यात् शार्ङ्गधन्वा वा संज्ञायां शतधन्वा शतधनुः जायाया निङ् जायांतस्य बहुव्रीहेर्निङादेशः स्यात् लोपो व्योर्वलि वकारयकारयोर्लोपः स्याद्वलि पुंवद्भावः युवतिर्जाया यस्य स युवजानिः गंधस्येदुत्पूतिसुसुरभिभ्यः एभ्यो गंधस्येकारोंऽतादेशः स्यात् उद्गंधिः पूतिगंधिः सुगंधिः सुरभिगंधिः गंधस्येत्वे तत्

देकांतग्रहणं एकांतएकदेशइवअविभागेन लक्ष्यमाणइत्यर्थः सुगंधिपुष्पंसलिलंच सुगंधिर्वायुः नेह
शोभनाः गंधाः द्रव्याण्यस्य सुगंधआपणिकः अल्पाख्यायां सूपस्यगंधोलेशोयस्मिन् तत्सूपगंधि
भोजनं घृतगंधि गंधोगंधकआमोदे लेशेसंबंधगर्वयोरितिविश्वः उपमानाच्च पद्मस्येवगंधोऽस्यप
द्मगंधि पादस्यलोपोऽहस्त्यादिभ्यः हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्यलोपः स्याद्बहु
व्रीहौस्थानिद्वारेणायंसमासांतः व्याघ्रस्येवपादावस्य व्याघ्रपात् अहस्त्यादिभ्यः किं हस्तिपादः कुसूल
पादः कुंभपदीषुच कुंभपद्यादिषुपादस्य लोपोङीप्चनिपात्यतेस्त्रियां पादःपत् कुंभपदी स्त्रियांकिं
कुंभपादः संख्यासुपूर्वस्य पादस्यलोपः स्यात्समासांतोबहुव्रीहौ द्विपात् सुपात् वयसिदंतस्यद
तृ संख्यासुपूर्वस्यदंतस्यदतृइत्यादेशः स्याद्वयसिद्विदन् चतुर्दन् षड्दंताअस्यषोडन् सुदन् सुदती
वयसिकिं द्विदंतः करी सुदंतः स्त्रियांसंज्ञायां दंतस्यदतृस्यात्समासांतोबहुव्रीहौ अयोदती फाल
दती संज्ञायांकिं समदंती विभाषाश्यावारोकाभ्यां दंतस्यदतृवास्याद्बहुव्रीहौ श्यावदन् श्यावदंतः
अरोकदन् अरोकदंतः अग्रांतशुद्धशुभ्रवृषवराहेभ्यश्च एभ्योदंतस्यदतृवा कुड्मलाग्रदन् कुड्
मलाग्रदंतः ककुदस्यावस्थायां लोपः अजातककुत् पूर्णककुत् त्रिककुत्पर्वते त्रीणि ककुदानियस्य
त्रिककुत् संज्ञैषापर्वतविशेषस्यत्रिककुदोऽन्यः उद्विभ्यां काकुदस्य लोपः उत्काकुत् विकाकुत् काकुदं
तालु पूर्णाद्विभाषा पूर्णकाकुत् पूर्णकाकुदः सुहृद्दुर्हृदौमित्रामित्रयोः सुदुर्भ्यां हृदयस्य हृद्भावो
निपात्यते सुहृन्मित्रं दुर्हृदमित्रः अन्यत्रतुसुहृदयः दुर्हृदयः उरःप्रभृतिभ्यः कप् उरःप्रभृत्यंताद्बहुव्रीहे

कप् स्यात् व्यूढोरस्कः प्रियसर्पिष्कः इह पुमान् अनड्वान् पयः नौः लक्ष्मीः इत्येकवचनांतानि पठ्यंते द्विव
चनबहुवचनांतेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप् द्विपुमान् द्विपुंस्कः अर्थान्नञः अनर्थकं नञः किं
अपार्थं अपार्थकं इनस्त्रियां बहुदंडिका नगरी अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदंतविधिं प्र
योजयंति बहुवाग्मिका स्त्रियां किं बहुदंडी को ग्रामः शेषाद्विभाषा अनुक्तसमासांताच्छेषाधिकारस्था
द्बहुव्रीहेः कप् वा स्यात् महायशस्कः महायशाः अनुक्ते त्यादि किं व्याघ्रपात् सुगंधिः प्रियपथः शेषाधि
कारस्थात् किं उपबहवः उत्तरपूर्वा सपुत्रः तंत्रादिना शेषशब्दोर्थद्वयपरः आपोऽन्यतरस्यां कपि आबंत
स्य ह्रस्वो वा स्यात् बहुमालाकः बहुमालकः कबभावे बहुमालः न संज्ञायां शेषादिति प्राप्तः कप् न-
स्यात् संज्ञायां विश्वे देवा अस्य विश्वदेवः ईयसश्च ईयसंतोत्तरपदान्न कप् बहवः श्रेयांसो यस्य बहु
श्रेयान् गोस्त्रियोरिति ह्रस्वे प्राप्ते ईयसो बहुव्रीहेर्नेति वाच्यं बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ब
हुव्रीहेः किं अतिश्रेयसिः वंदिते भ्रातुः पूजितेऽर्थे यो भ्रातृशब्दस्तदंतान्न कप् प्रशस्तो भ्राता य-
स्य स प्रशस्तभ्राता सुभ्राता न पूजनादिति निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवेति वक्ष्यते
वंदिते किं मूर्खभ्रातृकः नाडीतंत्र्योः स्वांगे स्वांगे यौ नाडीतंत्रीशब्दौ तदंतात् कप् न स्यात् बहुना
डिः कायः बहुतंत्रीर्ग्रीवा तंत्रीर्धमनी स्त्रीमस्यां तत्वाभावात् ह्रस्वो न स्वांगे किं बहुनाडीकः स्तं
बः बहुतंत्रीका वीणा निष्प्रवाणिश्च कबभावोऽत्र निपात्यते प्रपूर्वो वयतेर्ल्युट् प्रवाणी तंतुवायशला
का निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः समासवान् नवड्वर्थः सप्तमीविशेषणे बहुव्रीहौ सप्तम्यं

तद्विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यं कंठेकालः अत एव ज्ञापकात् व्यधिकरणपदो बहुव्रीहिः चित्रगुः सर्वना
मसंख्ययोरुपसंख्यानं सर्वश्वेतः द्विशुक्लः मिथोनयोः समासे संख्या पूर्वं शब्द परविप्रतिषेधात् सं
ख्याः संख्याया अल्पीयस्याः द्वित्राः द्वंद्वे ऽपि द्वादश वा प्रियस्य गुडप्रियः प्रियगुडः गड्वादेः परा सप्त
मी गडुकंठः क्वचिन्न वहेगडुः निष्ठा निष्ठांतं बहुव्रीहौ पूर्वं स्यात् कृतकृत्यः जातिकालसुखादिभ्यः
परा निष्ठा वाच्या सारंगजग्धी मासजाता सुखजाता प्रायिकं चेदं कृतकटः पीतोदकः वाहिताग्न्यादि
षु आहिताग्निः अग्न्याहितः आकृतिगणोऽयं प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ अस्युद्यतः दंडपा-
णिः क्वचिन्न विवृतासिः इति बहुव्रीहिः चार्थे द्वंद्वः अनेकं सुबंतं चार्थे वर्त्तमानं वा समस्यते स द्वंद्वः
समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः
अन्यतरस्यानुषंगिकत्वेऽन्वाचयः मिलितानामन्वय इतरेतरयोगः समूहः समाहारः तत्रेश्वरं गुरुं च भ
जस्वेति समुच्चये भिक्षामट गां चानयेत्यन्वाचये च न समासोऽसामर्थ्यात् धवखदिरौ संज्ञापरिभाषं
अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः द्वयोर्द्वयोर्द्वंद्वं कृत्वा पुनर्द्वंद्वे तु होतापोतानेष्टोद्गातारः राजदंतादिषु उप
रं एषु पूर्वप्रयोगार्हं परं स्यात् दंतानां राजा राजदंतः धर्मादिष्वनियमः अर्थधर्मौ धर्मार्थौ दंपती जं
पती जायापती जायाशब्दस्य जंभावो दंभावश्च वा निपात्यते आकृतिगणोऽयं द्वंद्वे घि द्वंद्वे घिसंज्ञं
पूर्वं स्यात् हरिश्च हरश्च हरिहरौ अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे हरिगुरुहराः हरिहरगुरवः
अजाद्यदंतं द्वंद्वे पूर्वं स्यात् ईशकृष्णौ बहुष्वनियमः अश्वरथेंद्राः इंद्राश्वरथाः घ्यंतादजाद्यदं

तंविप्रतिषेधेन इंद्राग्नी अल्पाच्तरं शिवकेशवौ ऋतुनक्षत्राणांसमाक्षराणामानुपूर्व्येण हेमंतशिशि
रवसंताः कृत्तिकारोहिण्यौ समाक्षराणांकिं ग्रीष्मवसंतौ लघ्वक्षरंपूर्वं कुशकाशं अभ्यर्हितंच तापसप
र्वतौ वर्णानामानुपूर्व्येण ब्राह्मणक्षत्रियविट्शूद्राः भ्रातुर्ज्यायसः युधिष्ठिरार्जुनौ द्वंद्वश्चप्राणितूर्यसे
नांगानां एषांद्वंद्वएकवत्स्यात् पाणिपादं मार्दंगिकपाणविकं रथिकाश्वारोहं समाहारस्यैकत्वादेकत्वेसि
द्धेनियमार्थंप्रकरणं प्राण्यंगादीनांसमाहारएवयथास्यात् अनुवादेचरणानां चरणानांद्वंद्वएकवत्स्या
त्सिद्धस्योपन्यासे स्थेणोर्लुङिति वक्तव्यं उदगात्कठकालापं प्रत्यष्ठात्कठकौथुमं अध्वर्युक्रतुरनपुंस
कं यजुर्वेदेविहितोयः क्रतुस्तद्वाचिनामनपुंसकलिंगानांद्वंद्वएकवत्स्यात् अर्काश्वमेधं अध्वर्युःक्रतुःकिं
इषुवज्रौ सामवेदेविहितौ अनपुंसकंकिं राजसूयवाजपेये अर्धर्चादिः अध्ययनतोविप्रकृष्टाख्यानां
अध्ययनेनप्रत्यासन्नाआख्यायेषांतेषांद्वंद्वएकवत्स्यात् पदकक्रमकं जातिरप्राणिनां प्राणिवर्जजातिवा
चिनांद्वंद्वएकवत्स्यात् धानाशष्कुलि प्राणिनांतुविट्शूद्राः द्रव्यजातीयानामेव नेह रूपरसौ गमनाकुं-
चने जातिप्राधान्यएवायमेकवद्भावः द्रव्यविशेषविवक्षायांतु बदरामलकानि विशिष्टलिंगोनदीदेशोग्रा
माः ग्रामवर्जनदीदेशवाचिनांभिन्नलिंगानांसमाहारेद्वंद्वएकवत्स्यात् उद्ध्यश्चइरावतीचउद्ध्यैराव
ती गंगाचशोणश्चगंगाशोणं कुरवश्चकुरुक्षेत्रंचकुरुकुरुक्षेत्रं भिन्नलिंगानांकिं गंगायमुने मद्रकेक-
याः अग्रामाः किं जांबवन्नगरं शाल्मूकिनीग्रामः जांबवशाल्मूकिन्यौ क्षुद्रजंतवः एषांसमाहारेद्वंद्वएक
वत्स्यात् यूकालिक्षं आनकुलात्क्षुद्रजंतवः येषांचविरोधःशाश्वतिकः एषांप्राग्वत् अहिनकु

लं गोव्याघ्रं काकोलूकमित्यादौ परत्वाद्विभाषावृक्षमृगेति प्राप्तं चकारेण बाध्यते शूद्राणामनिरवसि
तानां अबहिष्कृतानां शूद्राणां प्राग्वत् तक्षायस्कारं पात्राद्वहिर्भूतानां तु चंडालमृतपाः गवाश्वप्रभृती
नि च यथोच्चारितानि साधूनि गवाश्वं दासीदासमित्यादि विभाषावृक्षमृगतृणधान्यव्यंजनपशुश
कुन्यश्ववडवपूर्वापराधरोत्तराणां वृक्षादीनां सप्तानां द्वंद्वः अश्ववडवेत्यादि द्वंद्वत्रयं च प्राग्वत् वृक्षादौ
विशेषाणामेव ग्रहणं प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः रुरुपृषतं रुरुपृषताः कुशकाशं कुशकाशाः व्रीहियवं
व्रीहियवाः दधिघृतं दधिघृते गोमहिषं गोमहिषाः शुकबकं शुकबकाः अश्ववडवं अश्ववडवौ पूर्वापरं
पूर्वापरे अधरोत्तरं अधरोत्तरे फलसेनावनस्पतिमृगशकुनिक्षुद्रजंतुधान्यतृणानां बहुप्रकृतिकएव
द्वंद्वएकवदिति वाच्यं बदराणि चामलकानि च बदरामलकं जातिरप्राणिनामित्येकवद्भावः नेह बदराम
लके रथिकाश्वारोहौ प्लक्षन्यग्रोधावित्यादि विभाषावृक्षेति सूत्रे ये ऽप्राणिनस्तेषां ग्रहणं जातिरप्राणि
नामिति नित्यं प्राप्ते विकल्पार्थं पशुग्रहणं हस्त्यश्वादिषु सेनांगत्वान्नित्यं प्राप्ते मृगाणां मृगैरेव शकुनीनां
तैरेवोभयत्र द्वंद्वः अन्यैस्तु सहेतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणं एवं पूर्वापरमधरोत्तरमित्यपि
अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थं अन्यथा परत्वात् पूर्ववदश्ववडवाविति स्यात् विप्रतिषिद्धं चानधिक
रणवाचि विरुद्धार्थानामद्रव्यवाचिनां द्वंद्व एकवद्वा शीतोष्णं वैकल्पिकसमाहारे द्वंद्वश्चार्थ इति सूत्रेण प्रा
प्तः सविरुद्धार्थानां यदि भवति तर्हि द्रव्यवाचिनामेवेति नियमार्थमिदं तेन द्रव्यवाचिनामितरेतरयोगए
व शीतोष्णे उदके स्तः विप्रतिषिद्धं किं नंदकपांचजन्यौ इह पाक्षिकः समाहारे द्वंद्वो भवत्येव नदधिपय

आदीनि एतानिनैकवत्स्युः दधिपयसी इध्माबर्हिषी निपातनाद्दीर्घः ऋक्सामे वाङ्मनसे अधिकर
णैतावत्वेच द्रव्यस्यसंख्यावगमेएकवद्वेतिनियमोनस्यात् दशादंतोष्ठाः विभाषासमासे अधिकरणे
तावत्वस्यसामीप्येनपरिच्छेदेसमाहारएवेत्येवंरूपोनियमोवास्यात् उपदशं दंतोष्ठं उपदंशाः दंतोष्ठाः
आनङृतोद्वंद्वे विद्यायोनिसंबंधवाचिनामृदंतानांद्वंद्वेआनङ्स्यादुत्तरपदेपरे होतापोतारौ होतृपो
तृनेष्टोद्गातारः मातापितरौपुत्रेन्यतरस्यामित्यतोमंडूकप्लुत्यापुत्रइत्यनुवृत्तेः पितापुत्रौ देवताद्वंद्वेच इ
होत्तरपदेपरे आनङ्मित्रावरुणौ वायुशब्दप्रयोगेप्रतिषेधः अग्निवायू वाय्वग्नी पुनर्द्वंद्वग्रहणंप्र-
सिद्धसाहचर्यस्यपरिग्रहार्थं तेनब्रह्मप्रजापतीत्यादौनानङ् एतद्धिनैकहविर्भागित्वेनश्रुतंनापिलोकेप्र
सिद्धसाहचर्यं ईदग्नेःसोमवरुणयोः देवताद्वंद्वइत्येव अग्नेःस्तुत्स्तोमसोमाः अग्नेःपरेषामेषांसस्यष
स्यात्समासे अग्निष्टुत् अग्निष्टोमः अग्नीषोमौ अग्नीवरुणौ इद्वृद्धौ वृद्धिमत्युत्तरपदेऽग्नेरिदादेशःस्या
त्देवताद्वंद्वे अग्नामरुतौदेवताऽस्याग्निमारुतंकर्म अग्नीवरुणौदेवतास्याग्निवारुणं देवताद्वंद्वेचेत्युभ
यपदवृद्धिः अलौकिकेवाक्येआनङ्मीत्वंचबाधित्वाइत् वृद्धौकिं आग्नेंद्रः नेंद्रस्यपरस्येत्युत्तरपदवृ
द्धिप्रतिषेधः विष्णोन आग्नावैष्णवं दिवोद्यावा देवताद्वंद्वेउत्तरपदे द्यावाभूमी द्यावाक्षामा दिवसश्च
पृथिव्यां दिवइत्येव चात् द्यावा आदेशेअकारोच्चारणंसकारस्यरुत्वंमाभूदित्येतदर्थं द्यौश्चपृथिवीच
दिवस्पृथिव्यौ द्यावापृथिव्यौ छंदसिदृष्टानुविधिः द्यावाचिदस्मैपृथिवी दिवस्पृथिव्योरित्यत्रपदका
राविसर्गंपठंति उषासोषसः उषस्शब्दस्यउषासादेशोदेवताद्वंद्वेउषासासूर्यं मातरपितरावुदीचां उदी

चांकिं मातापितरौ द्वंद्वाच्चुदषहांतात्समाहारे चवर्गांताद्दषहांताच्चद्वंद्वाट्टच्स्यात्समाहारे वाक्त्वचं त्वक्स्रजं शमीदृषदं वाक्त्विषं छत्रोपानहं समाहारेकिं प्रावृट्शरदौ इतिद्वंद्वः अथैकशेषः सरूपाणां रामौ रामाः विरूपाणामपिसमानार्थानां वक्रदंडश्चकुटिलदंडश्च वक्रदंडौ कुटिलदंडौ वृद्धोयूना तल्लक्षणश्चेदेवविशेषः यूनासहोक्तौगोत्रंशिष्यते गोत्रयुवप्रत्ययमात्रकृतंचेत्तयोः कृत्स्नंवैरूप्यंस्यात् गार्ग्यश्चगार्ग्यायणश्चगार्ग्यौ वृद्धः किं गर्गगार्ग्यायणौ यूनाकिं गर्गगार्ग्यौ तल्लक्षणः किं भागवित्तिर्भागवित्तिकौ कृत्स्नंकिं गार्ग्यवात्स्यायनौ स्त्रीपुंवच्च यूनासहोक्तौ वृद्धा स्त्रीशिष्यते तदर्थश्चपुंवत् गार्गीचगार्ग्यायणश्चगर्गाः अस्त्रियामित्यनुवर्त्तमाने यञञोश्चेतिलुक् दाक्षीचदाक्षायणश्चदाक्षी पुमान्स्त्रिया स्त्रियासहोक्तौपुमान्शिष्यते तल्लक्षणएवविशेषश्चेत् हंसीच हंसश्चहंसौ भ्रातृपुत्रौस्वसृदुहितृभ्यां भ्राताचस्वसाचभ्रातरौ पुत्रश्चदुहिताचपुत्रौ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यां अक्लीबेनसहोक्तौक्लीबंशिष्यतेतच्चवाएकवत्स्यात्तल्लक्षणएवविशेषश्चेत् शुक्लः पटः शुक्लाशाटी शुक्लंवस्त्रं तदिदंशुक्लं तानीमानिशुक्लानि पितामात्रा मात्रासहोक्तौपितावाशिष्यते माताच पिताचपितरौ मातापितरौ श्वशुरः श्वश्र्वा श्वश्रूवासहोक्तौश्वशुरोवाशिष्यते श्वशुरौ श्वश्रूश्वशुरौ त्यदादीनिसर्वैर्नित्यं सर्वैःसहोक्तौत्यदादीनिनित्यंशिष्यंते सचदेवदत्तश्चतौ त्यदादीनांमिथःसहोक्तौयत्परंतच्छिष्यते सचयश्चयौ पूर्वशेषोऽपिदृश्यतइतिभाष्यं सचयश्चतौ त्यदादितःशेषेपुंनपुंसकतोलिंगवचनानि साचदेवदत्तश्चतौ तच्चदेवदत्तश्चयज्ञदत्ताचतानि पुंनपुंसकयोस्तुपरत्वान्न

पुंसकंशिष्यते तच्चदेवदत्तश्चते अहंहतत्पुरुषविशेषणानामितिवक्तव्यं कुक्कुटमयूर्याविमे मयूरीकु
कुटाविमौ तच्चसावअर्द्धपिप्पल्यौते ग्राम्यपशुसंघेष्वतरुणेषुस्त्री एषुसहविवक्षायांस्त्रीशिष्यते
पुमान्स्त्रियेत्यस्यापवादः गावइमाः ग्राम्येतिकिं रुरवइमे पशुषुकिं ब्राह्मणाः संघेषुकिं एतौ गावौ अ
तरुणेषुकिं वत्साइमे अनेकशफेष्वितिवाच्यं अश्वाइमे इहसर्वत्रैकशेषेकृतेअनेकाभावात् द्वंद्वोन तेन
शिरसीसिरांसीत्यादौसमासस्येत्यंतोदात्तः प्राण्यंगत्वादेकवद्भावश्चनपंथानौ पंथानइत्यादौसमा
सांतोन इत्येकशेषः कृत्तद्धितसमासैकशेषसनाद्यंतधातुरूपाः पंचवृत्तयः परार्थाभिधानंवृत्तिः वृ
त्यर्थावबोधकंवाक्यंविग्रहः सद्विधः लौकिकोलौकिकश्च परिनिष्ठितत्वात्साधुर्लौकिकः प्रयोगानर्हो
साधुरलौकिकः यथाराज्ञः पुरुषः राजन्अस्पुरुषस्इति अविग्रहोनित्यसमासः अस्वपदविग्रहोवा
समासश्चतुर्द्धेतितुप्रायोवादः अव्ययीभावतत्पुरुषबहुव्रीहिद्वंद्वाधिकारबहिर्भूतानामपिसहसुपेति
विधानात् पूर्वपदार्थप्रधानोऽव्ययीभावः उत्तरपदार्थप्रधानस्तत्पुरुषः अन्यपदार्थप्रधानोबहुव्रीहिः
उभयपदार्थप्रधानो द्वंद्वइत्यपि प्राचांवादः प्रायोऽभिप्रायः सूपप्रतिउन्मत्तगंगमित्यादौअव्ययीभावे
अतिमालादौतत्पुरुषेद्वित्राइत्यादिबहुव्रीहौ दंतोष्ठमित्यादौद्वंद्वेचाभावात् तत्पुरुषविशेषः कर्मधा
रयः तद्विशेषोद्विगुः अनेकपदत्वंद्वंद्वबहुव्रीह्योरेव तत्पुरुषः क्वचिदेवेत्युक्तं किंच सुपांसुपातिङाना
म्नाधातुनाथतिङांतिङासुबंतेनेतिचज्ञेयः समासः षड्विधोबुधैः १ सुपाराजपुरुषः तिङापर्यभूषत्
नाम्नाकुंभकारः धातुनाकटप्रूः अजस्रं तिङांतिङा पिबतखादता तिङांसुपा कृंतविचक्षणेतियस्यांक्रि

यायांसा कृतविचक्षणा एङीडादयो ऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात्समासः इति सर्वत्रसमास
शेषः ऋक्पूरब्धूःपथामानक्षे अअनक्ष इतिच्छेदः ऋगाद्यंतस्य समासस्य अप्रत्ययों ऽ तावयवःस्या
त् अक्षेया धूस्तदंतस्य न अर्द्धर्चं अर्द्धर्चः अनृचबह्वृचावध्येतर्येव नेह अनृक्साम बह्वृक्सूक्तं वि
ष्णोःपूः विष्णुपुरं क्लीबत्वं लोकात् विमलापं सरः व्द्यंतरुपसर्गेभ्यो ऽप ईत् अप इति कृतसमासांत
स्यानुकरणं षष्ठ्यर्थे प्रथमा एभ्यो ऽपस्य ईत्स्यात् द्विर्गता आपो स्मिन्निति द्वीपं अंतरीपं प्रतीपं समीपं
समापो देवयजनमितितु समाः आपोस्मिन्निति बोध्यं कृतसमासांतग्रहणान्नेह स्वप् स्वपी अवर्णां
ताद्वा प्रेपं परेपं प्रापं परापं ऊदनोर्देशे अनोः परस्यापस्य ऊत्स्याद्देशे अनूपो देशः राजधुरा अक्षेत्वक्ष
धूः दृढधूरक्षः सखिपथो रम्यपथो देशः अच्प्रत्यन्ववपूर्वात्सामलोम्नः एतत्पूर्वात्सामलोमांतात्समा
सादच्स्यात् प्रतिसामं अनुसामं अवसामं प्रतिलोमं अनुलोमं अवलोमं कृष्णोदक्पांडुसंख्यापूर्वा
याभूमेरजिष्यते कृष्णभूमः उदक्भूमः पांडुभूमः द्विभूमः त्रिभूमः प्रासादः संख्याया नदीगोदावरी
भ्यांच पंचनदं सप्तगोदावरं अजिति योगविभागादन्यत्रापि पद्मनाभः अक्ष्णो ऽदर्शनात् अचक्षुः
पर्यायादक्ष्णो ऽच्स्यात्समासांतः गवामक्षीव गवाक्षः अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडु
ह्वर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेय
सपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः एते पंचविंशतिर
जंता निपात्यंते आद्यास्त्रयो बहुव्रीहयः अविद्यमानानि चत्वार्यस्य अचतुरः विचतुरः सुचतुरः त्र्यु

पाभ्यांचतुरोऽजिष्यते त्रिचतुराः चतुर्णांसमीपेउपचतुराः ततएकादशद्वंद्वाः स्त्रीपुंसौ धेन्वनडुहं
ऋक्सामे वाङ्मनसे अक्षिणीचभ्रुवौच अक्षिभ्रुवं दाराश्चगावश्च दारगवं ऊरूच अष्ठीवंतौच ऊर्वष्ठीवं निपा
तनाट्टिलोपः पदष्ठीवं निपातनात्पादशब्दस्य पद्भावः नक्तंचदिवान नक्तंदिवं रात्रौचदिवाचरात्रिंदिवं रात्रे
र्मांतत्वंनिपात्यते अहनिचदिवाचअहर्दिवं वीप्सायांद्वंद्वोनिपात्यते अहन्यहनीत्यर्थः सरजसमितिसा
कल्येऽव्ययीभावः बहुव्रीहौतुसरजः पंकजं निश्चितंश्रेयोनिःश्रेयसं तत्पुरुषएवनेह निःश्रेयान्पुरुषः
पुरुषस्यायुः पुरुषायुषं ततोद्विगू द्व्यायुषं त्र्यायुषं ततोद्वंद्वः ऋग्यजुषं ततस्त्रयः कर्मधारयाःजातो
क्षः महोक्षः वृद्धोक्षः शुनःसमीपमुपशुनं टिलोपाभावः संप्रसारणंचनिपात्यते गोष्ठेश्वागोष्ठश्वः ब्रह्म
हस्तिभ्यांवर्चसः अच्स्यात् ब्रह्मवर्चसं हस्तिवर्चसं पल्यराजभ्यांचेतिवक्तव्यं पल्यवर्चसं राजव-
र्चसं अवसमंधेभ्यस्तमसः अवतमसं संतमसं अंधयतीत्यंधं पचाद्यच् अंधंतमोऽंधतमसं श्वसो
वसीयश्रेयसः वसुशब्दः प्रशस्तवाची ततईयसुनिवसीयः श्वसुशब्दउत्तरपदार्थप्रशंसामाशीर्वि
षयतामाह मयूरव्यंसकादित्वात्समासः श्वोवसीयसंश्वःश्रेयसंतेभूयात् अन्ववतप्ताद्रहसः अनुर
हसं अवरहसं तप्तरहसं प्रतेरुरसः सप्तमीस्थात् उरसीतिप्रत्युरसं विभक्त्यर्थेऽव्ययीभावः अनुग
वमायामे एतन्निपात्यतेदीर्घत्वे अनुगवंयानं यस्यचायामइतिसमासः द्विस्तावात्रिस्तावावेदिः अ
च्प्रत्ययष्टिलोपः समासश्चनिपात्यते यावतीप्रकृतौवेदिस्ततोद्विगुणात्रिगुणावाऽश्वमेधादौतत्रेदंनिपा
तनं वेदिरिति किं द्विस्तावतीत्रिस्तावतीरज्जुः उपसर्गादध्वनः प्रगतोऽध्वानंप्राध्वोरथः नपूजनात् पूज

नार्थात् परेभ्यः समासांतानस्युः सुराजा अतिराजा स्वतिभ्यामेव नेह परमराजः पूजनात्किं गामतिक्रांतो ऽतिगवः बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवायं निषेधः नेह सुसक्थः स्वक्षः किमः क्षेपे क्षेपे यः किंशब्दस्ततः परं यत्तदंतात्समासांतानस्युः कुत्सितोराजा किंराजा किंसखा किंगौः क्षेपेकिं किंराजः किंसखः किंगवः नञस्तत्पुरुषात् समासांतोन अराजा असखा तत्पुरुषात्किं अधुरं शकटं पथो विभाषा नञ्पूर्वात्पथोवासमासांतः अपथं अपंथाः तत्पुरुषादित्येव अपथोदेशः अपथंवर्त्तते इति समासांताः अलुगुत्तरपदे अलुगधिकारः प्रागानङः उत्तरपदाधिकारस्त्वापादपरिसमाप्तेः पंचम्याः स्तोकादिभ्यः एभ्यः पंचम्या अलुक्स्यादुत्तरपदे स्तोकान्मुक्तः एवमंतिकार्थदूरार्थकृच्छ्रेभ्यः उत्तरपदे किं निष्क्रांतः स्तोकान्निस्तोकः ब्राह्मणाच्छंसिनउपसंख्यानं ब्राह्मणेविहितानिशस्त्राणिउपचारात् ब्राह्मणानि तानिशंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः द्वितीयार्थेपंचम्युपसंख्यानादेव ओजः सहों ऽभस्तमसस्तृतीयायाः ओजसाकृतमित्यादि अंजसउपसंख्यानं अंजसाकृतं आर्जवेनकृतमित्यर्थः पुंसानुजोजनुषांधइतिच यस्याग्रजः पुमान्सपुंसानुजः जनुषांधोजात्यंधः मनसः संज्ञायां मनसागुप्ता आज्ञायिनिच मनसइत्येव मनसा आज्ञातुंशीलमस्य मनसाज्ञायी आत्मनश्च आत्मनस्तृतीयाया अलुक्स्यात् पूरणइतिवक्तव्यं पूरणप्रत्ययांते उत्तरपदे परतइत्यर्थः आत्मना पंचमः जनार्दनस्त्वात्म चतुर्थ एवेति तु बहुव्रीहिर्बोध्यः पूरणेकिं आत्मकृतं वैय्याकरणाख्यायांचतुर्थ्याः आत्मनइत्येव आत्मनेपदं आत्मनेभाषा तादर्थ्येचतुर्थ्येषा चतुर्थीति योगविभागात्समासः

परस्यच परस्मैपदं परस्मैभाषा हलदंतात्सप्तम्याः संज्ञायां हलदंताददंताच्च सप्तम्याअलुक्स्यात्सं
ज्ञायांत्वचिसारः गविप्रुधिभ्यांस्थिरः आभ्यांस्थिरस्य सस्यषःस्यात् गविष्ठिरः अत्रगवीति वचना
देवालुक् युधिष्ठिरः अरण्येतिलकाः अत्रसंज्ञायामिति सप्तमीसमासः हृद्द्युभ्यांच हृदिस्पृक्
दिविस्पृक् कारनाम्निचप्राचांहलादौ प्राचांदेशेयत्कार नामतत्र हलादावुत्तरपदे हलदंतात्सप्तम्या
अलुक् मुकुटेकार्षापणं दृषदिमाषकः पूर्वेणसिद्धेनियमार्थं कारनाम्न्येवप्राचामेवहलादावेवेति कार
नाम्नीतिकिं अभ्याहितपशुः कारादन्यस्मैतद्देयस्यनाम प्राचांकिं यूथपशुः हलादौकिं अविकटोरणः
हलदंतात्किं नद्यांदोहोनदीदोहः मध्याद्गुरौ मध्येगुरुः अंताच्च अंतेगुरुः अमूर्द्धमस्तकात्स्वांगादका
मे कंठेकालःउरसिलोमा अमूर्द्धमस्तकात्किं मूर्धशिखः मस्तकशिखः अकामेकिं मुखेकामोऽस्यमु
खकामः बंधेचविभाषा हलदंतात्सप्तम्याअलुक्हस्तेबंधः हस्तबंधः हलदंतेकिं गुप्तिबंधः तत्पुरुषेकृ
तिबहुलं स्तंबेरमः कर्णेजपः क्वचिन्न कुरुचरः प्रावृट्शरत्कालदिवांजे प्रावृषिजःशरदिजःकालेजः
दिविजः पूर्वस्यायंप्रपंचः विभाषावर्षक्षरशरवरात् एभ्यःसप्तम्या अलुक्वाजे वर्षेजः वर्षजः क्ष
रेजः क्षरजः शरेजः शरजः वरेजः वरजः घकालतनेषु कालनाम्नः सप्तम्याविभाषाअलुक् घे पूर्वा
ण्हेतरे पूर्वाण्हतरे पूर्वाण्हेतमे पूर्वाण्हतमे काले पूर्वाण्हेकाले पूर्वाण्हकालेतने पूर्वाण्हेतने पूर्वाण्हतने
शयवासवासिष्वकालात् खेशयः खशयः ग्रामेवासः ग्रामवासः ग्रामेवासी ग्रामवासी अपोयोनि
यन्मतुषु अप्सुयोनिरुत्पत्तिर्यस्यसोऽप्सुयोनिः अप्सुभवोऽप्सव्यः अप्सुमंतावाज्यभागौ नेन्सिद्धब

धादिषु इन्नंतादिषु सप्तम्या अलुक्न स्थंडिलशायी सांकाश्यसिद्धः चक्रबंधः स्थेच भाषायां सप्त
म्या अलुक्न सप्तमस्थः भाषायांकिं कृष्णो ऽस्यारवरेष्ठः षष्ठ्या आक्रोशे चौरस्यकुलं आक्रोशेकिंब्रा
ह्मणकुलं वाक्दिक्पश्यन्भ्योयुक्तिदंडहरेषु वाचोयुक्तिः दिशोदंडः पश्यतोहरः आमुष्यायणामुष्यपु
त्रिकामुष्यकुलिकेतिच अमुष्यापत्यमामुष्यायणः नडादित्वात्फक् अमुष्यपुत्रस्यभाव आमुष्यपुत्रि
का मनोज्ञादित्वाद्वुञ् एवमामुष्यकुलिका देवानांप्रियइतिच मूर्खे अन्यत्र देवप्रियः शेपपुच्छलांगूले
षुशुनः शुनःशेपः शुनः पुच्छः शुनोलांगूलः दिवश्चदासे दिवोदासः पुत्रेन्यतरस्यां षष्ठ्याः पुत्रेपरे
अलुग्वानिंदायां दास्याः पुत्रोदासीपुत्रः निंदायांकिं ब्राह्मणीपुत्रः ऋतोविद्यायोनिसंबंधेभ्यः वि
द्यायोनिसंबंधवाचिनः ऋदंतात् षष्ठ्या अलुक् होतुरंतेवासी होतुःपुत्रः पितुरंतेवासी पितुःपुत्रः विद्या
योनिसंबंधेभ्यस्तत्पूर्वोत्तरपदग्रहणं नेह होतृधनं पितृगृहं विभाषास्वसृपत्योः ऋदंतात् षष्ठ्या अ
लुक्वा स्वसृपत्योः परयोः मातुःपितुर्भ्यामन्यतरस्यां आभ्यांस्वसुः सस्यषोवास्यात्समासे मा
तुःस्वसा पितुःस्वसा लुक्पक्षे मातृपितृभ्यांस्वसा आभ्यांपरस्यस्वसुः सस्यषः स्यात्समासे मा-
तृष्वसा पितृष्वसा असमासेतुमातुःस्वसा पितुःस्वसा इत्यलुक्समासः घरूपकल्पचेलड्ब्रुवगो
त्रमतहतेषुङ्योऽनेकाचोन्हस्वः भाषितपुंस्काद्योङीतदंतस्याऽनेकाचो-ह्रस्वः स्यात् घरूपकल्पम
त्ययेषुपरेषु चेलडादिषुचोत्तरपदेषु ब्राह्मणितरा ब्राह्मणितमा ब्राह्मणिरूपा ब्राह्मणिकल्पा ब्राह्मणि
चेली ब्राह्मणिब्रुवा ब्राह्मणिगोत्रेत्यादि ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावोनिपात्यते चेलडादीनि

वृत्तिविषये कुत्सनवाचीनितैः कुत्सितानि कुत्सनैरिति समासः ङ्यः किम् दत्तातरा भाषितपुंस्कात्किं आ
मलकीतरा कुवलीतरा नद्याः शेषःस्यान्यतरस्यां अङ्यंतनद्याः ङ्यंतैकाचश्च घादिषु ह्रस्वो वास्यात् ब्रह्मबं
धूतरा ब्रह्मबंधूतरा स्त्रितरा स्त्रीतरा कृन्नद्यान लक्ष्मीतरा उगितश्च उगितः परायानदीतदंतस्य घादि
षु ह्रस्वोवास्यात् विदुषितरा ह्रस्वाभावपक्षे तसिलादिष्विति पुंवत् विद्वत्तरा त्वयादिषुतु विदुषीतरेत्यादा
हृतं तन्निर्मूलं हृदयस्य हृल्लेखयदण्लासेषु हृदयंलिखतीतिहृल्लेखः हृदयस्यप्रियंहृद्यं हृदयस्ये
दंहार्द्दं हृल्लासः लेखेत्यणंतस्य ग्रहणं घञि तु हृदयलेखः लेखग्रहणमेवज्ञापकं उत्तरपदाधिकारे तदंत
विधिर्नास्तीति वाशोकष्यञ्रोगेषु हृच्छोकः सौहार्द्यं सौहृदय्यं हृद्रोगः हृदयरोगः हृदयशब्दपर्या
योहृच्छब्दोऽप्यस्ति तेनसिद्धे प्रपंचार्थमिदं पादस्यपदाज्यातिगोपहतेषु एषूत्तरपदेषु पादस्यपद
इत्यदंतादेशः स्यात् पादाभ्यामजतीतिपदाजिः पदातिः अज्यतिभ्यां पादेचेतीण्प्रत्ययः अजेर्व्यभावोनि
पातनात् पदगः पदोपहतः पद्यत्यतदर्थे पादस्यपत्स्यादतदर्थेयतिपरे पादौविध्यंतिपद्याः शर्कराः अतद
र्थे किं पादार्थमुदकंपाद्यं इकेचरतावुपसंख्यानं पादाभ्यांचरतीतिपदिकः पर्पादित्वात्ष्ठन् हिमकाषि
हतिषुच पद्धिमं पत्काषिः पद्धतिः ऋचःशे ऋचः पादस्यपत्स्यात् शेपरे गायत्रींपच्छः शंसति पादंपा
दमित्यर्थः ऋचः किं पादशः कार्षापणंददाति वाघोषमिश्रशब्देषु पादस्यपत् पद्घोषः पादघोषः प
न्मिश्रः पादमिश्रः पच्छब्दः पादशब्दः निष्केचेतिवाच्यं पन्निष्कः पादनिष्कः उदकस्योदः संज्ञायां
उदमेघः उत्तरपदस्यचेतिवक्तव्यं क्षीरोदः पेषवासवाहनधिषुच उदपेषंपिनष्टि उदवासः उदवाहनः

उदधिर्घटः समुद्रे तु पूर्वेण सिद्धं एकहलादौ पूरयितव्ये ऽन्यतरस्यां उदकुंभः उदककुंभः एकेति किं उदक
स्थाली पूरयितव्ये किं उदकपर्वतः मंथौदनसक्तुबिंदुवज्रभारहारवीवधगाहेषु च उदमंथः उदकमंथः
उदौदनः उदकौदनः उदगाहः पूर्ववत् इको ह्रस्वो ऽङ्यो गालवस्य इगंतस्याङ्यंतस्य ह्रस्वो वा स्यादुत्तरपदे
ग्रामणिपुत्रः ग्रामणीपुत्रः इकः किं रमापतिः अङ्यः किम् गौरीपतिः गालवग्रहणं पूजार्थं अन्यतरस्यामि
त्यनुवृत्तेः इयङुवङ्भाविनामव्ययानां च नेति वाच्यं श्रीमदः भ्रूभंगः शुक्लीभावः अभ्रुकुंसादीनामि
ति वक्तव्यं भ्रुकुंसः भ्रुकुटिः भ्रूकुंसः भ्रूकुटिः अकारो ऽनेन विधीयत इति व्याख्यांतरं भ्रकुंसः भ्रकु
टिः भ्रुवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्तकः भ्रुवः कुटिः कौटिल्यं एक तद्धिते च एक-
शब्दस्य ह्रस्वः स्यात् तद्धिते उत्तरपदे च एकस्या आगतं एकरूप्यं एकक्षीरम् ङ्यापोः संज्ञाछंदसोर्बहु
लं रेवतिपुत्रः अजक्षीरम् त्वे च त्वे प्रत्यये परे ङ्यापोर्ह्रस्वः स्यात् अजत्वं रोहिणित्वं रोहिणीत्वं ष्यङः
संप्रसारणं पुत्रपत्योस्तत्पुरुषे ष्यङंतस्य पूर्वपदस्य संप्रसारणं स्यात् पुत्रपत्योरुत्तरप दयोस्तत्पुरुषे सं
प्रसारणस्य संप्रसारणस्य दीर्घः स्यादुत्तरपदे परे कौमुदगंध्यायाः पुत्रः कौमुदगंधीपुत्रः कौमुदगंधीप
तिः व्यवस्थितविभाषया ह्रस्वो न स्त्रीप्रत्यये चानुपसर्जने इति तदादिनियमप्रतिषेधात् परमकारीष
गंधीपुत्रः उपसर्जने तु तदादिनियमान्नेह अतिकारीषगंध्यापुत्रः बंधुनि बहुव्रीहौ बंधुशब्दे उत्तरपदे
ष्यङः संप्रसारणं स्याद्बहुव्रीहौ कारीषगंध्या बंधुरस्येति कारीषगंधीबंधुः बहुव्रीहौ किं कारीषगंध्या
याः बंधुः कारीषगंध्याबंधुः क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया मातच्मातृकमातृषु वा कारीषगंधी

मातः कारीषगंध्यामातः कारीषगंधीमातृकः कारीषगंध्यामातृकः कारीषगंधीमाता कारीषगंध्यामाता
अस्मादेवनिपातनान्मातृशब्दस्यमातजादेशः कब्विकल्पश्च बहुव्रीहावेवेदं नेहकारीषगंध्यायाःमा
ता कारीषगंध्यामाता चित्वसामर्थ्यात् चित्स्वरोबहुव्रीहिस्वरंबाधते इष्टकेषीकामालानांचिततू
लभारिषु इष्टकादीनांतदंतानांचपूर्वपदानांचितादिषुक्रमादुत्तरपदेषुन्हस्वःस्यात् इष्टकचितं पक्केष्टक
चितं इषीकतूलं मुंजेषीकतूलं मालभारी उत्पलमालभारी कारेसत्यागदस्य मुम्स्यात् सत्यंकारःअ
गदंकारः अस्तोश्चेतिवक्तव्यं अस्तुंकारः धेनोर्भव्यायां धेनुंभव्या लोकस्यपृणे लोकंपृणः पृणइति
मूलविभुजादित्वात्कः इत्ये ऽनभ्याशस्य अनभ्याशमित्यः दूरतःपरिहर्त्तव्यइत्यर्थः भ्राष्ट्राग्न्योरिंधे
भ्राष्ट्रमिंधः अग्निमिंधः गिले ऽगिलस्य तिमिंगिलःअगिलस्यकिं गिलगिलः गिलगिलेच तिमिंगिलगि
लः उष्णभद्रयोःकरणे उष्णंकरणं भद्रंकरणं रात्रेःकृतिविभाषा रात्रिंचरः रात्रिचरः रात्रिमटःरात्र्यटः
अखिदर्थमिदंसूत्रं खितितुअरुर्द्विषदितिनित्यमेववक्ष्यते रात्रिंमन्यः सहस्यसःसंज्ञायां उत्तरपदे
सपलाशं संज्ञायांकिं सहयुध्वा ग्रंथांताधिकेच अनयोरर्थयोःसहस्यसःस्यादुत्तरपदे समुहूर्तंज्यो
तिषमधीतेसद्रोणाखारी द्वितीयेचा ऽनुपाख्ये अनुमेयेद्वितीयेसहस्यसः स्यात् सराक्षसीका
निशा राक्षसीसाक्षादनुपलभ्यमानानिशयानुमीयते समानस्यच्छंदस्यमूर्द्धप्रभृत्युदर्केषु समा
नस्यसः स्यादुत्तरपदेनतुमूर्द्धादिषु अनुभ्रातासगर्भ्यःअनुसखासयूथ्यः योनः सतुत्यः तत्रभवइत्य
र्थेसगर्भसयूथसतुताद्यत् अमूर्द्धादिषुकिं समानमूर्द्धा समानप्रभृतयःसमानोदर्काःसमानस्येतियोगो

विभज्यते तेनसपक्षः साधर्म्येसजातीयइत्यादिसिद्धमितिकाशिकाअथवासहशब्दःसदृशवचनोऽ
स्ति सदृशःसख्यासखीतियथा तेनाऽयमस्वपदविग्रहोबहुव्रीहिः समानःपक्षोस्येत्यादि ज्योति
र्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबंधुषु एषुद्वादशसूत्तरपदेषुसमानस्यसः
स्यात् सज्योतिःसजनपदइत्यादि चरणेब्रह्मचारिणि ब्रह्मचारिण्युत्तरपदेसमानस्यसःस्याच्चरणे
समानत्वेनगम्यमाने चरणःशाखा ब्रह्मवेदः तदध्ययनार्थंव्रतमपिब्रह्म तच्चरतीतिब्रह्मचारीसमान
स्यसःसब्रह्मचारी तीर्थेये तीर्थेउत्तरपदे यादौप्रत्ययेविवक्षितेसमानस्यसः स्यात् सतीर्थ्यः एकगु
रुकः समानतीर्थेवासीति यत्प्रत्ययः विभाषोदरे यादौप्रत्ययेविवक्षितइत्येवसोदर्यः समानोदर्यः दृ
ग्दृशवतुषु सदृक्सदृशःदृक्षेचेतिवक्तव्यं सदृक्षः वतुरुत्तरार्थः इदंकिमोरीश्की दृग्दृशवतुषु इद
मईश्किमःकीस्यात् ईदृक् ईदृशः कीदृक् कीदृशः वतूदाहरणंतुवक्ष्यते दृक्षेच ईदृक्षःकीदृक्षःआ
सर्वनाम्नः सर्वनाम्नआकारःस्यात् दृक्दृशवतुषु दृक्षेच तादृक् तादृशः तावान् तादृक्षःदीर्घःमत्वोत्वे अ
मूदृक् अमूदृक्षः अमूदृशः समासेऽगुलेःसंगः अंगुलिशब्दात्संगस्यसस्यमूर्धन्यःस्यात्समासे अंगु-
लिषंगः समासेकिं अंगुलेःसंगः भीरोःस्थानं भीरुशब्दात्स्थानस्यसस्यमूर्द्धन्यःस्यात्समासे भीरुष्ठानं
असमासेतुभीरोः स्थानं ज्योतिरायुषःस्तोमः आभ्यांस्तोमस्यसः स्यमूर्धन्यःस्यात्समासे ज्योतिष्टो
मः आयुष्टोमः समासेकिं ज्योतिषःस्तोमः सुषामादिषु सस्यमूर्धन्यः शोभनंसामयस्य सुषामा सुषंधिः
एतिसंज्ञायामगात् सस्यमूर्द्धन्यः हरिषेणः एतिकिं हरिसक्थः संज्ञायांकिं पृथुसेनः अगकारात्किं वि

ष्वक्सेनः इण्कोरित्येव नेह सर्वसेनः नक्षत्राद्वा एतिसंज्ञायामगकारान्मूर्धन्योवा रोहिणीषेणः रोहि
णीसेनः अगकारात्किंशतभिषक्सेनः आकृतिगणोयं अषष्ट्यतृतीयास्थस्याऽन्यस्यदुगाशीराशा
स्थास्थितोत्सुकोतिकारकरागच्छेषु अन्यशब्दस्यदुगागमः स्यादाशीरादिषुपरेषु अन्यदाशीः अ-
न्यदाशा अन्यदास्था अन्यदास्थितः अन्यदुत्सुकः अन्यदूतिः अन्यद्रागः अपष्ठीत्यादिकिं अन्यस्या
न्येनवा आशीरन्याशीः कारकेच्छेचनायंनिषेधः अन्यस्यकारकोऽन्यत्कारकः अन्यस्यायमन्यदी
यः गहादेराकृतिगणत्वाच्छः अर्थेविभाषा अन्यदर्थः अन्यार्थः कोः कत्तत्पुरुषेऽचिकोः कत्स्यात् अ-
जादावुत्तरपदे कुत्सितोऽश्वः कदश्वः कदन्नं तत्पुरुषेकिं कूष्ट्रोराजा त्रौच कुत्सितास्त्रयः कत्त्रयः रथ
वद्योश्च कद्रथः कद्वदः तृणेचजातौ कत्तृणं कापथ्यक्षयोः कापथं काक्षः अक्षशब्देनतत्पुरुषः
अक्षिशब्देनबहुव्रीहिर्वा ईषदर्थे ईषज्जलं काजलं अजादावपिपरत्वात्कादेशः काम्लः विभाषापुरुषे
कापुरुषः कुपुरुषः अप्राप्तविषयं ईषदर्थोहि पूर्वविप्रतिषेधान्नित्यमेव कवंचोष्णे उष्णशब्देउत्तरपदेक
वंकाचवास्यात् कवोष्णं कोष्णं कदुष्णं पृषोदरादीनियथोपदिष्टं पृषोदरप्रकाराणिशिष्टैर्यथोच्चारिता
नितथैवसाधूनि पृषतः उदरंपृषोदरं तलोपः वारिवाहकोबलाहकः पूर्वपदस्यबः उत्तरपदादेश्चलत्वंभवेद्व
र्णागमाद्धंसः सिंहोवर्णविपर्ययात् गूढोत्मावर्णविकृतेर्वर्णनाशात्पृषोदरं १ दिक्शब्देभ्यस्तीरस्यतारभा
वोवा दक्षिणतारंदक्षिणतीरं उत्तरतारं उत्तरतीरं दुरोदाशनाशदभध्येषूत्वमुत्तरपदादेःष्टुत्वंच दुःखे
नदाश्यतेदूडाशः दुःखेननाश्यतेदूणाशः दुःखेनदभ्यतेदूडभ्यः खलन्तिभ्यः दंभेर्नलोपोनिपात्यते दुःखेन

ध्यायतीतिदूढ्यः आतश्चोपसर्गेइतिकः ब्रुबंतोऽस्यांसीदंतीति ब्रसीब्रुवच्छब्दस्य ब्रूआदेशः संदेरधिकर
णेडट् आकृतिगणोयं संहितायां अधिकारोऽयं कर्णेलक्षणस्याविष्टाष्टपंचमणिभिन्नच्छिन्न
च्छिद्रस्रुवस्वस्तिकस्य कर्णशब्देपरेलक्षणवाचकस्यदीर्घः द्विगुणाकर्णः लक्षणवाचकस्यकिं शोभ
नकर्णः अविष्टादीनांकिं विष्टकर्णः अष्टकर्णः पंचकर्णः मणिकर्णः भिन्नकर्णःछिन्नकर्णः छिद्रकर्णः स्रुव
कर्णः स्वस्तिककर्णः नहिवृतिवृषिव्यधिरुचिसहितनिषुक्वौ क्विबंतेषेषु परेषु पूर्वस्याणोदीर्घःस्यात्
उपानत् नीवृत् प्रावृट् मर्मावित् नीरुक् अभीरुक् ऋतीषट् परीतत् क्वाविति किं परिणहनं विभाषापुरु
षइत्यतो मंडूकप्लुत्याविभाषानुवर्तते साचव्यवस्थिता तेनगतिकारकयोरेव नेह पटुरुक् तिग्मरुक् वन
गिर्योःसंज्ञायां कोटरकिंशुलकादीनां कोटरादीनांवनेपरे किंशुलकादीनां गिरौपरेदीर्घः स्यात्सं
ज्ञायां वनंपुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः वनशब्दस्योत्तरपदस्यएभ्यएवणत्वंनत्व
न्येभ्यः इहकोटरांताः पंचदीर्घविधौ कोटरादयोबोध्यः तेषांकृतदीर्घाणांणत्वविधौनिर्देशोनियमा
र्थः अग्रेशब्दस्यतुविध्यर्थः पुरगावणं मिश्रकावणं सिध्रकावणं सारिकावणं कोटरावणं एभ्यएवे
तिकिं असिपत्रवनं वनस्याग्रेअग्रेवणं राजदंतादिषुनिपातनात्सप्तम्याअलुक् प्रातिपदिकार्थमात्रे
प्रथमा किंशुलकागिरिः वले वलप्रत्ययेपरेदीर्घःस्यात्संज्ञायां कृषीवलः मतौबह्वचोऽनजिरा
दीनां अमरावती अनजिरादीनांकिं अजिरवती बह्वचःकिं व्रीहिमती संज्ञायामित्येव नेह वलय
वती शरादीनांच शरावती इकोवहेऽपीलोः इगंतस्यदीर्घःस्याद्वहे कृषीवहं कपीवहं इकःकिं पिं

इवहं अपीलोः किम् पीलुवहं अपील्वादीनामिति वक्तव्यं दारुवहं उपसर्गस्य घञ्यमनुष्ये बहुलं उप
सर्गस्य बहुलं दीर्घः स्यात् घञंते परे नतु मनुष्ये परियाकः परीपाकः अमनुष्ये किं निषादः इकः काशे इगं
तस्योपसर्गस्य दीर्घः स्यात्काशे वीकाशः नीकाशः इकः किं प्रकाशः अष्टनः संज्ञायां उत्तरपदे दीर्घः अ
ष्टापदं संज्ञायां किं अष्टपुत्रः चितेः कपि एकचितीकः द्विचितीकः नरे संज्ञायां विश्वानरः मित्रे चर्षौ वि
श्वामित्रः ऋषौ किं विश्वमित्रो माणवकः शुनो दंतदंष्ट्राकर्णकुंद वराहपुच्छ पदेषु दीर्घो वाच्यः श्वाद
तइत्यादि प्रनिरंतःशरेक्षु प्लक्षाम्र कार्श्यखदिरपीयूक्षाभ्यो ऽसंज्ञायामपि एभ्यो वनस्य णत्वं स्यात्
प्रवणं कार्श्यवणं इहषात्परत्वाण्णत्वं विभाषौषधिवनस्पतिभ्यः वनस्य णत्वं वा स्यात् दूर्वावणं दूर्वाव
नं शिरीषवणं शिरीषवनं द्व्यच्त्र्यच्भ्यामेव नेह देवदारुवनं इरिकादिभ्यः प्रतिषेधो वाच्यः इरिका
वनं मिरिकावनं वाहनमाहितात् आरोप्य यदुह्यते तद्वाचिस्छान्निमित्तात्परस्य वाहन नकारस्य णत्वं
स्यात् इक्षुवाहणं आहितात्किं इंद्रवाहनं इंद्रस्वामिकं वाहनमित्यर्थः वहतेर्ल्युटि वृद्धिरिहैं वसूत्रेनि
पातनात् पानंदेशे पूर्वपदस्छान्निमितात्परस्य पानस्य नस्य णत्वं स्यात् देशे गम्ये क्षीरं पानं येषां ते क्षी
रपाणा उशीनराः सुरापाणाः प्राच्याः पीयत इति पानं कर्मणि ल्युट् वा भावकरणयोः पानस्येत्येव क्षी
रपाणं क्षीरपानं गिरिनद्यादीनां वा गिरिणदी गिरिनदी चक्रणितंबा चक्रनितंबा प्रातिपदिकांतनु
म्विभक्तिषु च पूर्वपदस्थान्निमित्तात्परस्येषु स्थितस्य नस्य णः स्याद्वा प्रातिपदिकांते माषवापिणौ नु
मि व्रीहिवापाणि विभक्तौ माषवापेण पक्षे माषवापिनावित्यादि उत्तरपदं यत्प्रातिपदिकं तदंतस्यैव ण-

त्वं नेह गर्गाणांभगिनीगर्गभगिनी अतएवत्तुमूग्रहणंकृतं अंगस्यत्तुम्विधानात्तद्धक्तोहित्तुम् नतूत्तरपद
स्य किंचप्रह्णिण्वन्नित्यादौहिवेर्तुमोणत्वार्थमपित्तुमूग्रहणं प्रेन्वनमित्यादौक्षुभ्नादित्वान्न युवादोर्न र
म्ययूना परिपक्वानि एकाजुत्तरपदेणः नित्यमित्युक्तं वृत्रहणौ हरिंमानयतीतिहरिमाणी त्तुमिक्षीरपा
णि विभक्तौक्षीरपेण रम्यवीणा कुमतिच कवर्गवत्युत्तरपदेप्राग्वत् हरिकामिणौ हरिकामाणि हरिका
मेण पदव्यवायेऽपि पदेनव्यवधानेणत्वंन माषकुंभवापेन चतुरंगयोगेन अतद्धित इतिवाच्यं आ
र्द्रगोमयेण शुष्कगोमयेण कुस्तुंबुरूणिजातिः अत्रसुट्निपात्यते कुस्तुंबुरुधान्याकं क्लीबत्वमतंत्रं
जातिः किं कुतुंबुरूणि कुत्सितानितिंदुकीफलानीत्यर्थः अपरस्पराः क्रियासातत्ये अत्रसुणिनपात्य
ते अपरस्पराः सार्थागच्छंति सततमविच्छेदेनगच्छंतीत्यर्थः क्रियेतिकिम् अपरपरागच्छंति अपरे
चपरेचसकृदेवगच्छंतीत्यर्थः गोष्पदंसेवितासेवितप्रमाणेषु सुट्सस्यषत्वंचनिपात्यते गावःपद्यंतेऽ
स्मिन्देशेसगोभिःसेवितोगोष्पदः असेविते अगोष्पदान्यरण्यानि प्रमाणे गोष्पदमात्रंक्षेत्रं सेवितेति
किं गोःपदंगोपदं आस्पदंप्रतिष्ठायां आत्मयापनायस्थानेसुट्निपात्यते प्रेतिकिं आपदापदं आश्च
र्यमनित्ये अद्भुतेसुट् आश्चर्यंयदिसभुंजीत अनित्येकिं आचर्यंकर्मशोभनं वर्चस्केऽवस्करः कु
त्सितंवर्चोवर्चस्कमन्नमलं तस्मिन्सुट् अवकीर्यतइत्यवस्करः वर्चस्केकिं अवकरः अपस्करोऽरथां
गं अप करोऽन्यः विष्किरःशकुनौवा पक्षेविकिरः वावचनेनैवसुड्विकल्पेसिद्धेविकिरग्रहणंतस्या
पिशकुनेरन्यत्रप्रयोगोमाभूदितिवृत्तिस्तन्न भाष्यविरोधात् प्रतिष्कशश्चकशेः कशगतिशासनयो

रित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते कशेरिति किं
प्रतिगतः कशां प्रति कशोऽश्वः यद्यपि कशेरेव कशा तथापि कशेरिति धातोर्ग्रहणं उपसर्गस्य प्रतेर्ग्रहणा
र्थं तेन धात्वंतरोपसर्गान्न प्रस्कण्वहरिश्चंद्रावृषी हरिश्चंद्रग्रहणमसंत्रार्थं ऋषीति किं प्रकण्वो देशः ह
रिचंद्रो माणवकः मस्करमस्करिणौ वेणुपरिव्राजकयोः मकरशब्दोऽव्युत्पन्नस्तस्य सुट् निश्च निपा
त्यते वेण्विति किं मकरो ग्राहः मकरी समुद्रः कास्तीराजस्तुंदे नगरे ईषत्तीरमस्येति कास्तीरं नाम नगरं
अजस्येव तुंदमस्येत्यजस्तुंदं नाम नगरं नगरे किं कातीरं अजतुंदं कारस्करो वृक्षः कारं करोतीति कार
स्करः वृक्षः अन्यत्र कारकरः केचित्तु कस्कादिष्विदं पठंति न तु सूत्रेषु पारस्करप्रभृतीनि च संज्ञायां एता
नि ससुट्कानि निपात्यंते नाम्नि पारस्करः किष्किंधा तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोप
श्च तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः तद्बृहतोर्दकारतकारौ लुप्येते करपत्योस्तु सुट् चोरदेवतयोरिति स
मुदायोपाधिः तस्करः बृहस्पतिः प्रायस्य चित्तिचित्तयोः प्रायश्चित्तिः प्रायश्चित्तं वनस्पतिरित्यादि
आकृतिगणोऽयम् इति समासाश्रयविधयः समर्थानां प्रथमाद्वा इदं पदत्रयमधिक्रियते प्रा
ग्दिश इति यावत् सामर्थ्यं परिनिष्ठितत्वं कृतसंधिकार्यत्वमिति यावत् प्राग्दीव्यतोऽण् तेन दीव्यती
त्यतः प्रागणधिक्रियते अश्वपत्यादिभ्यश्च एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु वक्ष्यमाणस्यण्य
स्यापवादः तस्मिंतेष्वचामादेः ञिति णिति च तद्धितपरेऽचामादेरचो वृद्धिः स्यात् किति च किति त
द्धिते च तथा अश्वपतेरपत्यादि आश्वपतं गाणपतं गाणपत्यो मंत्र इति तु प्रामादिकमेव दित्यदित्यादि

स्यपत्युत्तरपदाण्ण्यः दित्यादिभ्यः प्रत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषुण्यः स्यादणोऽपवादः दैत्यः अदि
तेरादित्यस्य वा आदित्यः प्राजापत्यः यमाच्चेति काशिकायां याम्यः पृथिव्या ञाञौ पार्थिवा पार्थिवी
देवाद्यञञौ दैव्यं दैवं बहिषष्टिलोपो यञ्च बाह्यः ईकक्च बाहीकः स्थाम्नोऽकारः अश्वत्थामः
पृषोदरादित्वात् सस्यतः भवार्थे तु लुग्वाच्यः अश्वत्थामा लोम्नोऽपत्येषु बहुषु बाह्वादीञोऽपवादः
उडुलोमाः उडुलोमान् बहुषु किं औडुलोमिः गोरजादिप्रसंगे यत् गव्यं अजादिप्रसंगे किं गोभ्यो हेतुभ्य
आगतं गोरूप्यं गोमयं उत्सादिभ्योऽञ् औत्सः अग्निकलिभ्यां ढग्वक्तव्यः अग्नेरपत्यादि आग्नेयं का-
लेयं इत्यपत्यादिविकारांतार्थेषु साधारणाः प्रत्ययाः स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् धान्यानां
भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः स्त्रैणः पौंस्नः वत्यर्थेन स्त्रीपुंवच्चेति ज्ञापका
त् स्त्रीवत् पुंवत् द्विगोर्लुगनपत्ये द्विगोर्निमित्तं यस्ताद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक्
स्यात् पंचसु कपालेषु संस्कृतः पुरोडाशः पंचकपालः द्विगुनिमित्तस्येति किं पंचकपालस्येदं खंडं पांचक
पालं अजादिरिति किं पंचगर्गरूप्यं अनपत्ये किं द्वयोर्मित्रयोरपत्यं द्वैमित्रिः गोत्रेऽलुगचि अजादौ प्रा
ग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्याऽलुक् स्यात् गर्गाणां छात्राः वृद्धाच्छः आपत्यस्य च तद्धितेऽना-
ति हलः परस्यापत्ययकारस्य लोपः स्यात्तद्धिते न त्वाकारे गार्गीयाः प्राग्दीव्यती किं गर्गेभ्यो हितं गर्गी
यं अचि किं गर्गेभ्य आगतं गर्गरूप्यं यूनि लुक् प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लु
क् ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः वक्ष्यमाणः फिञ् ततो यून्यण् ग्लौचुकायनः तस्य च्छात्रोऽपि ग्लौ

चुकायनः अणोलुकि वृद्धत्वाभावाच्छोन पैलादिभ्यश्च एभ्योयुवप्रत्ययस्यलुक् पीलायावेत्यण् तस्मा
दणोद्व्यचइतिफिञ् तस्यलुक् पैलः पितापुत्रश्च तद्राजाच्चाणः तद्राजसंज्ञकोयोऽण् तदंताद्युवप्रत्ययस्य
लुक्स्यात् द्व्यञ्मगधेत्यणंतादांगशब्दादणोद्व्यचइतिफिञ् तस्यलुक् आंगः पितापुत्रश्च इञः प्राचां
गोत्रेयइञ् तदंताद्युवप्रत्ययस्यलुक्स्यात्तच्चेद्गोत्रंप्राचांभवति पन्नागारस्यापत्यं अतइञ् यञिञोश्चे
तिफक् पान्नागारिः पितापुत्रश्च प्राचांकिं दाक्षिःपिता दाक्षायणः पुत्रः नतौल्वलिभ्यः तौल्वल्यादिभ्यः
परस्ययुवप्रत्ययस्यलुक्नस्यात् पूर्वेणप्राप्तः तुल्वलः ततइञिफक् तौल्वलिः पिता तौल्वलायनः पुत्रः
फक्फिञोरन्यतरस्यां यूनिलुगितिनित्येलुकिप्राप्ते विकल्पार्थमिदंसूत्रं कात्यायनस्यच्छात्राः का
तीयाः कात्यायनीयाः यस्कस्यापत्यं यास्कः शिवाद्यण् तस्यापत्यंयुवा यास्कायनिः अणोद्व्यचइति
फिञ् तस्यच्छात्राः यास्कीयाः यास्कायनीयाः तस्यापत्यंम् षष्ठ्यंतात्कृतसंधेः समर्थादपत्येऽर्थेउ
क्तावक्ष्यमाणाश्चप्रत्ययावास्युः उपगोरपत्यमौपगवः आदिवृद्धिरल्योपधावृद्धिंबाधते तस्येदमित्य
पत्येऽपिबाधनार्थंकृतंभवेत् उत्सर्गः शेषएवासौवृद्धान्यस्यप्रयोजनं १ यद्यपि तस्येदमित्येवापत्ये
प्यण्सिद्धिः तथापि अतइञ् इत्याद्यर्थं तस्यापत्यमितितावद्वक्तव्यं योगविभागस्तु भानोरपत्यंभा
नवइत्यत्रवृद्धाच्छंबाधितुं तथाहि असतियोगविभागेप्रकृतिविशेषसंबद्धस्यैवापत्यार्थस्योपयो
गात्ततोन्योपत्यार्थः शेषएवस्यात् तथाचवृद्धाच्छ इतिप्रसज्येत योगविभागेतुकृते अपत्यार्थस्योप
योगात् शेषत्वाभावेनवृद्धाच्छस्यप्राप्तिरेवनास्तीति भानोरपत्यंभानवः कृतसंधेः किंम् सौत्थितिः

अकृतव्यूहा इतिपरिभाषया सावुस्थितिर्माभूत् समर्थपरिभाषयानेह वस्त्रमुपगोरपत्यंचैत्रस्य प्रथमात्किं
अपत्यवाचकात् षष्ठ्यर्थेमाभूत् वाग्रहणाद्वाक्यमपि दैवयज्ञीतिसूत्रादन्यतरस्यांग्रहणानुवृत्तेः समासो
ऽपि उपग्वपत्यं जातित्वान्ङीष् औपगवी आश्वपतः दैत्यः औत्सः स्त्रैणः पौंस्नः अपत्यंपौत्रप्रभृतिगो
त्रं अपत्यत्वेनविवक्षितं पौत्रादिगोत्रसंज्ञंस्यात् जीवतितुवंश्ये युवा वंश्येपित्रादौजीवति पौत्रादेर्यदप
त्यंचतुर्थादि तद्युवसंज्ञमेवस्यात् नतुगोत्रसंज्ञं भ्रातरिचज्यायसि ज्येष्ठेभ्रातरिजीवतिकनीयांश्चतुर्था
दिर्युवास्यात् वान्यस्मिन्सपिंडे स्थविरतरेजीवति भ्रातुरन्यस्मिन्सपिंडे स्थविरतरेजीवति पौत्रप्रभृ
तेरपत्यंजीवदेव युवसंज्ञंस्यात् एकंजीवतिग्रहणं अपत्यस्यविशेषणं द्वितीयंसपिंडस्य तरप्निर्देशउभ
योरुत्कर्षार्थः स्थानेनवयसा चोत्कृष्टेपितृव्ये मातामहेभ्रातरिवाजीवति गर्गस्यापत्यंगार्ग्यो गार्ग्याय
णोवा स्थविरेतिकिं स्थानवयोन्यूनेगार्ग्यएव जीवतिकिम् मृतेमृतोवागार्ग्यएव वृद्धस्यच पूजायामि
तिवाच्यं गोत्रस्यैववृद्धसंज्ञाप्राचां गोत्रस्ययुवसंज्ञापूजायांगम्यमानायां तत्रभवान् गार्ग्यायणः पूजे
तिकिं गार्ग्यः यूनश्चकुत्सायां गोत्रसंज्ञेतिवाच्यं गार्ग्योजाल्मः कुत्सेतिकिं गार्ग्यायणः एकोगोत्रे गो
त्रेएकएवापत्यप्रत्ययः स्यात् उपगोर्गोत्रापत्यमौपगवः गार्ग्यः नाडायनः गोत्रेस्वैकोनसंख्यानांप्रत्यया
नांपरंपरा यद्वास्वव्यूनसंख्येभ्यो ऽनिष्टोत्पत्तिः प्रसज्यते १ अपत्यंपितुरेवस्यात्ततः प्राचामपीतिचस
तप्रभेदेनतद्व्यान्येसूत्रमेतत्तथोत्तरं २ पितुरेवापत्यमितिपक्षेहिउपगोस्तृतीयेवाच्येऔपगवादिञ्स्यात् च
तुर्थेत्वजीवत्ज्येष्ठेमृतवंश्ये औपगवेः फक् इत्थंफगिञोः परंपरायांमूलाच्छततमेगोत्रे एकोनशतंप्रत्य-

यास्कः पितामहादीनामपीति मुख्यपक्षेतु तृतीयेवाच्ये उपगोरणाइष्टे सिद्धे ऽपिअणूणंतादिञपिस्या
त् चतुर्थे ततः फगिति फगिञोः परंपरायांशततमे गोत्रेअष्टनवतेरनिष्टप्रत्ययाः स्फः अतोनियमार्थमि
दंसूत्रं एवमुत्तरसूत्रेप्यूह्यं गोत्राद्यून्यस्त्रियां यून्यपत्येगोत्रप्रत्ययांतादेवप्रत्ययः स्यात् स्त्रियांतुनयुव
संज्ञा गर्गस्ययुवापत्यंगार्ग्यायणः स्त्रियांगोत्रत्वादेकएवप्रत्ययः अतइञ् अदंतंयत्प्रातिपदिकंतत्प्रकृति
कात् षष्ठ्यंतादिञ् स्यादपत्ये ऽर्थे दाक्षिः बाह्वादिभ्यश्च बाहविः औडुलोमिः आकृतिगणोऽयम् सुधा
तुरकङ्च चादिञ् सुधातुरपत्यंसौधातकिः व्यासवरुडनिषादचंडालबिंबानांचेतिवक्तव्यं नैय्वा
भ्यांपदांताभ्यांपूर्वौतुताभ्यामैच् पदांताभ्यांयकारवकाराभ्यांपरस्यनवृद्धिः किंतुताभ्यांपूर्वौक्रमा
दैचावागमौस्तः वैय्यासकिः वारुडकिः इत्यादि गोत्रेकुंजादिभ्यश्च्फञ् व्रातच्फञोरस्त्रियांव्रा
तवाचिभ्यश्च्फञंतेभ्यश्चस्वार्थेञ्यः स्यान्नतुस्त्रियां कौंजायन्यः बहुत्वेनद्राजत्वाल्लुक्वक्ष्यते व्राध्ना
यन्यः स्त्रियांतुकौंजायनी गोत्रत्वेनजातित्वान्ङीष् अनंतरापत्येकौंजिः नडादिभ्यःफक् गोत्रइत्ये
व नाडायनः चारायणः अनंतरोनाडिः हरितादिभ्योञः एभ्योऽञंतेभ्योयूनिफक् हारितायनः इहगो
त्राधिकारेऽपिसामर्थ्याद्यून्ययं नहिगोत्रादपरोगोत्रप्रत्ययः बिदाद्यंतर्गणोहरितादिः यञिञोश्च गो
त्रेयौयञिञौ तदंतात्फक्स्यात् अनातीत्फक्केरापत्यस्येति यलोपो नगार्ग्यायणः दाक्षायणः शरद्वच्छु
नकदर्भाद्भृगुवत्साग्रायणेषु गोत्रेफक् अञिञोरपवादः आद्यौबिदादी शारद्वतायनोभार्गवश्चेत् शा
रद्वतोऽन्यः शौनकायनोवात्स्यश्चेत् शौनकोऽन्यः दार्भायणआग्रायणश्चेत् दार्भिरन्यः द्रोणपर्वतजीवं

नादन्यतरस्यां एभ्योगोत्रेफग्वा द्रौणायनःद्रौणिः पार्वतायनः पार्वतिः जैवंतायनःजैवंतिः अनादिरि
हद्रोणः अश्वत्थाम्नूयनंतरेतूपचारात् अनृष्यानंतर्येबिदादिभ्यो ऽञ् एभ्यो ऽञ् गोत्रेयेत्वत्रा ऽनृ
षयस्तेभ्यआनंतर्ये सूत्रेस्वार्थेष्यञ् बिदस्यगोत्रंबैदः अनंतरोबैदिःबाह्वादेराकृतिगणत्वादिञ् पु
त्रस्यापत्यंपौत्रःदौहित्रःगर्गादिभ्योयञ्गोत्रइत्येवगार्ग्यःवात्स्यः यञञोश्च गोत्रेयद्यञंतमयंतंचतदवय
वयोरेतयोर्लुकूस्यात् तत्कृतेबहुत्वेनतुस्त्रियां गर्गाः वत्साः बिदाःउर्वाः तत्कृतेतिकिं प्रियगार्ग्याः
स्त्रियांतुगार्ग्यःस्त्रियः गोत्रेकिम् द्वैप्याः औत्साः प्रवराध्यायप्रसिद्धमिहगोत्रं तेनेहन पौत्राःदौहि
त्राः मधुबभ्र्वोर्ब्राह्मणकौशिकयोः गोत्रे यञ् माधव्योब्राह्मणःमाधवो ऽन्यः बाभ्रव्यः कौशिकः
बाभ्रवो ऽन्यः बभ्रुशब्दस्यगर्गादिपाठात्सिद्धेनियमार्थमिदंसूत्रं गर्गादिपाठफलंतु लोहितादिका
र्यार्थं बाभ्रव्यायणी कपिबोधादांगिरसे गोत्रेयञ्स्यात् काप्यःबोध्यः आंगिरसेकिम् कापेयः
बौधिः वतंडाच्चआंगिरसइत्येव वातंड्यः अनांगिरसेतुगर्गादौ शिवादौचपाठाद्यञणौ वातंड्यः
वातंडः लुकूस्त्रियां वतंडाच्चेतिविहितस्यलुकूस्यात्स्त्रियाम् शार्ङ्गरवादित्वात्ङीन् वतंडी अनां
गिरसेतुवातंड्यायनी लोहितादित्वात्ष्फः अणितुवातंडी ऋषित्वाद्वक्ष्यमाणःष्यङ्न अश्वादिभ्यः
फञ् गोत्रे आश्वायनःपुंसिजाते पुंसीतिप्रकृतिविशेषणं जातस्यगोत्रंजातायनः पुंसीतिकिंजा
ताया अपत्यंजातेयः भर्गात्त्रैगर्ते गोत्रेफञ् भार्गायणस्त्रैगर्तः भार्गिरन्यः शिवादिभ्योऽण् गो
त्रइतिनिवृत्तं शिवस्यापत्यंशैवः गांगः पक्षेतिकादित्वात्फिञ् गांगायनिःशुभ्रादित्वात्ढकू गांगेयः

अवृद्धाभ्योनदीमानुषीभ्यस्तन्नामिकाभ्यः अवृद्धाभ्योनदीमानुषीनामिकाभ्यो ऽण् स्यात् ढको ऽ
पवादः यामुनः नार्मदः चिंतितायाअपत्यंचैंतितः अवृद्धाभ्यः किं वाहुदेयः वासवदत्तेयः नदीत्यादि किं
वैनतेयः तन्नामिकाभ्यः किम् शोभनायाअपत्यंशौभनेयः ऋष्यंधकवृष्णिकुरुभ्यश्च ऋषयोमंत्र
द्रष्टारः वासिष्ठः वैश्वामित्रः अंधकेभ्यः श्वाफल्कः वृष्णिभ्यः वासुदेवः आनिरुद्धः शौरिरितितु
बाह्वादित्वात् कुरुभ्यः नाकुलः साहदेवः इञ् एवायमपवादोमध्ये ऽपवादन्यायात् अत्रिशब्दात्तुप
रत्वात् ढक् आत्रेयः मातुरुत्संख्यासंभद्रपूर्वायाः संख्यादिपूर्वस्यमातृशब्दस्य उदादेशः स्यात् अ
णूप्रत्ययश्च द्वैमातुरः षाण्मातुरः सांमातुरः भाद्रमातुरः आदेशार्थवचनंप्रत्ययस्तूत्सर्गेणैवसिद्धः
स्त्रीलिंगनिर्देशो ऽर्थापेक्षः तेनधान्यमातुर्न संख्येतिकिम् सौमात्रः शुभ्रादित्वाद्वैमात्रेयः कन्या
याः कनीनच ढकोपवादो ऽण् तत्सन्नियोगेनकानीनादेशश्च कानीनोव्यासः कर्णश्च अनूढायाए-
वापत्यमित्यर्थः विकर्णशुंगच्छगलाद्वत्सभरद्वाजात्रिषु अपत्ये ऽणूस्यात् वैकर्णोवात्स्यः वैकर्णि
रन्यः शौंगोभारद्वाजः शौंगिरन्यः छागलआत्रेयः छागलिरन्यः केचित्तुशुंगेत्याबंतंपठंति तेषांढ-
क्प्रत्युदाहरणं शौंगेयः पीलायावा तन्नामिकाणंबाधित्वाद्यच् इति ढकिप्राप्तेपक्षे ऽणूविधीय
ते पीलायाअपत्यंपैलः पैलेयः ढक्चमंडूकात् चादण् पक्षेइञ् मांडूकेयः मांडूकः मांडूकिः स्त्रीभ्योढ
क् स्त्रीप्रत्ययांतेभ्योढक्स्यात् वैनतेयः बाह्वादित्वात्सौमित्रिः शिवादित्वात्सापत्नः द्व्यचः द्व्यचः
स्त्रीप्रत्ययांतादपत्येढक्स्यात् तन्नामिकाणो ऽपवादः दात्तेयः पार्थइत्यत्रतुतस्येदमित्यण् इतश्चा

ऽनिञः इकारांताद्व्यचोऽपत्येढक्स्यान्नत्विञंतात् दौलेयः नैधेयः शुभ्रादिभ्यश्च ढक्स्यात् शु-
भ्रस्यापत्यंशौभ्रेयः विकर्णकुषीतकात्काश्यपे अपत्येढक् वैकर्णेयः कौषीतकेयः अन्योवैकर्णिः कौ
षीतकिः भ्रुवोवुक्च चात्ढक् भ्रौवेयः प्रवाहणस्यढे प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः
स्यात् पूर्वपदस्यतुवाढेपरे प्रवाहणस्यापत्यंप्रावाहणेयः प्रवाहणेयः तत्प्रत्ययस्यच ढांतप्रवाहणशब्द
स्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्यतुवा प्रवाहणेयस्यापत्यं प्रावाहणेयिः प्रवाहणेयिः बाह्य
तद्धितनिमित्तावृद्धिर्ढाश्रयेणविकल्पेनबाधितुंनशक्यतइतिसूत्रारंभः कल्याण्यादीनामिनङ् ए
षामिनङादेशोढक्च काल्याणिनेयः बाधकिनेयः कुलटायावा इनङ्मात्रंविकल्प्यते ढक्तुनित्यः पूर्वे
णेव कौलटिनेयः कौलटेयः सतीभिक्षुक्यत्रकुलटा यातुव्यभिचारार्थंकुलान्यटतितस्याः क्षुद्राभ्योवे
तिपक्षेद्रक् कौलटेरः हृद्भगसिंध्वंतेपूर्वपदस्यच हृदाद्यंतेपूर्वोत्तरपदयोरचामादेरचोवृ[illegible]द्धिः स्यात्ञि
ति णिति किति च सुहृदोऽपत्यंसौहार्दः सुभगायाअपत्यंसौभागिनेयः सक्तुप्रधानाःसिंधवःसक्तु
सिंधवः तेषुभवः साक्तुसैंधवः चटकायाऐरक् चटकस्येतिवाच्यं लिंगविशिष्टपरिभाषयास्त्रियामपि
चटकस्यचटकायावाअपत्यंचाटकेरः स्त्रियामपत्येलुग्वक्तव्यः तयोरेवस्त्र्यपत्यंचटका अजादित्वा
ट्टाप् गोधायाढ्रक् गौधेरः शुभ्रादित्वात्पक्षेढक् गौधेयः आरगुदीचां गौधारः रकासिद्धेआकारोच्चा
रणमन्यतोऽपिविधानार्थं जडस्यापत्यंजाडारः पंडस्यापत्यंपांडारः क्षुद्राभ्योवा अंगहीनाःशील
हीनाश्चक्षुद्रास्ताभ्योवाद्रक् पक्षेढक् काणेरः काणेयः दासेरः दासेयः पितृष्वसुश्छण् अणोऽपवादः

पैतृष्वस्त्रीयः ढकिलोपः पितृष्वसुरंत्यस्य लोपःस्यात् ढकि अतएव ज्ञापकात् ढक् पैतृष्वसेयः मातृष्वसु
श्च पितृष्वसुर्यदुक्तं तदस्यापि स्यात् मातृष्वस्त्रीयः मातृष्वसेयः चतुष्पाद्भ्यो ढञ् ढेलोपोऽकद्र्वाः
कद्रुभिन्नस्योवर्णांतस्य लोपःस्यात् ढे परे कामंडलेयः कमंडलुशब्दश्चतुष्पाज्जातिविशेषे कद्रुभिन्नस्य
किं काद्रवेयः गृष्ट्यादिभ्यश्च एभ्यो ढञ् स्यात् अण्ढकोरपवादः गार्ष्टेयः मित्रयोरपत्यं ऋष्यणि प्राप्ते
ढञ् केकयमित्रयुप्रलयानां यादेरियः एषां यकारादेरियादेशः स्यात् ञितिणितिकिति च तद्धिते परे
इतियादेशे प्राप्ते दांडिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैव
त्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि एतानि निपात्यंते इति युलोपः मैत्रेयः मैत्रेयौ यस्कादिभ्यो
गोत्रे एभ्योऽपत्यप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे नतु स्त्रियां मित्रयवः अत्रिभृगुकुत्सवसिष्ठगो
तमांगिरोभ्यश्च एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे अत्रयः भृगवः कुत्साः वसिष्ठाः गोतमाः
आंगिरसाः बह्वच इञः प्राच्यभरतेषु बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्त्तमानस्तस्य लुक्
स्यात् पन्नागाराः युधिष्ठिराः नगोपवनादिभ्यः एभ्यो गोत्रप्रत्ययस्य लुग्न बिदाद्यंतर्गणोऽयम् गौ
पवनाः शैग्रवाः तिककितवादिभ्यो द्वंद्वे एभ्यो गोत्रप्रत्ययस्य बहुषु लुक् स्यात् द्वंद्वे तैकायनश्च कैतवाय
नयश्च तिकादिभ्यः फिञ् तस्य लुक् तिककितवाः उपकादिभ्योऽन्यतरस्यामद्वंद्वे एभ्यो गोत्रप्रत्य
यस्य बहुत्वे लुक् वा स्यात् द्वंद्वे चाद्वंद्वे च भ्राष्ट्रकिकपिष्ठलाः भ्राष्ट्रकिकापिष्ठलयः लमकाः लामका-
यनाः आगस्त्यकौंडिन्ययोरगस्तिकुंडिनच् एतयोरवयवस्य गोत्रप्रत्ययस्याणो यञश्च बहुषु लु

कृ स्यादवशिष्टस्य प्रकृतिभागस्य यथासंख्यमगस्ति कुंडिनजेतावादेशौ स्तः अगस्तयः कुंडिनाः राजश्व
शुराद्यत् राज्ञोजातावेवेतिवाच्यं येचाभाव कर्मणोः यादौ तद्धितेपरे अन् प्रकृत्यास्यात् नतुभावकर्म
णोः राजन्यः श्वशुर्यः जातिग्रहणाच्छूद्रादावुत्पन्नोराजनः अन् अणि अन् प्रकृत्यास्यात् इतिटिलो
पोन अभावकर्मणोः किम् राज्ञोभावः कर्मवाराज्यं संयोगादिश्च इन् प्रकृत्याऽणिपरेचक्रिणोऽप
त्यंचाक्रिणः नमपूर्वोपत्येवर्मणः मपूर्वोऽन् प्रकृत्यानस्यादपत्येऽणि भाद्रसामः मपूर्वः किम् सौ
त्वनः अपत्येकिम् चर्मणापरिवृत्तश्चार्मणोरथः अवर्मणः किम् चक्रवर्मणोऽपत्यंचाक्रवर्मणः वाहि
तनाम्नइतिवाच्यं हितनाम्नोऽपत्यंहैतनामनः हैतनामः ब्राह्मोजातौ योगविभागोऽत्रकर्त्तव्यः
ब्राह्मइतिनिपात्यते अनपत्येऽणि ब्राह्मंहविः ततोजातौ अपत्येजातावणि ब्रह्मणष्टिलोपोनस्यात्
ब्रह्मणोऽपत्यंब्राह्मणः अपत्येकिम् ब्राह्मीऔषधिः औक्षमनपत्ये अणिटिलोपोनिपात्यते औक्षं
पदं अनपत्येकिम् उक्ष्णोऽपत्यंऔक्ष्णः षपूर्वहन्धृतराज्ञामणि षपूर्वोऽन्तस्य हनादेश्वभस्यातो-
लोपोऽणि ताक्ष्णः भ्रौणघ्नः धृतराज्ञोऽपत्यंधार्तराज्ञः षपूर्वेत्यादिकिम् सामनः अणिकिं ताक्षण्यः
क्षत्राद्घः क्षत्रियः जाताविल्येव क्षात्रिरन्यः कुलात्खः कुलीनः तदंतादपिउत्तरसूत्रे अपूर्वपदादिति
लिंगात् आढ्यकुलीनः अपूर्वपदादन्यतरस्यांयड्ढकञौ कुलादित्येव पक्षेखः कुल्यः कौलेयकः कु
लीनः पदग्रहणंकिं बहुकुल्यः बाहुकुलेयः बहुकुलीनः महाकुलादञ्खञौ अन्यतरस्यामित्यनुव
र्तते पक्षेखः माहाकुलः माहाकुलीनः महाकुलीनः दुष्कुलाड्ढक् पूर्ववत्पक्षेखः दौष्कुलेयः दुष्कुलीनः

स्वसुश्छः स्वस्रीयः भ्रातुर्व्यच्च चाच्छः अणोऽपवादः भ्रातृव्यः भ्रात्रीयः व्यन्सपत्ने भ्रातुर्व्यन्स्याद
पत्ये प्रकृतिप्रत्ययसमुदायेनशत्रौवाच्ये भ्रातृव्यः शत्रुः पाप्मनाभ्रातृव्येणेतितूपचारात् रेवत्यादिभ्य
ष्ठक् ठस्येकः अंगात्परस्यठस्यइकादेशः स्यात् रैवतिकः गोत्रस्त्रियाः कुत्सनेणच गोत्रेयास्त्रीतद्वा
चकाच्छब्दाणठकौस्तः कुत्सायां सामर्थ्याद्यूनि गार्ग्याअपत्यंगार्गोगार्गिकोवाजाल्मः भस्याढेत
द्धितइतिपुंवद्भावाद्गार्ग्यशब्दाण्णठकौ यस्येतिलोपः आपत्यस्येतियलोपः वृद्धाट्ठक्सौवीरेषुबहु
लं सुवीरदेशोद्भवाः सौवीराः वृद्धात्सौवीरगोत्राद्यूनिबहुलंठक्स्यात्कुत्सायां भागवित्तेर्भागवित्तिकः
पक्षेफक् भागवित्तायनः फेश्छच फिञंतात्सौवीरगोत्रापत्येछष्ठक्चकुत्सनेगम्ये यमुंदस्यापत्यं-
यामुंदायनिः तिकादित्वात्फिञ् तस्यापत्यंयामुंदायनीयः यामुंदायनिकः कुत्सनेकिं यामुंदायनिः
औत्सर्गिकस्याणोण्यक्षत्रियेतिलुक् सौवीरेषुकिं तैकायनिः फांटाहृतिमिमताभ्यांणफिञौ सौ
वीरेषु नेहयथासंख्यं अल्पाच्तरस्यपरनिपातात्लिंगादितिवृत्तिः भाष्येतुयथासंख्यमेवस्थितं फां
टाहृतः फांटाहृतायनिः मैमतः मैमतायनिः कुर्वादिभ्योण्यः अपत्ये कौरव्याः ब्राह्मणाः वावदूक्यः
साम्राजः क्षत्रिये साम्राज्यः साम्राजोऽन्यः सेनांतलक्षणकारिभ्यश्च एभ्योण्यः हारिषेण्यः
लाक्षण्यः कारी शिल्पी तस्मात्तांतुवाय्यः कौंभकार्यः नापित्यः उदीचामिञ् हारिषेणिः लाक्षणिः
तांतुवायिः कौंभकारिः नापितात्तुपरत्वात्फिञेव नापितायनिः तक्ष्णोऽणउपसंख्यानं ता
क्ष्णः पक्षेताक्षण्यः तिकादिभ्यःफिञ् तैकायनिः कौशल्यकार्माार्याभ्यांच अपत्येफिञ्

इञोपवादः परमप्रकृतेरेवायमिष्यते प्रत्ययसन्नियोगेन प्रकृतिरूपंनिपात्यते कुशलस्यापत्यंकौ
शल्यायनिः कर्मारस्यापत्यंकार्मार्यायणिः छागवृषयोरपि छाग्यायनिः वार्ष्यायणिः अणोद्व्यचः
अपत्येफिञ् इञोऽपवादः कार्त्र्यायणिः अणः किम् दाक्षायणः द्व्यचः किं औपगविः त्यदादीनां
वाफिञ्वाच्यः त्यादायनिः त्यादः उदीचांवृद्धादगोत्रात् आम्रगुप्तायनिः प्राचांतुआम्रगुप्तिः वृ-
द्धात्किं दाक्षिः अगोत्रात्किं औपगविः वाकिनादीनांकुक्च अपत्येफिञ् वा वाकिनस्यापत्यं वा-
किनकायनिः वाकिनिः पुत्रांतादन्यतरस्यां अस्माद्वाफिञ्सिद्धिः तस्मिन्परे पुत्रांतस्यवा कुक्वि
धीयते गार्गीपुत्रकायणिः गार्गीपुत्रायणिः गार्गीपुत्रिः प्राचामवृद्धात्फिन्बहुलं ग्लुचुकायनिः
मनोर्जातावञ्यतौषुक्च समुदायार्थोजातिः मानुषः मनुष्यः जनपदशब्दात्क्षत्रियादञ् जन
पदक्षत्रिययोर्वाचकादञ्स्यादपत्ये दांडिनायनेतिसूत्रेनिपातनाट्टिलोपः ऐक्ष्वाकः ऐक्ष्वाकौ क्ष
त्रियसमानशब्दाज्जनपदात्तस्यराजन्यपत्यवत् तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासा
मर्थ्यात् पंचालानांराजापांचालः पूरोरण्वक्तव्यः पौरवः पांडोर्ड्यण् पांड्यः साल्वेयगांधा-
रिभ्यांच आभ्यामपत्येऽञ् वृद्धेदितीञ्यडोपवादः साल्वेयः गांधारः तस्यराजन्यप्येवं द्व्यञ्मग
धकलिंगसूरमसादण् अञोऽपवादः द्व्यञ् आंगः वांगः सौह्मः मागधः कालिंगः सौरमसः तस्य
राजन्यप्येवं वृद्धेत्कोसलाजादाञ्ञ्यङ् वृत्स्यात् आंबष्ठ्यः सौवीर्यः इत् आवंत्यः कौसल्यः अ-
जादस्यापत्यं आजाद्यः कुरुनादिभ्योण्यः कौरव्यः नैषध्यः सनैषधस्यार्थपतेरित्यादौतुशैषि

कोऽण् साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् साल्वोजनपदस्तदवयवाउदुंबरादयस्तेभ्यः
प्रत्यग्रथादिभ्यस्त्रिभ्यश्चइञ्स्यादणोपवादः औदुंबरिः प्रात्यग्रथिः कालकूटिः आश्मकिः राजन्य
प्येवं तेतद्राजाः अणादयएतत्संज्ञाःस्युः तद्राजस्यबहुषुतेनैवास्त्रियां बहुष्वर्थेषुतद्राजस्यलु
कूस्यात्तदर्थकृते बहुत्वेनतुस्त्रियां इक्ष्वाकवः पंचालाः इत्यादि कथंतर्हि कौरव्याः पशवः तस्या
मेवरघोःपांड्याइति कौरव्येपांड्येचसाधवइतिसमाधेयं रघूणामन्वयंवक्ष्ये निरुह्यमानायदुभिः
कथंचिदितितुरघुयदुशब्दयोस्तदपत्येलक्षणाया कंबोजाल्लुक् अस्मात्तद्राजस्यलुक् कंबोजः
कंबोजौ कंबोजादिभ्यश्चइतिवक्तव्यं चोलः शकः व्यन्नूलक्षणस्याणोलुक् केरलःयवनःअञो
लुक् कंबोजाःसमरेइतिपाठःसुगमः दीर्घपाठेतुकंबोऽजोभिजनोयेषामित्यर्थः सिंधुतक्षशि
लादिभ्योऽणञावित्यञ् स्त्रियामवंतिकुंतिकुरुभ्यश्च तद्राजस्यलुक्स्यात् अवंतीकुंती कुरूः
अतश्च तद्राजस्याकारस्यस्त्रियांलुक्स्यात् शूरसेनी मद्री कथंमाद्रीसुताविति ह्रस्वएवपाठइति
हरदत्तः भर्गादित्वंवाकल्प्यं नप्राच्यभर्गादियौधेयादिभ्यः एभ्यस्तद्राजस्यनलुक्स्त्रियां पांचाली
वैदर्भी आंगीवांगी मागधी एतेप्राच्याःभार्गी कारूशी कैकेयी केकयीत्यत्रतुजन्यजनकभावलक्षणे
पुंयोगेङीष् युधा शुक्रा आभ्यांव्यचइतिढक् ततः स्वार्थेपर्श्वादियौधेयादिभ्योऽणञावित्यञ् शार्ङ्गर
वाद्यञइतिङीन् अतश्चेतिलुकितुढगंतत्वात्ङीप्युदात्तनिवृत्तिःस्वरःस्यात् यौधेयी शौक्रेयी अणि
ञोरनार्षयोर्गुरूपोत्तमयोःष्यङ् गोत्रे अयादीनामंत्यमुत्तमंतस्यसमीपमुपोत्तमंगोत्रेयावणिञौ

विहितावनार्षौ तदंतयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियांष्यङादेशः स्यात् निर्दिश्यमानस्यादे
शाभवंतीत्यणिञोरेव षङाविति यङश्चाप् कुमुदगंधेरपत्यंस्त्री कौमुदगंध्या वाराह्या अनार्षयोः
किं वासिष्ठी वैश्वामित्री गुरूपोत्तमयोः किं औपगवी जातिलक्षणो ङीष् गोत्रे किम् अहिच्छत्रे जा
ता आहिच्छत्री गोत्रावयवात् गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः
स्त्रियांष्यङादेशः स्यात् अगुरूपोत्तमार्थ आरंभः पौणिक्या भौणिक्या क्रौड्यादिभ्यश्च स्त्रियां
ष्यङ् प्रत्ययः स्यात् अगुरूपोत्तमार्थोऽनणिञर्थश्चारंभः क्रौड्या व्याड्या सूतयुवत्यां सूत्या भोज
क्षत्रिये भोज्या दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकांठेविद्धिभ्योऽन्यतरस्यां एभ्यश्चतुर्भ्यः ष्यङ्वा
अगोत्रार्थमिदं गोत्रेऽपि परत्वात्प्रवर्तते पक्षे इतोमनुष्येति ङीष् दैवयज्ञ्या दैवयज्ञी इत्यादि इत्य
पत्याधिकारः तेनरक्तंरागात् तेनरक्तमित्यर्थे रागादण् स्यात् रज्यतेऽनेनेति रागः कषायेण
रक्तंवस्त्रं काषायं मांजिष्ठं रागात्किं देवदत्तेन रक्तं वस्त्रं लाक्षारोचनाट्ठक् लाक्षिकः रौचनिकः
शकलकर्दमाभ्यामुपसंख्यान शाकलिकः कार्दमिकः आभ्यामणपीति वृत्तिकारः शाकलः कार्द
मः नील्याअन् नील्यारक्तंनीलं पीतात्कन् पीतकं हरिद्रामहारजनाभ्यामञ् हारिद्रं माहारज
नं नक्षत्रेणयुक्तः कालः पुष्येणयुक्तं पौषमहः पौषीरात्रिः लुबविशेषे पूर्वेणविहितस्य लुप् स्या
त् षष्टिदंडात्मकस्यकालस्यावांतरविशेषश्चेन्नगम्यते अद्य पुषः कथंतर्हि पुष्ययुक्ता पौर्णमासी पौषी
ति विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य इति निर्देशेन पौर्णमास्यामयं लुब्नेति ज्ञापितत्वात्

श्रवणशब्दात्तु अत एव लुप् युक्तवद्भावाभावश्च अबाधकान्यपि निपातनानि भवंति श्रावणी संज्ञायांश्र
वणाश्वत्थाभ्यां विशेषार्थोऽयमारंभः श्रवणारात्रिः अश्वत्थोमुहूर्तः संज्ञायांकिं श्रावणी आश्व-
त्थी द्वंद्वाच्छः नक्षत्रद्वंद्वाद्युक्ते काले छः स्यादविशेषे सत्यसति च तिष्यपुनर्वसवीयमहः राधानुराधीया
रात्रिः दृष्टंसाम तेनेत्येव वसिष्ठेन दृष्टंवासिष्ठंसाम अस्मिन्नर्थेऽणूडिद्वावक्तव्यः उशनसा दृष्टंऔ
शनसं औशनं कलेर्ढक् कलिनादृष्टंसाम कालेयंसाम वामदेवाड्ड्यड्ड्यौ वामदेवेन दृष्टंसाम वाम
देव्यं सिद्धे यस्येति लोपे नकिमर्थमयतोडितौ ग्रहणंमातदर्थे भूद्वामदेव्यस्य नञ् स्वरे परिवृतोरथः
वस्त्रैः परिवृतोवास्त्रोरथः रथः किं वस्त्रेण परिवृतः कायः समंताद्वेष्टितः परिवृतइत्युच्यते तेनेह न
छात्रैः परिवृतोरथः पांडुकंबलादिनिः पांडुकंबलेन परिवृतः पांडुकंबली पांडुकंबलशब्दोराजास्तर
णवर्णकंबलस्यवाचकः मत्वर्थीये नैवसिद्धे वचनमणोनिवृत्त्यर्थं द्वैपवैयाघ्रादञ् द्वीपिनांविकारो
द्वैपं तेनपरिवृतोद्वैपोरथः एवं वैयाघ्रः कौमारापूर्ववचने कौमारेत्यविभक्तिकोनिर्देशः अपूर्वत्वेनि
पातनमिदं अपूर्वपतिंकुमारीमुपपन्नः कौमारःपतिः यद्वा अपूर्वपतिः कुमारीपतिमुपपन्नाकौमारी
भार्या तत्रोद्धृतममत्रेभ्यः शरावेउद्धृतः शारावओदनः उद्धरणमिहोद्धरणपूर्वकेनिधाने वर्त्तते तेनस
प्तमी उद्धृत्यनिहितइत्यर्थः स्थंडिलाच्छयितरिव्रते तत्रेत्येव समुदायेन चेद्व्रतंगम्यते स्थंडिलेशयि
तुं नियमोऽस्यस्थांडिलोभिक्षुः संस्कृतंभक्षाः सप्तम्यंतादण्स्यात् संस्कृतेर्थे यत्संस्कृतंभक्षाश्चेत्ते
स्युः भ्राष्ट्रेसंस्कृताभ्राष्ट्राः अष्टसुकपालेषुसंस्कृतोऽष्टाकपालः पुरोडाशः शूलोखाद्यत् अणोऽप

वादः शूलेसंस्कृतं शूल्यंमांसं उखापात्रविशेषः तस्यांसंस्कृतमुख्यं दध्नष्ठक् दध्निसंस्कृतंदाधिकं उदश्वितोऽन्यतरस्यांठक्स्यात्पक्षेऽण् इसुसुक्तांतात्कः इस्उस्उक्तएतदंतादंगात्परस्यठस्य कादेशःस्यात् उदकेनश्वयति वर्धत इत्युदश्वित्तक्रं तत्रसंस्कृतः औदश्विकः औदश्वित्कः औद-श्वितः इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह आशिषाचरति आशिषिकः उषाचरतिऔषिकः दोषउ परसंख्यानं दोर्भ्यांचरति दौष्कः क्षीराड्ढञ् अत्रसंस्कृतमित्येव संबध्यते नतुभक्षाइति तेनयवा ग्वामपिभवति क्षैरेयी साऽस्मिन्पौर्णमासीति इतिशब्दात्संज्ञायामितिलभ्यते पौषीपौर्णमा सीअस्मिन्पौषेमासः आग्रहायण्यश्वत्थाठ्ठक् अग्रेहायनमस्याइत्याग्रहायणी प्रज्ञादेरा कृतिगणत्वादण् पूर्वपदात्संज्ञायामगइतिणत्वं आग्रहायणीपौर्णमासी अस्मिन्आग्रहायणि कोमासः अश्वत्थेनयुक्ता पौर्णमासीअश्वत्थः निपातनात् पौर्णमास्यामपिलुप् आश्वत्थिकः वि भाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः एभ्यष्ठग्वा पक्षेऽण् फाल्गुनिकः फाल्गुनोमासः श्राव णिकः श्रावणः कार्तिकिकः कार्तिकः चैत्रिकः चैत्रः साऽस्यदेवता इंद्रोदेवताअस्यऐंद्रंहविः पाशु पतं बार्हस्पत्यं त्यज्यमानद्रव्येउद्देश्यविशेषोदेवता मंत्रस्तुत्याच ऐंद्रोमंत्रः आग्नेयोवैब्राह्मणोदेव तयेतितुशैषिकेऽर्थे सर्वत्राग्निकलीतिढक् कस्येत् कशब्दस्येकारादेशःस्यात् प्रत्ययसंनियोगेन यस्येतिलोपात् परत्वादादिवृद्धिः कोब्रह्मादेवतायस्येति कायंहविः श्रीर्देवतायस्येतिश्रायंहविः शुक्राद्घन् शुक्रियं अपोनप्त्रपांनप्तृभ्यांघः अपोनप्त्रियां अपांनप्त्रियं अपोनपात् अपां-

नपाच्च देवताप्रत्ययसंनियोगेन तूक्तं रूपं निपात्यते अतएव अपोनपाते अपांनपाते अनुब्रूहिति प्रैषः छ
च योगविभागो यथासंख्यनिवृत्त्यर्थः अपोनप्त्रीयं अपांनप्त्रीयं शतरुद्राद्घश्च वाच्छः शतंरुद्रा देव
ताअस्य शतरुद्रीयं शतरुद्रीयं घछयोर्विधानसामर्थ्यात् द्विगोर्लुगनपत्यइति नलुक् महेंद्राद्घाणौ
च चाच्छः महेंद्रियंहविर्माहेंद्रं महेंद्रीयं सोमाट्ट्यण् सौम्यं टित्वान्ङीप् सौमीऋक् वायूवृतुपि
त्रुषसोयत् वायव्यं ऋतव्यं रीङृतः अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदंतांगस्य री
ङादेशः स्यात् यस्येतिच पित्र्यं उषस्यं द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमे
धाच्छच चाद्यत् द्यावापृथिवीयं द्याव्यापृथिव्यं शुनासीरीयं शुनासीर्यं इत्यादि अग्नेर्ढक् आग्नेयं
कालेभ्योभववत् भवाधिकारे ये विहितास्ते त्र भवंति मासिकं प्रावृषेण्यं महाराजप्रोष्ठपदाठ्ठञ् मा
हाराजिकं प्रौष्ठपदिकं देवताद्वंद्वे च अत्र पूर्वोत्तरपदयोराद्यचोर्वृद्धिः स्यात् ञितिणितिकितिचतद्धि
तेपरे आग्निमारुतं नेंद्रस्य परस्य सौमेंद्रः परस्य किं ऐंद्राग्नः दीर्घाच्च वरुणस्य दीर्घात्परस्य वरुणस्य
नवृद्धिः ऐंद्रावरुणं दीर्घात् किं आग्निवारुणीमनड्वाही तदस्मिन्वर्ततइति नवयज्ञादिभ्यउपसंख्या
नं नावयज्ञिकः कालः पाकयज्ञिकः पूर्णमासादण् वक्तव्यः पूर्णो मासोऽस्यां वर्ततेइति पौर्णमासीति
थिः पितृव्यमातुलमातामहपितामहाः एते निपात्यंते पितुर्भ्रातरि व्यत् पितुर्भ्राता पितृव्यः मातुर्डु
लच् मातुर्भ्राता मातुलः मातृपितृभ्यांपितरिडामहच् मातुःपिता मातामहः पितुःपिता पितामहः
मातरि षिच्च मातामही पितामही अवेर्दुग्धेसोढदूसमरीसचो वक्तव्याः सकारपाठसामर्थ्यान्नषः

अविसोढःअविदूसं अविमरीसं तिलान्निष्फलात्पिंजपेजौ तिलपिंजः तिलपेज : वंध्यस्तिलइत्यर्थः पिं
जश्छंदसिडिच्च तिल्पिंजः तस्यसमूहः काकानांसमूहःकाकं बाकं भिक्षादिभ्योण् भिक्षाणांसमू
होभैक्षं गर्भिणीनांसमूहोगार्भिणं इहभस्याढइतिपुंवद्भावे कृते इनण्यनपत्ये अनपत्यार्थेऽणिप
रे इन्प्रकृत्यास्यात् तेननस्तद्धितइतिटिलोपोन युवतीनांसमूहो यौवनं शत्रंतादनुदात्तादेरञि यौवतं
गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् एभ्यःसमूहेवुञ् लौकिकमिहगोत्रं तच्चा
पत्यमात्रं युवोरनाकौ युवुएतयोरनुनासिकयोः क्रमादनअकएतावादेशौस्तः ग्लुचुकायनीनांसमू
होग्लौचुकायनकं औक्षकमित्यादि आपत्यस्येतियलोपेप्राप्ते प्रकृत्याकेराजन्यमनुष्ययुवानः
राजन्यकं मानुष्यकं वृद्धाच्चेतिवक्तव्यं वार्द्धकं केदाराद्यञ्च चाद्वुञ् कैदार्यं कैदारकं गणिकाया
यञितिवक्तव्यं गाणिक्यं ठञ्कवचिनश्च चात्केदारादपि कवचिनांसमूहः कावचिकं कैदारिकं
ब्राह्मणमाणववाडवाद्यत् ब्राह्मण्यं माणव्यं वाडव्यं पृष्ठादुपसंख्यानं पृष्ठ्यः ग्रामजनबंधुभ्य
स्तल् ग्रामता जनता बंधुता गजसहायाभ्यांचेतिवक्तव्यं गजता सहायता अन्हः खः क्रतौ अहीनः
अहर्गणसाध्यःक्रत्याकःक्रतुरित्यर्थः क्रतौकिं आन्हं इहखंडिकादित्वादञ् अन्हष्टखोरेवेतिनियमा
द्टिलोपोन पर्श्वाणस् वक्तव्यःसितिच सिति परेपूर्वपदसंज्ञंस्यात् अभत्वादोर्गुणोन पर्शूनांसमू
हः पार्श्वं अनुदात्तादेरञ् कापोतं मायूरं खंडिकादिभ्यश्च अञ्स्यात् खंडिकानांसमूहः खांडि
कं चरणेभ्योधर्मवत् काठकं छांदोग्यं अचित्तहस्तिधेनोष्ठक् साक्तुकं हास्तिकं धैनुकं केशाश्वा

भ्यां यञ्छावन्यतरस्यां पक्षे ठगणेो कैश्यं कैशिकं आश्वीयं आश्वं पाशादिभ्योयः पाश्या तृण्या
धूम्या वन्या वात्या खलगोरथात् खल्या गव्या रथ्या इनित्रकट्यचश्च खलादिभ्यः क्रमात्स्युः ख
लिनी गोत्रा रथकट्या खलादिभ्यइनिर्वक्तव्यः डाकिनी कुटुंबिनी आकृतिगणोऽयं विषयोदेशे
षष्ठ्यंतादणादयःस्युः अत्यंतपरिशीलितेऽर्थेसचेद्देशः शिबीनांविषयोदेशः शैबः देशेकिम् देवदत्त
स्यविषयोऽनुवाकः राजन्यादिभ्योवुञ् राजन्यकः भौरिक्याद्येषुकार्यादिभ्योविधल्भक्तलौ भौ
रिकीणांविषयोदेशः भौरिकिविधं भौलिकिविधं ऐषुकारिभक्तं सारसायनभक्तं सोऽस्यादिरिति
च्छंदसःप्रगाथेषु पंक्तेरादिरस्येतिपांक्तःप्रगाथः स्वार्थउपसंख्यानं त्रिष्टुबेवत्रैष्टुबं संग्रामेप्रयोज
नयोद्धृभ्यः सोऽस्येत्यनुवर्त्तते स्युः भद्राप्रयोजनमस्य संग्रामस्य सौभद्रः भरताः योद्धारोऽस्यसंग्राम
स्यभारतः तदस्यांप्रहरणमितिक्रीडायांणः अणोपवादः दंडःप्रहरणमस्यांक्रीडायांदांडा मौष्टा घ
ञःसास्यांक्रियेतिञः घञंतात्क्रियावाचिनःप्रथमांतादस्यामिति सप्तम्यर्थे स्त्रीलिंगेञःप्रत्ययःस्यात्
घञइतिकृद्ग्रहणाद्गतिकारकपूर्वस्यापिग्रहणंश्येनतिलस्यपातेञे श्येनतिलयोर्मुमागमःस्यात्ञ
प्रत्यये परे पातशब्देउत्तरपदे श्येनपातोऽस्यांवर्त्ततेश्यैनंपाताम्मृगया तिलपातोऽस्यांवर्त्ततेतैलंपाता
स्वधा श्येनतिलस्यकिं दंडपातोऽस्यांवर्त्ततेदांडपातातिथिः तदधीतेतद्वेद व्याकरणमधीतेवेदवावै
याकरणः क्रतूक्थादिसूत्रांताट्ठक् क्रतुविशेषवाचिनामेवग्रहणं तेभ्यःसुख्यार्थेभ्योवेदितरि तत्प्र
तिपादकग्रंथपरेभ्यस्त्वध्येतरि आग्निष्टोमिकः वाजपेयिकः उक्थसामविशेषः तल्लक्षणपरोग्रंथवि

शेषोलक्षणयोक्थं तदधीतेवेदवा औक्थिकः मुख्यार्थात्तूक्थशब्दात्ठगणोनेष्यते न्यायंनैयायिकः
वृत्तिंवार्त्तिकः लोकायतंलौकायतिकः इत्यादि सूत्रांतात्तुअकल्पादेरेवेष्यते सांग्रहसूत्रिकः अकल्पादेः
किं काल्पसूत्रः विद्यालक्षणकल्पांताच्चेतिवक्तव्यं वायसविद्यिकः गौलक्षणिकः आश्वलक्षणिकः पा
राशरकल्पिकः अंगक्षत्रधर्म त्रिपूर्वाद्विद्यांतान्नेतिवक्तव्यं आंगविद्यः क्षात्रविद्यः धार्मविद्यः त्रिविधा
विद्यात्रिविद्यातामधीतेवेत्तिवात्रैविद्यः आख्यानाख्यायिकेतिहासपुराणेभ्यश्च यवक्रीतमधिकृ
त्यकृतमाख्यानमुपचाराद्यवक्रीतं तदधीतेवेत्तिवायावक्रीतिकः वासवदत्तामधिकृत्य कृता आख्या
यिका वासवदत्ता अधिकृत्यकृतेग्रंथे इत्यर्थेवृद्धाच्छः तस्यलुबाख्यायिकाभ्योबहुलमितिलुप् ततोऽ
नेनठक् वा सवदत्तिकः ऐतिहासिकः पौराणिकः सर्वादेः सादेश्चलुग्वक्तव्यः सर्ववेदानधीतेसर्ववे
दः सर्वतंत्रः सवार्तिकः द्विगोर्लुगितिलुक् द्वितंत्रः इकन्पदोत्तरपदाच्छतषष्टेः षिकन्पथः पूर्वपदि
कः उत्तरपदिकः शतपथिकः शतपथिकी षष्टिपथिकः षष्टिपथिकी क्रमादिभ्योवुन् क्रमकः क्रमपद
शिक्षामीमांसाक्रमादिः अनुब्राह्मणादिनिः तदधीतेतद्वेदेत्यर्थे ब्राह्मणसदृशोग्रंथोऽनुब्राह्मणं त
दधीतेवेदवा अनुब्राह्मणी मत्वर्थेनैवसिद्धेऽण्बाधनार्थमिदं वसंतादिभ्यष्ठक् वासंतिकः अथर्वाणम
धीते आथर्वणिकः दांडिनायनेति सूत्रेनिपातनाट्टिलोपोन प्रोक्ताल्लुक् प्रोक्तार्थकप्रत्ययात्परस्याध्येतृ
वेदितृप्रत्ययस्य लुक् स्यात् पणनंपणः घञर्थेकविधानमितिकः सोऽस्यास्तीतिपणी तस्यगोत्रापत्यंपाणि
नः गाथिविदथिकेशिगणिपणिनश्च एतेऽणिप्रकृत्यास्युः इतिटिलोपोन ततोयूनि इञ् पाणिनिः

ण्यक्षत्रियार्षञितोयूनिलुगणिञोः ण्यप्रत्ययांतात्क्षत्रियगोत्रप्रत्ययांतादृष्यभिधायिनोगोत्रप्रत्ययां
तात् ञितश्चपरयोर्युवाभिधायिनोरणियोर्लुक् स्यात् कौरव्यःपिता कौरव्यःपुत्रः श्वाफल्कःपिता श्वा
फल्कःपुत्रः वासिष्ठःपिता वासिष्ठःपुत्रः तैकायनिःपिता तैकायनिःपुत्रः एभ्यःकिं शिवाद्यण् कौहडः
ततइञ् कौहडिःपुत्रः यूनिकिं वामरथ्यस्यच्छात्रावामरथाः इतिइञोलुक्तुनभवति आर्षग्रहणेनप्राति
पदोक्तस्यऋष्यण एवग्रहणात् पाणिनिनाप्रोक्तंपाणिनीयं वृद्धाच्छः इञश्चेत्यण्तुन गोत्रेयइञ् तदंता
दितिवक्ष्यमाणत्वात् ततोऽध्येतृवेदित्रणोलुक् स्वरेस्त्रियांचविशेषः पाणिनीयः पाणिनीया सूत्रात्चकोप
धात् सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्यलुक् स्यात् अप्रोक्तार्थआरंभः अष्टौअध्यायाः
परिमाणमस्यअष्टकं पाणिनेःसूत्रं तदधीयतेविदंतिवाअष्टकाः छंदोब्राह्मणानिचतद्विषयाणि छं
दांसिब्राह्मणानिचप्रोक्तप्रत्ययांतानितद्विषयाणिस्युः अध्येतृवेदितृप्रत्ययंविनानप्रयोज्यानीत्यर्थः
कठेनप्रोक्तमधीयतेकठाः वैशंपायनांतेवासित्वाण्णिनिः तस्यकठचरकादितिलुक् ततोऽण् तस्यप्रोक्ता
लुक् तदस्मिन्नस्तीतिदेशेतन्नाम्नि उदुंबराःसंत्यस्मिन्देशेऔदुंबरः तेननिर्वृत्तं कुशांबेननिर्वृताकौ
शांबीनगरी तस्यनिवासः शिबीनांनिवासोदेशः शैबः अदूरभवश्च विदिशायाअदूरभवंनगरंवैदि
शं चकारेणप्रागुक्तास्त्रयोऽर्थाःसंनिधाप्यंते तेनवक्ष्यमाणप्रत्ययानांचातुरर्थिकत्वंसिध्यति ओर
ञ् अणोऽपवादः कक्षतुःकाक्षतवं नद्यांतुपरत्वान्मतुप् इक्षुमती मतोश्चबह्वजंगात् बह्वजंगंय
स्यमतुपस्तदंतादञ्स्यान्नाण् सैध्रकावतं बह्वजितिकिम् आहिमतं अंगग्रहणंबह्वजितितद्विशेषणं

यथास्यान्मत्वंतविशेषणंमाभूत् बव्हचः कूपेषु अणो ऽपवादः दीर्घवरत्रेणनिर्वृत्तः दैर्घवरत्रः कूपः
उदक्चविपाशः विपाशउत्तरे कूले येकूपास्तेष्वञ् अबव्हजर्थआरंभः दंतेननिर्वृत्तः दांतः कूपः उदक्
किं दक्षिणतः कूपेष्वणेव संकलादिभ्यश्च कूपेष्विति निवृत्तं संकलेननिर्वृत्तं सांकलं पौष्कलं स्त्रीषु
सौवीरसाल्वप्राक्षु स्त्रीलिंगेष्वेषु देशेषु वाच्येष्वञ् सौवीरे दत्तामित्रेननिर्वृत्तादात्तामित्रीनगरी सा
ल्वे वैधूमाग्नीनगरी प्राची माकंदी सुवास्त्वादिभ्योण् अञो ऽपवादः सुवास्तोरदूरभवंसौवास्तवं वर्णु
वार्णवं अण्ग्रहणंनद्यांमतुपोबाधनार्थं सौवास्तवीरोणी रोणीशब्दात्तदंताच्चाण् कूपाऽ ओपवादः रौ
णः आजकरोणः कोपधाच्च अण् अञो ऽपवादः कर्णछिद्रकः कार्णच्छिद्रकः कूपः कार्कवाकवं त्रै
शंकवं वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठको ऽरीहणकृशाश्वर्श्यकुमुदका
शतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः सप्तदशभ्यः स
प्तदशक्रमात् स्युः श्चातुरर्थ्यां अरीहणादिभ्योवुञ् अरीहणेननिर्वृत्तंआरीहणकंकृशाश्वादिभ्यश्छण्
काशाश्वीयं ऋष्यादिभ्यः कः ऋष्यकं कुमुदादिभ्यष्ठच् कुमुदिकं काशादिभ्यइलः काशिलः तृणादि
भ्यः सः तृणसं प्रेक्षादिभ्यइनिः प्रेक्षी अश्मादिभ्योरः अश्मरा सख्यादिभ्योढञ् साखेयं संकाशादिभ्यो
ण्यः सांकाश्यं बलादिभ्योयः बल्यं पक्षादिभ्यः फक् पाक्षायणः पथः पंथच पांथायनः कर्णादिभ्यः फि
ञ् कार्णायनिः सुतंगमादिभ्यइञ् सौतंगमिः प्रगदिन्नादिभ्योञ्यः प्रगदिन् प्रागद्यः वराहादिभ्यः
कक् वाराहकः कुमुदादिभ्यष्ठक् कौमुदिकः जनपदेलुप् जनपदेवाच्येचातुरर्थिकस्यलुप्स्यात् लुपि

युक्तवद्व्यक्तिवचने लुपिसतिप्रकृतिवल्लिंगवचनेस्तः पंचालानांनिवासोजनपदः पंचालाः कुरवः अं
गाः कलिंगाः तदशिष्यंसंज्ञाप्रमाणत्वात् युक्तवद्वचनं नकर्तव्यंसंज्ञानांप्रमाणत्वात् लुब्योगाप्र-
ख्यानात् लुबपिनकर्तव्यो ऽवयवार्थस्येहाप्रतीतेः योगप्रमाणेचतदभावे ऽदर्शनंस्यात् यदिहियोग
स्यावयवार्थस्येदंबोधकंस्यात्तदातदभावेनदृश्येत प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् प्र-
त्ययार्थः प्रधानमित्येवंरूपंवचनमप्यशिष्यं कुतः अर्थस्यलोकतएवसिद्धेः कालोपसर्जनेचतुल्यं अ
तीतायारात्रेः पश्चार्द्धेनागामिन्याः पूर्वार्द्धेनचसहितोदिवसो ऽद्यतनः विशेषणमुपसर्जनमित्यादि पूर्वा
चार्यैः परिभाषितंतत्राप्यशिष्यत्वंसमानं लोकप्रसिद्धेः विशेषणानांचाजातेः लुबर्थस्यविशेषणाना
मपितद्वल्लिंगवचनेस्तोजातिंवर्जयित्वा पंचालाः रमणीयाः गोदौरमणीयौ अजातेःकिं पंचालाःज
नपदाः गोदौग्रामः हरीतक्यादिषुव्यक्तिः हरीतक्याः फलानि हरीतक्यः खलतिकादिषुवचनं
खलतिकस्यपर्वतस्यादूरभवानिखलतिकंवनानि मनुष्यलुपिप्रतिषेधः मनुष्यलक्षणेलुबर्थे विशे
षणानांन लुबंतस्यतुभवतीत्यर्थः चंचाअभिरूपः वरणादिभ्यश्च एभ्यश्चातुरर्थिकस्यलुप् अजन
पदार्थआरंभः वरणानामदूरभवंनगरंवरणाः शर्करायावा अस्माच्चातुरर्थिकस्यवालुप्स्यात् ठक्
छौच शर्करायाएतौस्तः कुमुदादौवराहादौचपाठसामर्थ्यात् पक्षेठक्ककौ वाग्रहणसामर्थ्यात् पक्षेऔ
त्सर्गिको ऽण् तस्यलुब्विकल्पः षड्रूपाणि शर्करा शार्करं शार्करिकं शर्करीयं शर्करिकं शार्करकं न
द्यांमतुप् चातुरर्थिकः इक्षुमती मध्वादिभ्यश्च मतुप्स्यात्चातुरर्थिकः अनद्यर्थआरंभः मधुमा

न् कुमुदनडवेतसेभ्योड्मतुप् कुमुद्वान् नड्वान् वेतस्वान् आद्ययोर्झयइतिअंतेमादुपधायाद्
तिवक्ष्यमाणेनवः महिषाच्चेतिवक्तव्यं महिष्मान्नामदेशः नडशादाड्डवलच् नड्वलः शादोजंबा
लघासयोः शाद्वलः शिखायावलच् शिखावलं उत्करादिभ्यश्छः उत्करीयं नडादीनांकुकच नड
कीयं क्रुञ्चाह्रस्वत्वंच क्रुंचकीयः तक्षन्नलोपश्च तक्षकीयः बिल्वकादिभ्यश्छस्यलुक् नडाद्यंतर्ग
ताबिल्वकादयः तेभ्यश्छस्यलुक्तद्धितेपरे बिल्वायस्यांसंतिसाबिल्वकीयातत्रस्यांभवोबैल्वकः वेत्र
कीयाः वैत्रकाः छस्यकिं छमात्रस्यलुग्यथास्यात् कुकोनिवृत्तिर्माभूत् अन्यथासन्नियोगशिष्टाना
मितिकुगपिनिवर्त्तेत लुग्ग्रहणंसर्वलोपार्थं लोपोहियमात्रस्यस्यात् इतिचातुरर्थिकाः शेषे अप-
त्यादिचतुरर्थ्यंतादन्योऽर्थः शेषस्तत्राणादयः स्युः चक्षुषा गृह्यतेचाक्षुषंरूपं श्रावणःशब्दः औपनि
षदः पुरुषः दृषदिपिष्टादार्षदाः सक्तवः उलूखलेक्षुण्णः औलूखलोयावकः अश्वैरुह्यतेआश्वो
रथः चतुर्भिरुह्यतेचातुरंशकटं चतुर्दश्यांदृश्यतेचातुर्दशं रक्षः शेषेइतिलक्षणंचाधिकारश्च तस्यवि
कारइत्यतःप्राक्शेषाधिकारः राष्ट्रावारपाराद्घखौ आभ्यांक्रमात् घखौस्तः शेषे राष्ट्रियः अवारपा
रीणः अवारपाराद्विगृहीतादपिविपरीताच्चेतिवक्तव्यं अवारीणः पारीणः पारावारीणः इहप्रकृ
तिविशेषाद्घादयष्ट्युट्युलंताःप्रत्ययाउच्यंते तेषांजातादयोर्थविशेषाः समर्थविभक्तयश्चवक्ष्यं
ते ग्रामाद्यखञौ ग्राम्यः ग्रामीणः कत्र्यादिभ्योढकञ् कुत्सितास्त्रयः कत्त्रयस्तत्रजातादिःका
त्त्रेयकः नागरेयकः ग्रामादित्यनुवृत्तेर्ग्रामेयकः कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु कौलेयकः

श्वाकोलोऽन्यः कौक्षेयकोऽसिः कौक्षोऽन्यः ग्रैवेयकोऽलंकारः ग्रैवोऽन्यः नद्यादिभ्यो ढक् नादेयं माहेयं
वाराणसेयं दक्षिणापश्चात्पुरसस्त्यप् दक्षिणेत्याजंतमव्ययं दाक्षिणात्यः पाश्चात्यः पौरस्त्यः कापि
श्याः ष्फक् कापिश्यांजातादि कापिशायनं मधु कापिशायनी द्राक्षा रंकोरमनुष्येऽण्च चात्ष्फक् रांक
वोगौः रांकवायणः अमनुष्ये किं रांकवको मनुष्यः द्युप्रागपागुदक्प्रतीचोयत् दिव्यं प्राच्यं अपाच्यं
उदीच्यं प्रतीच्यं कंथायाष्ठक् कांथिकः वर्णौ वुक् वर्णुर्नदसमीपो देशो वर्णुः तद्विषयार्थवाचि कंथाशब्दा
द्वुक् यथाहि जातं हिमवत्सु कांथकं अव्ययात्त्यप् अमेहक्वतसित्रेभ्य एव अमांतिकसहार्थयोः अमा
त्यः इहत्यः क्वत्यः ततस्त्यः तत्रत्यः परिगणनं किम् उपरिष्टाद्भव औपरिष्टः अव्ययानां भमात्रे टिलोपः
अनित्योऽयं बहिषष्टिलोपविधानात् तेनेह न आरातीयः त्यब्नेर्ध्रुव इति वक्तव्यं नित्यः निसो गते
ह्रस्वात्तादौ तद्धिते ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते निर्गतो वर्णाश्रमेभ्यो निष्ट्यः चंडाला
दिः अरण्याण्णः आरण्याः सुमनसः दूरादेत्यः दूरेत्यः उत्तरादाहञ् औत्तराहः ऐषमोह्यःश्वसोऽ
न्यतरस्यां एभ्यस्त्यप् वा स्यात् पक्षे वक्ष्यमाणौ ट्युट्युलौ ऐषमस्त्यं ऐषमस्तनं ह्यस्त्यं ह्यस्तनं श्वस्त्यं श्व
स्तनं पक्षे शौवस्तिकं वक्ष्यते तीररूप्योत्तरपदादञ्ञौ यथासंख्येन काकतीरं पाल्वलतीरं शैवरूप्यं
तीररूप्यांतादिति नोक्तं बहुच्पूर्वान्माभूत् बाहुरूप्यं दिक्पूर्वपदादसंज्ञायां ञः अणोऽपवादः पौर्व
शालः असंज्ञायां किं संज्ञाभूतायाः प्रकृतेर्माभूत् पूर्वेषुकामशम्यां भवः पूर्वेषुकामशमः प्राचांग्रामन
गराणामित्युत्तरपदवृद्धिः मद्रेभ्योऽञ् दिक्पूर्वपदादित्येव दिशोऽमद्राणामिति मद्रपर्युदासाद्दादि

वृद्धिः पौर्वमद्रः आपारमद्रः उदीच्यग्रामाच्च बह्वचोंऽन्तोदात्तात् अञ्स्यात् शैवपुरं यस्योत्तरपदपल
द्यादिकोपधादण् माहिकप्रस्थः पालदः नैलीनकः कण्वादिभ्योगोत्रे एभ्योगोत्रप्रत्ययांतेभ्योऽण्स्या
त् कण्वोगर्गादिः काण्वस्यछात्राः काण्वाः इञश्च गोत्रे यदिञन्तं तदंतादण्स्यात् दाक्षाः गोत्रेकिम् सौतंग
मेरिदं सौतंगमीयं गोत्रमिहशास्त्रीयं नतुलौकिकं तेनेहन पाणिनीयं नद्व्यचः प्राच्यभरतेषु इञश्चे
त्यणोपवादः प्राष्ठीयाः काशीयाः भरतानांप्राच्यत्वेऽपिपृथगुपादानमन्यत्रप्राच्यग्रहणेभरतानामग्रह
णस्यलिंगं वृद्धिर्यस्याचामादिस्तद्वृद्धं यस्यसमुदायस्याचांमध्येआदिर्वृद्धिस्तद्वृद्धसंज्ञंस्यात् त्यदा
दीनिच वृद्धसंज्ञानिस्युः वृद्धाच्छः शालीयः मालीयः तदीयः एङ्प्राचांदेशे एङ्यस्याचामादिस्तद्वृ
द्धसंज्ञंवास्याद्देशाभिधाने एणीपचनीयः गोनर्दीयः भोजकटीयः ऐणीपचनः गौनर्दः भौजकटः एङ्
किं आहिच्छत्रः कान्यकुब्जः वानामधेयस्य वृद्धसंज्ञावाच्या देवदत्तीयः दैवदत्तः भवतष्ठक्छसौ वृ-
द्धाद्भवतएतौस्तः भावत्कः जश्त्वं भवदीयः वृद्धादित्यनुवृत्तेः शत्रंतादणेव भावतः काश्यादिभ्यष्ठञ्ञि
ठौ इकारउच्चारणार्थः काशिकी काशिका वैदिकी वैदिका आपदादिपूर्वपदात्कालांतात् आपदादि
राकृतिगणः आपत्कालिकी आपत्कालिका बाहीकग्रामेभ्यश्च बाहीकग्रामवाचिभ्योवृद्धेभ्यष्ठञ्
ञिठौस्तः छस्यापवादः कार्स्तीरं नामबाहीकग्रामः कार्स्तीरिकी कार्स्तीरिका विभाषोशीनरेषु एषुये
ग्रामास्तद्वाचिभ्योवृद्धेभ्यष्ठञ्ञिठौवास्तः सौदर्शनिकी सौदर्शनिका सौदर्शनीयः ओर्देशेठञ् उवर्णांता
द्देशवाचिनष्ठञ् निषादकर्षूः नैषादकर्षुकः केणइतिह्रस्वः देशेकिं पटोश्छात्राः पाटवाः ञिठंव्यावर्तयि

तुंठञ्ग्रहणं वृद्धाच्छंपरत्वादयंबाधते दाक्षिकर्षुकः वृद्धात्प्राचां प्राग्देशवाचिनोवृद्धादेवेतिनियमार्थं
सूत्रं आढकजंबुकः शाकजंबुकः नेह मल्लुवास्तुमाल्लुवास्तवः धन्वयोपधाद्वुञ् धन्वविशेषवाचिनो
यकारोपधाच्चदेशवाचिनोवृद्धाद्वुञ्स्यात् ऐरावतंधन्व ऐरावतकः सांकाश्यकापिल्यशब्दोवुञ्छणा
दिसूत्रेणण्यंतौ सांकाश्यकः कांपिल्यकः प्रस्थपुरवहांताच्च एतदंताद्वृद्धाद्देशवाचिनोवुञ्छस्याप
वादः मालाप्रस्थकः नांदीपुरकः पैलुवहकः पुरग्रहणमप्रागर्थं प्राग्देशेतूत्तरेणसिद्धं रोपधेतोःप्राचां
रोपधादीकारांताच्च प्राग्देशवाचिनोवृद्धाद्वुञ्स्यात् पाटलिपुत्रः ईतः काकंदकः जनपदतदवध्योश्च
जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ्स्यात् आदर्शकः त्रैगर्तकः अवृद्धादपिबहुवचनविषयात्
अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनोबहुवचनविषयात्प्रातिपदिकाद्वुञ्स्यात् अवृद्धादणोवृद्धा
च्छस्यापवादः अवृद्धाज्जनपदात् आंगकः अवृद्धाज्जनपदावधेः आजमीढकः वृद्धाज्जनपदात्
दार्वकः वृद्धाज्जनपदावधेः कालंजरकः विषयग्रहणंकिं एकशेषेणबहुत्वेमाभूत् वर्तनीच ३ वर्तन्यः
तासुभवोवार्तिनः कच्छाग्निवक्त्रगर्तोत्तरपदात् देशवाचिनोवृद्धादवृद्धाच्चवुञ्स्यात् दारुकच्छकः
कांडाग्नकः सैंधवक्त्रकः बाहुगर्तकः धूमादिभ्यश्च देशवाचिभ्योवुञ्स्यात् धौमकः तैर्थकः नगरा-
त्कुत्सनप्रावीण्ययोः नगरशब्दाद्वुञ्स्यात्कुत्सनेप्रावीण्येचगम्ये नागरकश्चोरः शिल्पीवा कुत्सेति
किंनागराः ब्राह्मणाः अरण्यान्मनुष्ये वुञ्स्यात् अरण्याण्णइत्यस्यापवादः पथ्यध्यायन्यायविहा
रमनुष्यहस्तिष्विति वक्तव्यं आरण्यकः पंथाः अध्यायोन्यायोविहारोमनुष्योहस्तीवा वागोमयेषुआ

रण्यका आरण्यावा गोमयाः विभाषाकुरुयुगंधराभ्यां वुञ्स्यात् कौरवकः कौरवः यौगंधरकः यौ
गंधरः मद्रवृज्योः कन् जनपदवुञोऽपवादः मद्रेषुजातोमद्रकः वृजिकः कोपधादण् माहिषिकः क
च्छादिभ्यश्च देशवाचिभ्योऽण्स्याद्वुञादेरपवादः काच्छः सैंधवः मनुष्यतत्स्थयोर्वुञ् कच्छादिभ्यः
अणोऽपवादः कच्छेजातादिः काच्छकोमनुष्यः काच्छकंहसितं मनुष्येत्यादिकिं काच्छोगौः अपदातौ
साल्वात् साल्वशब्दस्यकच्छादित्वाद्वुञिसिद्धेनियमार्थमिदं अपदातावेवेति साल्वः पदातिर्व्रजति
गोयवाग्वोश्च साल्वाद्वुञ् कच्छाद्यणोऽपवादः साल्वकोगौः साल्विकायवागूः साल्वमन्यत् गर्त्तोत्तर
पदाच्छः देशे अणोऽपवादः वृकगर्तीयं उत्तरपदग्रहणंबहुच्पूर्वनिरासार्थं गहादिभ्यश्च छः गहीयः
मुखपार्श्वतसोर्लोपश्च मुखतीयं पार्श्वतीयं अव्ययानांभमात्रेटिलोपस्यानित्यतांज्ञापयितुमिदं कुग्जन
स्यपरस्यच जनकीयं परकीयं देवस्यच देवकीयं स्वस्यच स्वकीयं वेणुकादिभ्यः श्छण् वाच्यः वैणु
कीयं वैत्रकीयं औत्तरपदकीयं प्राचांकटादेः प्राग्देशवाचिनः कटादेश्छः स्यादणोऽपवादः कटनग
रीयं कटघोषीयं कटपल्वकीयं राज्ञःकच वृद्धत्वाच्छेसिद्धेतत्सन्नियोगेनकादेशमात्रंविधीयते
राजकीयं वृद्धादकेकांतखोपधात् अक इक एतदंतात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् ब्रा
ह्मणकोनामजनपदोयत्रब्राह्मणाआयुधजीविनस्तत्रजातोब्राह्मणकीयः शाल्मलिकीयः अयोमु
खीयं कंथापलदनगरग्राम ह्रदोत्तरपदात् कंथादिपंचकोत्तरपदाद्देशवाचिनोवृद्धाच्छः स्यात् ठञ्
ञिठादेरपवादः दाक्षिकंथीयं पाक्षिपलदीयं दाक्षिनगरीयं दाक्षिग्रामीयं दाक्षिह्रदीयं पर्वताच्च प

र्वतीयः विभाषामनुष्ये मनुष्यभिन्नेर्थेपर्वताच्छोवास्यात् पक्षेऽण् पर्वतीयानिपार्वतानिवाफलानि
अमनुष्येकिं पर्वतीयोमनुष्यः कृकणपर्णाद्भारद्वाजे भारद्वाजदेशवाचिभ्यामाभ्यांछः कृकणीयं
पर्णीयं भेतिकिं कार्कणं पार्णं युष्मदस्मदोरन्यतरस्यांखञ्च चाच्छः पक्षेऽण् युवयोर्युष्माकंवायंयु
ष्मदीयः अस्मदीयः तस्मिन्नणिचयुष्माकास्माकौ युष्मदस्मदोरेतावादेशौस्तः खञ् यणिच् यौष्मा
कीणः आस्माकीनः यौष्माकः आस्माकः तवकममकावेकवचने एकार्थवाचिनोर्युष्मदस्मदोस्तवक
ममकौस्तः खञ्यणिच्च तावकीनः तावकः मामकीनः मामकः छेतु प्रत्ययोत्तरपदयोश्च मपर्यंतयो
रेकार्थयोस्त्वमौस्तः प्रत्ययेउत्तरपदेच त्वदीयः मदीयः त्वत्पुत्रः मत्पुत्रः अर्धाद्यत् अर्घ्यः परावराधमो
त्तमपूर्वाच्च परार्ध्यं अवरार्ध्यं उत्तमार्ध्यं दिक्पूर्वपदाठ्ठञ्च चाद्यत् पूर्वार्ध्यं पौर्वार्धिकं ग्रामजनप
देकदेशादञ्ठञौ ग्रामैकदेशवाचिनोजनपदैकदेशवाचिनश्चदिक्पूर्वपदादस्मात्तादञ्ठञौस्तः इमेऽ
स्माकंग्रामस्यजनपदस्यवापौर्वार्धाः पौर्वार्धिकाः ग्रामस्यपूर्वस्मिन्नर्धेभवाइतितद्धितार्थेसमासः ठञ्
ग्रहणंस्पष्टार्थं अञ्नेत्युक्तेयतोऽप्यनुकर्षः संभाव्येत मध्यान्मः मध्यमं असांप्रतिके मध्यशब्दाद
प्रत्ययः स्यात्सांप्रतिकेऽर्थे उत्कर्षापकर्षहीनोमध्योवैयाकरणः मध्यंदारु नातिह्रस्वं नातिदीर्घमित्य
र्थः द्वीपादनुसमुद्रंयञ् समुद्रसमीपेयोद्वीपस्तद्विषयात्द्वीपशब्दाद्यञ्स्यात् द्वैप्यं द्वैप्या कालाट्ठ
ञ् कालवाचिभ्यष्ठञ् स्यात् मासिकं सांवत्सरिकं सायंप्रातिकः पौनःपुनिकः कथंतर्हिशार्वरस्यतमसो
निषिद्धयइतिकालिदासः अनुदितौषसरागइतिभारविः समानकालीनं प्राक्कालीनमित्यादि अपभ्रंशा

एवैतद्‌ इतिप्रामाणिकाः तत्रजातइतियावत्कालाधिकारः श्राद्धेशरदः ठञ्स्यात् ऋत्वणोऽपवादः शारदि
कंश्राद्धं विभाषारोगातपयोः शारदिकः शारदोवारोगआतपोवा एतयोःकिम् शारदंदधि निशाप्रदोषा
भ्यांच वाठञ् नैशिकं नैशंप्रादोषिकं प्रादोषं श्वसस्तुट्‌च श्वस्शब्दाद्वाठञ्स्यात्तस्यतुडागमश्च
द्वारादीनांच द्वार स्वर व्यल्कश स्वस्ति स्वर श्वस् श्वन् स्फ्यकृत् स्वादु मृदु स्व एषांनवृद्धिरैजागम
श्च शौवस्तिकं संधिवेलाद्यृतुनक्षत्रेभ्योऽण् संधिवेलादिभ्य ऋतुभ्योनक्षत्रेभ्यश्च कालवृत्तिभ्यो
ऽणस्यात् संधिवेलायांभवंसांधिवेलं ग्रैष्मं तैषं संधिवेला संध्या अमावास्या त्रयोदशी चतुर्दशी पंच
दशी पौर्णमासी प्रतिपत् संवत्सरात्फलपर्वणोः सांवत्सरं फलं पर्ववासांवत्सरिकमन्यत् प्रावृषएण्यः
प्रावृषेण्यः वर्षाभ्यष्ठक् वर्षासुसाधुवार्षिकंवासः कालात्साधु पुष्प्यत्पच्यमानेष्विति साध्वर्थे सर्वत्राण्च
तलोपश्च हेमंतादण्स्यात्तलोपश्चवेदलोकयोः चकारात्पक्षेऋत्वण् हैमनं हैमंतं सायंचिरंप्राण्हेप्रगे
व्ययेभ्यष्ट्युट्युलौतुट्‌च सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्य ट्युट्युलौस्तस्तयोस्तुट्‌च
तुटःप्रागनादेशः अनद्यतनइत्यादिनिर्देशात् सायंतनं चिरंतनं प्राण्हप्रगयोरदंतत्वंनिपात्यते प्राण्हेप्र
गेतनं दोषातनं दिवातनं चिरपरुत्परारिभ्यस्त्नोवक्तव्यः चिरत्नं परुत्नं परारित्नं अग्रादिपश्चाड्डिम
च् अग्रिमं आदिमं पश्चिमं अंताच्च अंतिमं विभाषापूर्वाण्हापराण्हाभ्यां आभ्यांट्युट्युलौवास्तस्त
योस्तुट्‌च पक्षेठञ् पूर्वाण्हेतनं अपराण्हेतनं घकालतनेष्वित्यलुक् पूर्वाण्हःसोढोऽस्येतिविग्रहेतुपू
र्वाण्हतनं अपराण्हतनं पौर्वाण्हिकं आपराण्हिकं तत्रजातः सप्तमीसमर्थाज्जातइत्यर्थेऽणादयोघा

दयश्वस्कः स्रुघ्नेजातः स्रौघ्नः औत्सः राष्ट्रियः अवारपारीणइत्यादि प्रावृषष्ठप् एण्यस्यापवादः प्रावृषि
जातः प्रावृषिकः संज्ञायांशरदोवुञ् ऋत्वणोऽपवादः शारदकाः दर्भविशेषामुद्गविशेषाश्च उत्तरपद
स्यच अधिकारोऽयं हनस्तइत्यस्मात्प्राक् अवयवादृतोः अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेर
चोर्वृद्धिर्ञितिणितिकितिच पूर्ववार्षिकः अपरहैमनः अवयवात्किं पूर्वासुवर्षासुभवः पौर्ववर्षिकः ऋतो
र्वृद्धिमद्विधावयवानामितितदंतविधिः पूर्वत्र इहतुन अवयवत्वाभावात् सुसर्वार्द्धाज्जनपदस्य
उत्तरपदस्यवृद्धिः सुपांचालकः सर्वपांचालकः अर्धपांचालकः जनपदतदवध्योरितिवुञ् सुसर्वार्द्ध
दिक्शब्देभ्योजनपदस्येतितदंतविधिः दिशोऽमद्राणां दिग्वाचकात् परस्यमद्रभिन्नस्य जनपदवा
चिनोवृद्धिः स्यात् पूर्वपांचालकः दिशः किं पूर्वपंचालानामयंपौर्वपंचालकः अमद्राणांकिम् पौर्वमद्रः
योगविभागउत्तरार्थः प्राचांग्रामनगराणां प्राचांदेशेदिशः परेषांग्रामवाचिनांनगरवाच्यंगानांचा
वयवस्योत्तरपदस्यवृद्धिः स्यात् पूर्वेषुकामशम्यांभवः पूर्वेषुकामशमः नगरे पूर्वपाटलिपुत्रः पूर्वाण्हा
पराण्हार्द्रामूलप्रदोषावस्कराद्वुन् पूर्वाण्हकः अपराण्हकः आर्द्रकः मूलकः प्रदोषकः अवस्करकः प
थः पंथच पथिजातः पंथकः अमावास्यायावा अमावास्यकः आमावास्यः अच अमावास्यः सिं
ध्वपकराभ्यांकन् सिंधुकः कच्छाद्यणिमनुष्यवुञिच प्राप्ते अपकरकः औत्सर्गिकेऽणि प्राप्ते अण
ञौच क्रमात्तः सैंधवः आपकरः श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढा
बहुलाल्लुक् एभ्योनक्षत्रवाचिभ्यः परस्यजातार्थप्रत्ययस्यलुक्स्यात् लुक्तद्धितलुकि तद्धितलुकि

उपसर्जनस्त्रीप्रत्ययस्यलुक् स्यात् श्रविष्ठासुजातः श्रविष्ठः फल्गुनइत्यादि चित्रारेवती रोहिणीभ्य
स्त्रियामुपसंख्यानं चित्रायांजाताचित्रा रेवती रोहिणी आभ्यांलुक्तद्धितलुकीति लुकि कृतेपिप्प-
ल्यादेराकृतिगणत्वान्ङीष् फल्गुन्यषाढाभ्यांटानौवक्तव्यौ स्त्रियामित्येव फल्गुनी अषाढा श्रवि-
ष्ठाषाढाभ्यांछण्वक्तव्यः अस्त्रियामपि श्राविष्ठीयः आषाढीयः जेप्रोष्ठपदानां प्रोष्ठपदानामु
त्तरपदस्याचामादेरचो वृद्धिर्जातार्थेञितिणितिकितिच प्रोष्ठपदासुजातः प्रोष्ठपादोमाणवकः जेइ
तिकिं प्रोष्ठपदासुभवः प्रौष्ठपदः बहुवचननिर्देशात्पर्यायोऽपिगृह्यते भद्रपादः स्थानांतगोशा
लखरशालाच्च एभ्योजातार्थस्य लुक् गोस्थानेजातः गोस्थानः गोशालः खरशालः जातार्थप्रतिप्र
सूतोअण्डिद्वावक्तव्यः शातभिषक् शातभिषजः शतभिषक् नक्षत्रेभ्योबहुलं जातप्रत्ययस्यबहुलं
लुक् रौहिणः जातार्थस्यलुक्स्याद्वा वत्सशालेजातोवत्सशालः वत्सशालइत्यादि जातार्थेप्रतिप्रसू
तोऽण्वाडित् वक्तव्यः शातभिषः शातभिषजः शतभिषक् नक्षत्रेभ्योबहुलं जातार्थप्रत्ययस्यब
हुलंलुक् स्यात् रोहिणः रौहिणः कृतलब्धक्री तकुशलाः तत्रेत्येव स्रुघ्ने कृतो लब्धः क्रीतः कु
शलोवास्रौघ्नः प्रायभवः तत्रेत्येव स्रुघ्नेप्रायेण बाहुल्येनभवति स्रौघ्नः उपजानूपकर्णोपनीवेष्ठक्
औपजानुकः औपकर्णिकः औपनीविकः संभूते स्रुघ्नेसंभवतिस्रौघ्नः कोशाड्ढञ् कौशेयंवस्त्रं
कालात्साधुपुष्प्यत्पच्यमानेषु हेमंतेसाधुर्हैमंतः प्राकारः वसंतेपुष्प्यंति वासंत्यः कुंदलताः शर
दिपच्यंतेशारदाः शालयः उप्तेच हेमंतेउप्यंते हैमंतायवाः आश्वयुज्यावुञ् ठञोऽपवादः आश्वयु

ज्यासुमा आश्वयुजंकामाषाः ग्रीष्मवसंतादन्यतरस्यां पक्षेऋत्वण् ग्रैष्मकं वासंतकं वासंतं देय
मृणे कालादित्येवमासेदेयंऋणंमासिकं कलाप्यश्वत्थयवबुसाद्वुञ् यस्मिन्कालेमयूराः कलापि
नोभवंतिसउपचारात्कलापी तत्रदेयंऋणंकलापकम् अश्वत्थस्यफलमश्वत्थः तद्युक्तः कालोऽप्य
श्वत्थः यस्मिन्काले ऽश्वत्थाः फलंति तत्रदेयमृणमश्वत्थकं यस्मिन्यवबुसमुत्पद्यते तत्रदेयमृणंयव
बुसकं ग्रीष्मावरसमाद्वुञ् ग्रीष्मेदेयमृणंग्रैष्मकं आवरसमकं संवत्सराग्रहायणीभ्यांठञ्च चाद्वु
ञ् सांवत्सरिकं सांवत्सरकं आग्रहायणिकं आग्रहायणकं व्यहरतिमृगः कालवाचिनः सप्तम्यंता
च्छब्दायतइत्यर्थे अणादयःस्युः योव्याहरति समृगश्चेत् निशायांव्याहरतिनैशो मृगः नैशिकः त
दस्यसोढं कालादित्येव निशासहचरितमध्ययनंनिशातत्सोढमस्यनैशः नैशिकः तत्रभवः स्रुघ्ने
भवः स्रौघ्नः राष्ट्रियः दिगादिभ्योयत् दिश्यं वर्ग्यं शरीरावयवाच्च दंत्यंकर्ण्यं प्राचांनगरांते प्राचां
देशेनगरांतेंऽगेपूर्वपदस्योत्तरपदस्याचामादेरचोवृद्धि ञ्णिणितिकितिच सौह्मनागरः पौंड्रनाग
रः प्राचांकिं मनगरमुदक्कुत्तत्रभवोमानगरः जंगलधेनुवलजांतस्यविभाषितमुत्तरं जंगलाद्यंत
स्यांगस्यपूर्वपदस्याचामादेरचोवृद्धिरुत्तरपदस्यवाञ्णितिणितिकितिच कुरुजंगलेभवंकौरुजांग
लंकौरुजंगलं वैश्वधेनवं वैश्वधेनवं सौवर्णवलजं सौवर्णवालजं दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढ
ञ् दार्तेयं कौक्षेयं कलशिर्घटस्तत्रभवंकालशेयंतक्रं बास्तेयं बस्तिर्नाभेरधोद्वयोः आस्तेयं आहे
यं ग्रीवाभ्योऽणूच चाढ्ढञ् ग्रैवं ग्रैवेयं गंभीराञ्ञ्यः गंभीरेभवंगांभीर्यं पंचजनादुपसंख्यानं

पांचजन्यः अव्ययीभावाच्च परिमुखेभवं पारिमुख्यं परिमुखादिभ्य एवेष्यते नेह औपकूलः अंतः
पूर्वपदाट्ठञ् अव्ययीभावादित्येव वेश्मनीत्यंतर्वेश्म तत्रभवं आंतर्वेश्मिकं आंतर्गेणिकं अध्या
त्मादेष्ठञिष्यते अध्यात्मभवं आध्यात्मिकं अनुशतिकादीनांच एषामुभयपदवृद्धिः स्यात् ञि
तिणितिकितिच आधिदैविकं आधिभौतिकं ऐहलौकिकं पारलौकिकं अध्यात्मादिराकृतिगणः दे
विकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् एषां पंचानां वृद्धिःप्राप्तावादेरच आत् ञितिणिति
कितिच दाविकं देविकाकूले भवादाविकाकूलाः शालयः शिंशपायाविकारः शांशपश्चमसः पलाशादि
भ्योवेत्यण् दित्यौहइदंदात्यौहं दीर्घसत्रेभवं दार्घसत्रं श्रेयसिभवं श्रायसं ग्रामात्पर्यनुपूर्वात् ठञ्स्या
त् अव्ययीभावादित्येव पारिग्रामिकः आनुग्रामिकः जिह्वामूलांगुलेश्छः जिह्वामूलीयं अंगुलीयं
वर्गांताच्च कवर्गीयं अशब्दे यत्खावन्यतरस्यां पक्षेपूर्वेणच्छः मद्वर्ग्यः मद्वर्गीणः मद्वर्गीयः अश
ब्देकिं कवर्गीयोवर्णः कर्णललाटात्कनलंकारे कर्णिका ललाटिका तस्यव्याख्यानइतिच व्याख्या
तव्यनाम्नः सुपांव्याख्यानः सौपोग्रंथः तैङः कार्त्तः सुप्सुभवं सौपं बह्वचोंऽतोदात्ताट्ठञ् षत्व
णत्वयोर्विधायकं शास्त्रं षत्वणत्वं तस्यव्याख्यानस्तत्रभवोवा षात्वणत्विकः क्रतुयज्ञेभ्यश्च सोमसा
ध्येषु यागेष्वेतौ प्रसिद्धौ तत्रान्यतरोपादानेन सिद्धे उभयोपादानसामर्थ्यादसोमका अपीह गृह्यंते
अग्निष्टोमस्यव्याख्यानस्तत्रभवोवा आग्निष्टोमिकः वाजपेयिकः पाकयज्ञिकः नावयज्ञिकः बहुव
चनं स्वरूपविधिनिरासार्थं अनंतोदात्तार्थं आरंभः अध्यायेष्वेवर्षेः ऋषिशब्देभ्यो लक्षणया व्याख्ये

यग्रंथवृत्तिभ्योभवेव्याख्यानेचाध्यायेठञ्स्यात् वसिष्ठेनदृष्टोमंत्रोवसिष्ठस्तस्यव्याख्यानस्तत्रभवो
वावासिष्ठिकोऽध्यायः अध्यायेषुकिम् वासिष्ठीऋक् पौरोडाशपुरोडाशात्ष्ठन् पुरोडाशसहचरि
तोमंत्रः पुरोडाशः सएवपौरोडाशः ततष्ठन् पौरोडाशिकः छंदसोयदणौ छंदस्यः छांदसः द्व्यज्ऋत्
ब्राह्मणर्कप्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् द्व्यचः ऐष्टिकः पाशुकः ऋत्चातुर्होतृकः ब्रा
ह्मणिकः आर्चिकइत्यादि अणृगयनादिभ्यः ठञादेरपवादः आर्गयनः औपनिषदः वैयाकरणः
ततआगतः स्नुघ्नादागतः स्रौघ्नः ठगायस्थानेभ्यः शुल्कशालायाआगतः शौल्कशालिकः शुं
डिकादिभ्योऽण् आयस्थानेठक्छादीनांचापवादः शुंडिकादागतः शौंडिकः कार्कणः तैर्थः विद्या
योनिसंबंधेभ्योवुञ् औपाध्यायकः पैतामहकः ऋतष्ठञ् वुञोऽपवादः हौतृकं मातृकं भ्रातृकं
पितुर्यच्च चाट्ठञ् रीङ्ऋतः यस्येतिलोपः पित्र्यं पैतृकं गोत्रादंकवत् बिदेभ्यआगतंबैदं गार्गं दाक्षं
औपगवकं नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानां नञः परेषांशुच्यादीनांपंचानामादेरचोवृद्धिः
पूर्वपदस्यतुवाञिदादौपरे आशौचं अशौचं आनैश्वर्यं अनैश्वर्यं आक्षैत्रज्ञं अक्षैत्रज्ञं आकौशलं
अकौशलं आनैपुणं अनैपुणं हेतुमनुष्येभ्योऽन्यतरस्यांरूप्यः समादागतंसमरूप्यं विषमरूप्यं
पक्षेगहादित्वाच्छः समीयं विषमीयं देवदत्तरूप्यं दैवदत्तं मयट्च सममयं विषममयं देवदत्तमयं
प्रभवति ततइत्येवहिमवतः प्रभवति हैमवतीगंगा विदूराञ्ञ्यः विदूरात्प्रभवति वैदूर्योमणिः तद्ग
च्छतिपथिदूतयोः स्रुघ्नंगच्छतिस्रौघ्नः पंथाः दूतोवा अभिनिष्क्रामतिद्वारं तदस्यैव स्रुघ्नमभि

निष्क्रामतिस्रौघ्नं कन्यकुब्जद्वारं अधिकृत्यकृतेग्रंथे तदित्येव शारीरकमधिकृत्य कृतोग्रंथः शारी
रकीयः शारीरकंभाष्यमितित्वभेदोपचारात् शिशुक्रंदयमसभद्वंद्वेंद्रजननादिभ्यश्छः शिशू
नांक्रंदनंशिशुक्रंदस्तमधिकृत्य कृतोग्रंथः शिशुक्रंदीयः यमस्यसभायमसभं क्लीबत्वंनिपातना
त् यमसभीयः किरातार्जुनीयं इंद्रजननादिराकृतिगणः इंद्रजननीयं विरुद्धभोजनीयं सोस्यनि
वासः स्रुघ्नोनिवासोऽस्यस्रौघ्नः अभिजनश्च स्रुघ्नोभिजनोऽस्यस्रौघ्नः यत्रस्वयंवसति सनिवा
सः यत्रपूर्वैरुषितंसोऽभिजनइतिविवेकः आयुधजीविभ्यश्छःपर्वते पर्वतवाचिनः प्रथमांताद
भिजनशब्दादस्येत्यर्थे छःस्यात् हृद्गोलः पर्वतोऽभिजनोयेषामायुधजीविनांते हृद्गोलीयाः आ
युधेतिकिं ऋक्षोदः पर्वतो भिजनोयेषांते आर्क्षोदाद्विजाः शंडिकादिभ्योञ्यः शुंडिकोऽभि
जनोस्यशांडिक्यः सिंधुतक्षशिलाभ्योऽणञौ सिंध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादु
क्तेऽर्थे सैंधवः तक्षशिलानगरी अभिजनोऽस्यताक्षशिलः तूदीशलातुरवर्मतीकूचवाराड्ढक्
छणढञ्यकः तुदीअभिजनोऽस्यतौदेयः शालातुरीयः वार्मतेयः कौचवार्यः भक्तिः सोऽस्येत्य
नुवर्त्तते भज्यतेसेव्यतइतिभक्तिः स्रुघ्नोभक्तिरस्यस्रौघ्नः अचित्ताददेशकालाट्ठक् अपूपाभक्तिर
स्यापूपिकः पायसिकः अचित्तात्किं देवदत्तः अदेशात्किं स्रौघ्नः अकालात्किं ग्रैष्मः महाराजाट्ठञ्
माहाराजिकः वासुदेवार्जुनाभ्यांवुन् वासुदेवकः अर्जुनकः गोत्रक्षत्रियाख्येभ्योबहुलंवुञ् अणो
ऽपवादः परत्वाद्वृद्धाच्छंबाधते ग्लुचुकायनिर्भक्तिरस्यग्लौचुकायनकः नाकुलकः बहुलग्रहणान्नेह

पाणिनोभक्तिरस्य पाणिनीयः जनपदिनांजनपदवत्सर्वंजनपदेनसमानशब्दानांबहुवचने जनपद
स्वामिवाचिनांबहुवचनेजनपदवाचिनासमानश्रुतीनांजनपदवत्सर्वंस्यात्प्रकृतिः प्रत्ययश्च जनपद
तदवध्योश्चेतिप्रकरणेयेप्रत्ययाउक्तास्ते ऽत्रातिदिश्यंते अंगाजनपदोभक्तिरस्यांगकः अंगाः क्षत्रि
याभक्तिरस्यांगकः जनपदिनांकिं पंचालाब्राह्मणाभक्तिरस्यपांचालः जनपदेनेतिकिं पौरवाः रा
जानोभक्तिरस्यपौरवीयः तेनप्रोक्तं पाणिनिनाप्रोक्तंपाणिनीयं तित्तिरिवरतंतुखंडिकोखाच्छ
ण् छंदोब्राह्मणानीतितद्विषयता तित्तिरिणाप्रोक्तमधीयतेतैत्तिरीयाः काश्यपकौशिकाभ्या
मृषिभ्यांणिनिः काश्यपेनप्रोक्तमधीयतेकाश्यपिनः कौशिकिनः कलापिवैशंपायनांतेवासि
भ्यश्च अणोऽपवादः कलाप्यंतेवासिभ्यः हरिद्रुणाप्रोक्तमधीयतेहारिद्रविणः वैशंपायनांतेवा
सिभ्यः आलंबिनः पुराणप्रोक्तेषुब्राह्मणकल्पेषु तृतीयांतात् प्रोक्तार्थेणिनिः स्यात् यत्प्रोक्तंपु
राणप्रोक्ताश्चेत्ब्राह्मणकल्पास्तेभवंति पुराणेनचिरंतनेनमुनिनाप्रोक्ताः भल्लु भाल्लविनः शाट्या
यनः शाट्यायनिनः कल्पे पिंग पैंगीकल्पः पुराणेतिकिं याज्ञवल्क्यानिब्राह्मणानि आश्मरथः क
ल्पः अणि आपत्यस्येति लोपः कठचरकाल्लुक् आभ्यांप्रोक्तप्रत्ययस्यलुक्स्यात् कठेनप्रोक्तम
धीयतेकठाः चरकाः कलापिनोऽण् कलापिनाप्रोक्तमधीयतेकालापाः नांतस्यटिलोपेसब्रह्म
चारीपीठसर्पिकलापिकौथुमितैतिलिजाजलिजांगलिलांगलिशिलालिशिखंडिसूकरसद्मसु
पर्वणामुपसंख्यानमि त्युपसंख्यानाट्टिलोपः छगलिनोढिनुक् छगलिनाप्रोक्तमधीयतेछाग

लेयिनः पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयोः णिनिः स्यात् पाराशर्येणप्रोक्तंभिक्षुसूत्रमधी
यतेपाराशरिणोभिक्षवः शैलालिनोनटाः कर्मंदकृशाश्वादिनिः भिक्षुनटसूत्रयोरित्येव कर्मंदे
नप्रोक्तमधीयतेकर्मंदिनोभिक्षवः कृशाश्विनोनटाः तेनैकदिक् सुदाम्नाअद्रिणाएकदिक्सौदाम
नी तसिश्च स्वरादिपाठादव्ययत्वं पीलुमौलेनैकदिक्पीलुमूलतः उरसो यच्च चात्तसिःअणो
ऽपवादः उरसाएकदिक्उरस्यःउरस्तः उपज्ञाते तेनेत्येव पाणिनिनाउपज्ञातंपाणिनीयं कृतेग्रंथे
वररुचिनाकृतोवाररुचोग्रंथः संज्ञायां तेनेत्येव अग्रंथार्थमिदं मक्षिकाभिः कृतंमाक्षिकंमधुकु
लालादिभ्योवुञ् तेनकृतेसंज्ञायां कुलालेनकृतंकौलालकं वारुडकं क्षुद्राभ्रमरवटरपादपाद
ञ् तेनकृतेसंज्ञायां क्षुद्राभिःकृतंक्षौद्रं भ्रामरं वाटरं पादपं तस्येदं उपगोरिदंऔपगवं वहेस्तुर
णिट्च संवोढुःस्वंसांवहित्रं अग्नीधःशरणेरण्भंच अग्निमिंधेअग्नीत् तस्यस्थानं आग्नीध्रं ता
त्स्थ्यात्सोऽप्याग्नीध्रः समिधामाधानेषेण्यण् सामिधेन्योमंत्रः सामिधेनीऋक् रथाद्यत् रथ्यं
चक्रं पत्रपूर्वादञ् पत्रंवाहनं अश्वरथस्येदमाश्वरथं पत्राध्वर्युपरिषदश्च अञ् पत्राद्वाह्ये अ
श्वस्येदंवहनीयं आश्वं आध्वर्यवं पारिषदं हलसीराट्ठक् हालिकंसैरिकं द्वंद्वाद्वुन्वैरमैथुनिक
योः काकोलूकिका कुत्सकुशिकिका द्वंद्वेदेवासुरादिभ्यः प्रतिषेधः दैवासुरं गोत्रचरणाद्वुञ् औ
पगवकं चरणाद्धर्माम्नाययोरितिवक्तव्यं काठकं संघांकलक्षणेष्वञ्यञिञामण् घोषग्रहण
मपिकर्तव्यं अञ् बैदः संघोंऽकोघोषोवा बैदंलक्षणं यञ् गार्गःगार्गं इञ् दाक्षःदाक्षं परंपरासं

बंधोऽकः साक्षात्तुलक्षणं शाकलाद्वा अणवोक्तेऽर्थे पक्षेचरणत्वाद्वुञ् शाकलेनप्रोक्तमधीयते
शाकलाः तेषांसंघोऽकोघोषोवा शालकः शाकलकः लक्षणेक्लीबता छंदोगौक्थिकयाज्ञिक
बव्हृचनटाञ्ञः छंदोगादीनांधर्मआम्नायोवाछांदोग्यं औक्थिक्यं याज्ञिक्यं बाव्हृच्यंनाट्यं
चरणाद्धर्माम्नाययोरित्युक्तं तत्साहचर्यान्नटशब्दादपितयोरेव नदंडमाणवांतेवासिषु दंडप्र
धानामाणवादंडमाणवास्तेषु शिष्येषुचवुञ्नस्यात् दाक्षाः दंडमाणवाः शिष्यावा रैवतिकादि
भ्यश्छः तस्येदमित्यर्थे वुञोऽपवादः रैवतिकीयः बैजवापीयः कौपिंजलहास्तिपदादण्
वक्तव्यः कुपिंजलस्यापत्यमिहैवनिपातनादण् तदंतात्पुनरण् कौपिंजलः गोत्रवुञोऽपवा
दः हस्तिपदस्यापत्यंहास्तिपदः तस्यापत्यंहास्तिपदः चरणवुञोऽपवादः आथर्वणिकस्येक
लोपश्च आथर्वणिकस्यायंधर्मआम्नायेवाआथर्वणः चरणवुञोऽपवादः इतिशैषिकाःस
माप्ताः तस्यविकारः अश्मनोविकारेटिलोपोवक्तव्यः अश्मनोविकारआश्मः भास्मनः मार्त्तिकः
अवयवेचप्राण्योषधिवृक्षेभ्यः चाद्विकारे मयूरस्यावयवोविकारोवामायूरः सुर्वायाः विकारो मौ
र्वंकांडंभस्मवापैप्पलं बिल्वादिभ्योऽण् बैल्वः कोपधाच्च अण् अञोऽपवादः तर्कु तार्कवं तैत्तिडी
कं त्रपुजतुनोष्षुक् आभ्यामणस्याद्विकारे एतयोः षुगागमश्च त्रापुषं जातुषं ओरञ् दैवदारवं भाद्र
दारवं अनुदात्तादेश्च अञ्स्यात् दाधित्थं कापित्थं पलाशादिभ्योवा पालाशं कारीरं खादिरं शा
म्याष्लञ् शामीलंभस्म षित्वान्ङीष् शामीलीस्रुक् मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः प्र

कृतिमात्रान्मयड्वास्यात्विकारावयवयोः अश्ममयं आश्मनं अभक्ष्येत्यादिकिं मौद्गः सूपः कार्पा
समाच्छादनं नित्यंवृद्धशरादिभ्यः आम्रमयंशरमयं एकाचोनित्यं त्वङ्मयं वाङ्मयं कथंतर्हि
आप्यमम्मयमिति तस्येदमित्यणंतात्स्वार्थेष्यञ् गोश्चपुरीषे गोः पुरीषं गोमयं पिष्टाच्च मयट्
स्याद्विकारे पिष्टमयंभस्म कथंपैष्टीसुरेति सामान्यविवक्षायांतस्येदमित्यण् संज्ञायांकन् पिष्टा
दित्येव पिष्टस्यविकारविशेषः पिष्टकः पूपो ऽपूपः पिष्टकः स्यात् व्रीहेः पुरोडाशे मयट्स्यात् बि
ल्वाद्यणो ऽपवादः व्रीहिमयः पुरोडाशः व्रैहमन्यत् असंज्ञायांतिलयवाभ्यां तिलमयं यवमयं
संज्ञायां तु तैलं यावकः तालादिभ्यो ऽण् अञ्मयटोरपवादः तालाद्धनुषि तालंधनुः अन्यत्तालम
यमैंद्रायुधं जातरूपेभ्यः परिमाणे बहुवचनात्पर्यायग्रहणं हाटकस्तापनीयः सौवर्णोवानिष्कः
परिमाणेकिं हाटकमयीयष्टिः प्राणिरजतादिभ्यो ऽञ् शौकं बाकं राजतं ञितश्चतत्प्रत्ययात्
ञिद्यो विकारावयवार्थकः प्रत्ययस्तदंतादञ्स्यात्तयोरेवार्थयोर्मयटो ऽपवादः शामीलस्य शामीलं
दाधित्थं ञितः किम् बैल्वमयं क्रीतवत्परिमाणात् प्राग्वतेष्ठञित्यारभ्यक्रीतार्थेयेप्रत्ययायेनो
पाधिना परिमाणाद्विहितास्तेतथैव विकारे ऽतिदिश्यंते अणादीनामपवादः निष्केणक्रीतंनैष्कि
कं एवंनिष्कस्यविकारो ऽपिनैष्किकः शतस्यविकारः शत्यः शातिकः उष्ट्राद्वुञ् प्राण्यञो ऽपवादः
औष्ट्रकः उमोर्णयोर्वा औमं औमकं और्णं और्णकं वुञभावेयथाक्रममणञौ एण्याढञ् ऐणे
यं एणस्यतु ऐणं गोपयसोर्यत् गव्यं पयस्यं द्रोश्च दुर्द्रक्षस्तस्यविकारो ऽवयवोवाद्रव्यं मानेवयः

द्रोरित्येव द्रुवयं यौतवं द्रुवयंपाय्यमिति मानार्थकं त्रयं फलेलुक् विकारावयवप्रत्ययस्य लुक् स्यात्फले
आमलक्याः फलंआमलकं प्लक्षादिभ्योण् विधानसामर्थ्यान्नलुक् प्लाक्षं न्यग्रोधस्यच केवलस्य
अस्य नवृद्धिरैजागमश्च नैयग्रोधं जंबवावा जंबुशब्दात् फलेऽण्वास्यात् जांबवंपक्षेओरञ् तस्य
लुक् जंबु लुप्च जंबूवाः फलप्रत्ययस्य लुब्वास्यात् लुपि युक्तवत् जंबूवाः फलंजंबूः फलपाकशुषा
मुपसंख्यानं व्रीहयः मुद्गाः पुष्पमूलेषुबहुलं मल्लिकायाःपुष्पंमल्लिका जात्याःपुष्पंजाती विदार्याः
मूलंविदारी बहुलग्रहणान्नेह पाटलानिपुष्पाणि साल्वानिमूलानि बाहुलकात्क्वचिल्लुक् अशोकं कर
वीरं हरीतक्यादिभ्यश्च एभ्यः फलप्रत्ययस्य लुप्स्यात् हरीतक्यादीनांलिंगमेव प्रकृतिवत् हरीतक्याः
फलानि हरीतक्यः कंसीयपरशव्ययोर्यञञौलुक्च कंसीयपरशव्यशब्दाभ्यां यञञौस्तः छय
तोश्चलुक् कंसायहितंकंसीयं तस्यविकारः कांस्यं परशवेहितंपरशव्यं तस्यविकारः पारशवः इ
ति प्राग्दीव्यतीयाः समाप्ताः प्राग्वहतेष्ठक् तद्वहतीत्यतःप्राक्ठक् अधिक्रियते तदाहेतिमा
शब्दादिभ्यउपसंख्यानं माशब्दंकार्षीइतियआह समाशाब्दिकः स्वागतादीनांच ऐच्नस्यात् स्वा
गतमित्याह स्वागतिकः स्वाध्वरिकः स्वंगस्यापत्यंस्वांगिः व्यांगिः व्यडस्यापत्यंव्याडिः व्यवहारेण
चरतिव्यावहारिकः स्वपतौसाधुस्वापतेयं आहौप्रभूतादिभ्यः प्रभूतमाह प्राभूतिकः पार्या
प्तिकः पृच्छतौसुस्नातादिभ्यः सुस्नातं पृच्छतिसौस्नातिकः सौखशायनिकः अनुशातिका-
दिः गच्छतौपरदारादिभ्यः पारदारिकः गौरुतल्पिकः तेनदीव्यतिखनतिजयतिजितं अक्षैर्दी

व्यतिआक्षिकः अभ्र्यारवनतिआभ्रिकः अक्षैर्जयतिआक्षिकः अक्षैर्जितंआक्षिकं संस्कृतं दध्नासं
स्कृतंदाधिकं मारीचिकं कुलत्थकोपधादण् ग्कोपवादः कुलत्थैः संस्कृतंकौलत्थं तैत्तिडीकं तर
ति उडुपेन तरतिऔडुपिकः गोपुच्छाट्ठञ् गौपुच्छिकः नौद्व्यचष्ठन् नाविकः घटिकः बाहुभ्यां
तरतिबाहुकास्त्री चरति तृतीयांताद्गच्छतिभक्षयतीत्यर्थयोष्ठक्स्यात् हस्तिनाचरतिहास्तिकः
शाकटिकः दध्नाचरतिदाधिकः आकर्षात्ष्ठल आकर्षोनिकषोपलः आकषादिति पाठांतरं तेन
चरतिआकर्षिकः षित्वान्ङीष् आकर्षिकी पर्पादिभ्यः ष्ठन् पर्पेणचरतिपर्पिकः पर्पिकी येनपीठेन
पंगवश्चरंति सपर्पः अश्विकः रथिकः श्वगणाट्ठञ्च चात् ष्ठन् शादेरिञि ऐज्न श्वभस्त्रस्याप
त्यंश्वाभस्त्रिः श्वादंष्ट्रिः तदादिविधौचैतदेवज्ञापकं इकारादाविति वाच्यं श्वगणेचरति श्वागणि
कः श्वागणिकी श्वगणिकः श्वगणिकी पदांतस्यांन्यतरस्यां श्वादेरंगस्य पदशब्दां तस्यैज्वास्यात्
श्वापदस्येदंश्वापदं शौवापदं वेतनादिभ्योजीवति वेतनेनजीवतिवैतनिकः धानुष्कः वस्नक्रयवि
क्रयाट्ठन् वस्नेनमूल्येनजीवतिवस्निकः क्रयविक्रयग्रहणंसंघातविगृहीतार्थं क्रयविक्रयिकः क्र
यिकः विक्रयिकः आयुधाच्छच चाट्ठन् आयुधेनजीवतिआयुधीयः आयुधिकः हरत्युत्संगा
दिभ्यः उत्संगेनहरत्यौत्संगिकः भस्त्रादिभ्यः ष्ठन् भस्त्रयाहरतिभस्त्रिकः षित्वाद्भस्त्रिकी विभा
षाविवधात् विवधेनहरतिविवधिकः पक्षेठक् वैवधिकः एकदेशविकृतस्यानन्यत्वाद्वीवधादपिष्ठ
न्वीवधिकः वीवधिकी विवधवीवधशब्दोउभयतो बद्धशिक्येस्कंधवाह्येकाष्ठेवर्त्तंते अणूकुटि-

लिकाया: कुटिलिका व्याधानां गतिविशेष: कर्मारोपकरणभूतं लोहं च कुटिलिकया हरति मृगानंगारान्वा कौटिलिको व्याधः कर्मारश्च निर्वृत्ते ऽक्षद्यूतादिभ्यः अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरं क्त्रेर्मम्नित्यं क्त्रि प्रत्ययांत प्रकृतिकात्तृतीयांतान्निर्वृत्ते ऽर्थे मप्स्यान्नित्यं कृत्या निर्वृत्तं कृत्रिमं पक्त्रिमं भावप्रत्ययांतादिमब्वक्तव्यः पाकेन निर्वृत्तं पाकिमं त्यागिमं अपमित्ययाचिताभ्यां कक्कनौ अपमित्येति ल्यबंतं अपमित्य निर्वृत्तमापमित्यकं याचितेन निर्वृत्तं याचितकं संसृष्टे दध्ना संसृष्टं दाधिकं चूर्णादिनिः चूर्णैः संसृष्टाश्चूर्णिनो ऽपूपाः लवणाल्लुक् लवणेन संसृष्टो लवणः सूपः लवणं शाकं मुद्गादण् मौद्ग ओदनः व्यंजनैरुपसिक्ते दध्ना उपसिक्तं दाधिकं ओजःसहों ऽभसा वर्त्तते ओजसा वर्त्तते औजसिकः शूरः साहसिकश्चौरः आंभसिको मत्स्यः तत्प्रत्यनुपूर्वमीपलोमकूलकं द्वितीयांतादस्माद्वर्त्तत इत्यस्मिन्नर्थे ठक्स्यात् क्रियाविशेषणत्वाद्द्वितीया प्रतीपं वर्त्तते प्रातीपिकः आन्वीपिकः प्रातिलोमिकः आनुलोमिकः प्रातिकूलिकः आनुकूलिकः परिमुखंच परिमुखं वर्त्तते पारिमुखिकः चात्पारिपार्श्विकः प्रयच्छति गर्ह्यं द्विगुणार्थं द्विगुणं तत्प्रयच्छति द्वैगुणिकः त्रैगुणिकः वृद्धेर्वृधषु भावो वक्तव्यः वार्धुषिकः कुसीददशैकादशात्ष्ठन्ष्ठचौ गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे कुसीदं वृद्धिः तदर्थं द्रव्यं कुसीदं तत्प्रयच्छति कुसीदिकः कुसीदिकी एकादशार्थत्वादेकादश ते च तेवस्तुतो दश चेति विग्रहे अकारः समासांत इहैव सूत्रे निपात्यते दशैकादशिकः दशैकादशिकी दशैकादशान्प्रयच्छति इत्युत्तमर्ण एवेहापि तद्धितार्थः उंछति बदराण्युंछति बादरिकः

रक्षति समाजंरक्षतिसामाजिकः शब्ददर्दुरंकरोति शब्दंकरोतिशाब्दिकः दार्दुरिकः पक्षिमत्स्य
मृगान्हंति स्वरूपस्यपर्यायाणांविशेषाणांच ग्रहणंमत्स्य पर्यायेषुमीनस्यैव पक्षिणोहंतीतिपा-
क्षिकःशाकुनिकः मायूरिकः मात्स्यिकः मैनिकः शाकुलिकः मार्गिकः हारिणिकः सारंगिकः परिपंथं
चतिष्ठति अस्माद्द्वितीयांतात्तिष्ठतिहंतिचेत्यर्थेठक्स्यात् पंथानंवर्जयित्वाव्याप्यवातिष्ठति पारिपंथि
कश्चौरः परिपंथंहंतिपारिपंथिकः माथोत्तरपदपदव्यनुपदंधावति दंडाकारोमाथः दंडमाथः तं
धावति दांडमाथिकः पादविकः आनुपदिकः आक्रंदाट्ठञ्च अस्माट्ठञ्स्याच्चाट्ठक् धावतीत्यर्थेआक्रं
दंदुःखिनांरोदनस्थानंधावतिआक्रंदिकः पदोत्तरपदंगृण्हाति पूर्वपदंगृण्हातिपौर्वपदिकः औत्तर
पदिकः प्रतिकंठार्थललामंच एभ्योगृण्हातीत्यर्थेठक् प्रतिकंठंगृण्हातिप्रातिकंठिकः आर्थिकः लाला
मिकः धर्मंचरति धार्मिकः अधर्माच्चेतिवक्तव्यं आधर्मिकः प्रतिपथमेतिठंश्च प्रतिपथमेतिप्रतिपा
थिकः प्रतिपथिकी समवायान्समवैति सामवायिकः सामूहिकः परिषदोण्यः परिषदंसमवैति
पारिषद्यः सेनायावा ण्यःस्यात् पक्षेठक् सैन्याः सैनिकाः संज्ञायांललाटकुक्कुट्यौपश्यति ललाटं
पश्यतिलालाटिकः सेवकः कुक्कुटीशब्देनतत्पातार्हः स्वल्पदेशोलक्ष्यते कौक्कुटिकोभिक्षुः तस्यध
र्म्यं आपणस्यधर्म्यं आपणिकं अण्महिष्यादिभ्यः महिष्याः धर्म्यंमाहिषं याजमानं ऋतोऽञ्
यातुर्धर्म्यंयात्रं नराच्चेतिवक्तव्यं नरस्यधर्म्यानारी विशसितुरिड्लोपश्चाञ्चवक्तव्यः विशसितु
धर्म्यंवैशस्त्रं विभाजयितुर्णिलोपश्चाञ्चवक्तव्यः विभाजयितुर्धर्म्यंवैभाजित्रं अवक्रयः षष्ठ्यंता

ठकूस्यात् अवक्रये ऽर्थे आपणस्यावक्रयआपणिकः राजग्राह्यंद्रव्यंअवक्रयः तदस्यपण्यं अपूपाः
पण्यमस्यआपूपिकः लवणाट्ठञ् लावणिकः किसरादिभ्यष्ठन् किसरंपण्यमस्यकिसरिकः षित्वा
न्ङीष् किसरिकी किसर उशीर नलदइत्यादि किसरादयः सुगंधिद्रव्यविशेषवाचिनः शलालुनोन्य
तरस्यां ष्ठन् पक्षेठक् शलालुकः शलालुकी शालालुकः शालालुकी शलालुसुगंधिद्रव्यविशेषः शि
ल्पं मृदंगवादनंशिल्पमस्यमार्दंगिकः मड्डुकझर्झरादणन्यतरस्यां माड्डुकः माड्डुकिकः झार्झ
रिकः झार्झरः प्रहरणं तदस्येत्येव असिः प्रहरणमस्यआसिकः धानुष्कः परश्वधाट्ठञ्च पारश्वधि
कः शक्तियष्ट्योरीकक् शाक्तीकः याष्टीकः अस्तिनास्तिदिष्टंमतिः तदस्येत्येव अस्ति परलोकइत्ये
वंमतिर्यस्यस आस्तिकः नास्तीतिमतिर्यस्यसनास्तिकः दिष्टमितिमतिर्यस्यसदैष्टिकः शीलं अ
पूपभक्षणंशीलमस्यआपूपिकः छत्रादिभ्योणः गुरोर्दोषाणामावरणं छत्रंतच्छीलमस्यछात्रः का
र्मस्ताच्छील्ये कर्मइतिताच्छील्येणेटिलोपोनिपात्यते कर्मशीलः कार्मःनस्तद्धितइत्येवसिद्धेऽण्
कार्यताच्छीलिकेणेऽपि तेनचौरीतापसीत्यादिसिध्यति ताच्छील्येकिं कार्मणः कर्माध्ययनेवृ
त्तं प्रथमांतात्षष्ठ्यर्थेठक् अध्ययने वृत्तायाक्रियासान्वेसप्रथमांतस्यार्थः एकमन्यद्वृत्तमस्य सऐका
न्यिकः यस्याध्ययने प्रवृत्तस्यपरीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकंजातं यस्यसः बह्व
च्पूर्वपदाट्ठञ् प्राग्विषये द्वादशान्यानिकर्माणि अध्ययने वृत्तान्यस्यद्वादशान्यिकः द्वादशाऽप
पाठाअस्यजाताइत्यर्थः हितंभक्षाः अपूपभक्षणंहितमस्मै आपूपिकः तदस्मैदीयतेनियुक्तं अग्र

भोजनंनियतंदीयते ऽस्मैआग्रभोजनिकः श्राणामांसौदनाटिठन् श्राणानियुक्तंदीयते ऽस्मैश्रा-
णिकः श्राणिकीमांसौदनग्रहणंसंघातविगृहीतार्थंमांसौदनिकः मांसिकः औदनिकः भक्तादण
न्यतरस्यां पक्षेठक् भक्तमस्मैनियुक्तंदीयतेभाक्तः भाक्तिकः तत्रनियुक्तः आकरेनियुक्तआकरि
कः अगारांताठ्न् देवागारेनियुक्तोदेवागारिकः अध्यायिन्यदेशकालात् निषिद्धदेशकालवा
चकाठ्ठक्स्यादध्येतरि स्मशानेअधीतेस्माशानिकः चतुर्दश्यामधीतेचातुर्दशिकः कठिनांतप्रस्ता
रसंस्थानेषुव्यवहरति तत्रेत्येव वंशकठिनेव्यवहरतिवांशकठिनिकः वंशावेणवः कठिनायस्मिन्दे
शेसवंशकठिनस्तस्मिन्देशेयाक्रियायथानुष्ठेयातांतथैवानुतिष्ठतीत्यर्थः प्रास्तारिकः सांस्थानिकः
निकटेवसति नैकटिकोभिक्षुः आवसथात्ष्ठल् आवसथेवसति आवसथिकः षित्वान्ङीष् आ
वसथिकी आकर्षात्सर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च आवसथात्किसरादेः षितः षडेतेठगधिका
रे षडितिसूत्रषट्केनविहिताइत्यर्थः प्रत्ययास्तकसप्त इतिठकोऽवधिःसमाप्तः प्राग्घिताद्यत् त
स्मैहितमित्यतः प्राग्यदधिक्रियते तद्वहतिरथयुगप्रासंगं रथंवहतिरथ्यः युग्यः वत्सानांदमनका
लेस्कंधेकाष्ठमासज्यतेसप्रासंगस्तंवहति प्रासंग्यः धुरोयड्ढकौ हलिचेतिदीर्घेप्राप्ते नभकुर्छु
रां भस्यकुर्च्छुरश्चोपधायादीर्घोनस्यात् धुर्यः धौरेयः खः सर्वधुरात् सर्वांधुरंवहतिसर्वधुरीणः
एकधुराल्लुक्च्च एकधुरीणः एकधुरः शकटादण् शकटंवहतिशाकटोगौः हलसीराट्ठक् हलंवहति
हालिकः सैरिकः संज्ञायांजन्या जनींवधूस्तांवहतिप्रापयतिवाजन्या विध्यत्यधनुषा द्वितीयांता

द्विध्यतीत्यर्थे यत्स्यान्नचेत्तत्र धनुः करणं पादौ विध्यंति पद्याः शर्कराः धनगणं लब्धा तृन्नंतमेतत्
धनं लब्धा धन्यः गणं लब्धा गण्यः अन्नाण्णः अन्नं लब्धा आन्नः वशंगतः वश्यः परेच्छानुचारी
पदमस्मिन् दृश्यं पद्याः कर्दमः नातिशुष्कइत्यर्थः मूलमस्याबर्हि आबर्हणमाबर्हउत्पाटनं तदस्या
स्तीत्याबर्हि मूलमाबर्हि येषां ते मूल्यामुद्गाः संज्ञायां धेनुष्य धेनुशब्दस्य षुगागमो यत्प्रत्ययश्च स्वा
र्थे निपात्यते संज्ञायां धेनुष्या बंधके स्थिता गृहपति नासंयुक्ते ञ्यः गृहपतिर्यजमानस्तेन संयुक्तो
गार्हपत्योऽग्निः नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमित
संमतेषु नावा तार्यं नार्यं वयसा तुल्यो वयस्यः धर्मेण प्राप्यं धर्म्यं विषेण वध्यो विष्यः मूलेनानाम्यं मू
ल्यं मूलेन समो मूल्यः सीतया संमितं सीत्यं क्षेत्रं तुलया संमितं तत् तुल्यं धर्मपथ्यर्थन्यायादनपेते
धर्मादनपेतं धर्म्यं पथ्यं अर्थ्यं न्याय्यं छंदसो निर्मिते छंदसा निर्मितं छंदस्यं इच्छया कृतमित्यर्थः उ
रसोऽण् च चाद्यत् उरसा निर्मितः पुत्रः औरसः उरस्यः हृदयस्य प्रियः हृद्यो देशः हृदयस्य हृल्लेखय
दण्लासेष्विति हृदादेशः बंधने चर्षौ हृदयशब्दात् षष्ठ्यंतात् बंधने यत् स्यात् वेदेऽभिधेये हृदयस्य बं
धनो हृद्यो वशीकरण मंत्रः मतजनहलात्करणजल्पकर्षेषु मतं ज्ञानं तस्य करणं भावः साधनं वा म
त्यं जनस्य जल्पो जन्यः हलस्य कर्षो हल्यः तत्र साधुः अग्न्यः सामसु साधुः सामान्यः येचाभावक
र्मणोरिति प्रकृतिभावः कर्मण्यः शरण्यः प्रतिजनादिभ्यः खञ् प्रतिजनं साधुः प्रातिजनीनः सा
र्वजनीनः सांयुगीनः वैश्वजनीनः भक्ताण्णः भक्ते साधवो भाक्ताः शालयः परिषदो ण्यः पारिष

द्यः परिषद इति योगविभागाण्णोऽपि पारिषदः कथादिभ्यष्ठक् कथायांसाधुः काथिकः गुडादि
भ्यष्ठञ् गुडेसाधुर्गौडिकः इक्षुः साक्तुकोयवः पथ्यतिथिवसतिस्वपतेर्ढञ् पथिसाधु पाथेयं
आतिथेयः वसनंवसतिस्तत्रसाधुर्वासतेयीरात्रिः स्वापतेयंधनं सभायायः सभ्यः समानतीर्थेवा
सी साधुरितिनिवृत्तं वसतीतिवासी समानेतीर्थेगुरौवसतीतिसतीर्थ्यः समानोदरेशयितओचो
दात्तः समानेउदरेशयितः स्थितः समानोदर्योभ्राता सोदराद्यः सोदर्यः अर्थः प्राग्वत् इतिप्राग्धि
तीयाः प्राक्क्रीताच्छः तेनक्रीतमित्यतः प्राग्छोऽधिक्रियते उगवादिभ्योयत् प्राक्क्रीतादि
त्येवउवर्णान्तागवादिभ्यश्चयत्स्याच्छस्यापवादः नाभिनभंच नभ्योऽक्षः नभ्यमंजनम् रथना
भावेवेदं शुनःसंप्रसारणंवाचदीर्घत्वं शुन्यं शून्यं ऊधसोऽनङ्च ऊधन्यः कंबलाच्चसंज्ञायां
यत्स्यात् कंबल्यमूर्णापलशतं संज्ञायांकिं कंबलीयाऊर्णा विभाषाहविरपूपादिभ्यः आमिक्ष्यं
दधि आमिक्षीयं पुरोडाश्यास्तंडुलाः पुरोडाशीयाः अपूप्यं अपूपीयं तस्मैहितं वत्सेभ्योहितो
वत्सीयोगोधुक् शंकव्यं दारु गव्यं हविष्यं शरीरावयवाद्यत् दंत्यं कंठ्यं नसनासिकायायत्तस्
क्षुद्रेषु नस्यं नाभ्यं येचतद्धिते यादौतद्धितेपरेशिरःशब्दस्यशीर्षन्नादेशः स्यात् शीर्षण्यः त
द्धितेकिं शिरइच्छतिशिरस्यति वाकेशेषु शीर्षण्यः शिरस्याः केशाः अचिशीर्षइतिवाच्यं अ
जादौतद्धितेशिरसःशीर्षादेशः स्थूलशिरस इदंस्थौलशीर्षं खलयवमाषतिलवृषब्रह्मणश्च
खलायहितंखल्यं यव्यं ब्रह्मण्यं चोद्रथ्या अजाविभ्यांथ्यन् अजथ्यायूथिः अविथ्या आत्मन्वि

श्वजनभोगोत्तरपदालखः आत्माध्वानौरवे एतौरवेप्रकृत्यास्तः आत्मनेहितंआत्मनीनं विश्वजनी
नं कर्मधारयादेवेष्यते षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छएव विश्वजनीयं पंचजनादुपसंख्यानं पंचज
नीनं सर्वजनाट्ठञ्खश्चसार्वजनिकः सर्वजनीनः माहाजनाट्ठञ् माहाजनिकः मातृभोगीणः
पितृभोगीणः राजभोगीणः आचार्यादणत्वंच आचार्यभोगीनः सर्वपुरुषाभ्यांणढञौसर्वाण्णो
वेतिवक्तव्यं सर्वस्मेहितं सार्वं सर्वीयं पुरुषाद्वधविकारसमूहतेनकृतेषु भाष्यप्रयोगात्तेनेत्यस्य
द्वंद्वमध्येनिवेशः पुरुषस्यवधःपौरुषेयः तस्येदमित्यणिप्राप्ते पुरुषस्यविकारः पौरुषेयः प्राणिरजता
दिभ्योऽञित्यञिप्राप्ते समूहेऽत्यणिप्राप्ते एकाकिनोऽपिपरितःपौरुषेयवृताइवेतिमाघः तेनकृतेग्रं
थेऽणिप्राप्तेअग्रंथेतुप्रसादादावप्राप्तइवेतिविवेकः माणवचरकाभ्यांखञ् माणवायहितंमाणवीनं
चारकीणं तदर्थंकृतेःप्रकृतौ विकृतिवाचकाच्चतुर्थ्यंतात्तदर्थायांप्रकृतौवाच्यायांप्रत्ययःस्यात् अं-
गारेभ्यएतानिअंगारीयाणिकाष्ठानि प्राकारीयाइष्टकाः शंकव्यंदारु छदिरुपादिबलेर्ढञ् छादिषे
पाणितृणानि बालेयास्तंडुलाः उपधिशब्दात्स्वार्थेइष्यते उपधीयतइत्युपधिः रथांगंतदेवोपधेयं
ऋषभोपानहोञ्र्यः छस्यापवादः आर्षभ्योवत्सः औपानत्ह्योमुंजः चर्मण्यप्ययमेवपूर्वविप्रतिषे-
धेनऔपानह्यं चर्मणोऽञ् चर्मणोयाविकृतिस्तद्वाचकादञ्स्यात् वध्र्यैइदं वार्धंचर्म वस्त्रंचर्म तद
स्यतदस्मिन्स्यादिति प्रकारआसामिष्टकानांस्यात्प्राकारीयाइष्टकाः प्रासादीयंदारु प्रकारोस्मिन्
स्यात्प्राकारीयोदेशः इतिशब्दोलौकिकींविवक्षामनुसारयति तेनेहन प्रासादोदेवदत्तस्यस्यादि-

ति परिखायाढञ् पारिखेयीभूमिः छयतोः पूर्णोऽवधिः प्राग्वतेष्ठञ् तेनतुल्यमितिवतिर्वक्ष्य-
ति ततः प्राक्ठञधिक्रियते आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् तदर्हतीत्येतदभिव्याप्यठञधिका
रमध्येठञोऽपवादष्टगधिक्रियतेगोपुच्छादीन्वर्जयित्वा असमासेनिष्कादिभ्यः अर्हादित्येतत्तेनक्री-
तमितियावत्सप्तदशसूत्र्यामनुवर्तते निष्कादिभ्योऽसमासेठक्स्यादार्हीयेष्वर्थेषुनैष्किकं समासेतु-
ठञ् परिमाणांतस्यासंज्ञाशाणयोः उत्तरपदस्यवृद्धिः स्यात्ञिदादौपरेपरमनैष्किकं असमासग्रह
णं ज्ञापकंभवतिइतः प्राक्तदंतविधिरिति तेनस्फगव्यम् यवापूप्यमित्यादि इतऊर्ध्वंतुसंख्यापूर्वपदा
नांतदंतग्रहणंप्राग्वतेरिष्यतेतच्चालुकि पारायणिकः द्वैपारायणिकः अलुकीतिकिं द्वाभ्यांशूर्पाभ्यांक्रीतं
द्विशूर्पं द्विशूर्पेणक्रीतेशूर्पादञ्माभूत् किंतुठञ् द्विशौर्पिकं अर्द्धात्परिमाणस्यपूर्वस्यतुवा अर्द्धा
त्परस्य परिमाणवाचकस्योत्तरपदस्याचामादेरचोवृद्धिः पूर्वपूर्वपदस्यतुवाञिदादौ अर्धद्रोणेनक्रीतं-
अर्धद्रौणिकं आर्द्धद्रौणिकं नातः परस्य अर्धात्परस्यपरिमाणाकारस्यवृद्धिर्नपूर्वप दस्यतुवाञि
दादौ आर्धप्रस्थिकं अर्धप्रस्थिकं अतः किं अर्धकौडविकं तपरः किं अर्धखार्यां भवा अर्धखारी अ
र्धखारीभार्य इत्यत्रवृद्धिनिमित्तस्येतिपुंवद्भावनिषेधोनस्यात् शताच्चठन्यतावशते शतेनक्रीतंशतिकं
शत्यं अशतेकिं शतंपरिमाणमस्यशतकः संघः इहप्रत्ययार्थोवस्तुतः प्रकृत्यर्थान्नभिद्यते तेनठन्यतौ
न किंतुकनेव आसमासइत्येव द्विशतेनक्रीतंद्विशतकं संख्यायाअतिशदंतायाःकन् संख्यायाःक
न् स्यादार्हीयेऽर्थेनतुल्यंतशदंतायाः पंचभिःक्रीतःपंचकः बहुकः त्यंतायास्तुसाप्ततिकः शदंताया-

श्चात्वारिंशत्कः वतोरिड्वा वत्वंतात्कन इड्वास्यात् तावतिकः तावत्कः विंशतित्रिंशद्भ्यांड्वुन
संज्ञायां योगविभागः कर्तव्यः आभ्यांकन्स्यात् असंज्ञायांतुड्वुन्स्यात् कनोऽपवादः किंशकः त्रिं-
शत्कः संज्ञायांतुविंशतिकः त्रिंशत्कः कंसाट्टिठन् टोङीबर्थः इकारउच्चारणार्थः कंसिकः कंसिकी
अर्धाच्चेतिवक्तव्यं अर्धिकः अर्धिकी कर्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्चवा कार्षापणिकः का
र्षापणीकी प्रतिकः प्रतिकी शूर्पादयन्यतरस्यां शौर्पं शौर्पिकं शतमानविंशतिकसहस्रवसना
दण् एभ्योऽण्स्यात् ठञ्ठक्कनामपवादः शतमानेनक्रीतं शातमानं वैंशतिकं साहस्रंवासनं अ-
ध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायां अध्यर्धपूर्वात्द्विगोश्चपरस्यार्हीयस्य लुक्स्यात् अध्यर्धकंसं द्विकंसं
संज्ञायांतु पांचकलापिकं विभाषाकार्षापणसहस्राभ्यां लुग्वास्यात् अध्यर्धकार्षापणं द्विकार्षापणं
द्विकार्षापणिकं औपसंख्यानिकस्यटिठनोलुक् पक्षे अध्यर्धप्रतिकं द्विप्रतिकं अध्यर्धसहस्रं अध्यर्ध-
साहस्रं द्विसहस्रं द्विसाहस्रं द्वित्रिपूर्वान्निष्कात् लुग्वास्यात् द्विनिष्कं द्विनैष्किकं त्रिनैष्कं त्रिनैष्कि
कं बहुच्चपूर्वाच्चेतिवक्तव्यं बहुनिष्कं बहुनैष्किकं बिस्ताच्च द्वित्रिपूर्वाद्विस्तादार्हीयस्य लुक्वा द्वि
बिस्तं द्विबैस्तिकमित्यादि विंशतिखात्कः अध्यर्धपूर्वात्द्विगोरित्येव अध्यर्धविंशतिकीनं द्विविंश-
तिकीनं खार्याईकन् अध्यर्धखारिकं द्विखारिकं केवलायाश्चेतिवक्तव्यं खारिकं पणपादमाषश
ताद्यत् अध्यर्धपण्यं द्विपण्यं अध्यर्धपाद्यं द्विपाद्यं इहपादःपदितिन यस्येतिलोपस्यस्थानिवद्भावात्
पद्यत्यतदर्थे इत्यपिन प्राण्यं गार्थस्येवतत्रग्रहणात् शाणाद्वा यत्स्यात् पक्षेठञ् तस्यलुक् अध्यर्धशा

ण्यं अध्यर्धशाणं द्वित्रिपूर्वादण्च शाणादित्येवञ्चाद्यत् तेनत्रैरूप्यं परिमाणांतस्यासंज्ञाशाणयोरिति पर्युदासादादिवृद्धिरेव द्वैशाणं द्विशाणं द्विशाण्यं इह्ठञादयस्त्रयोदशप्रत्ययाः प्रकृतास्तेषांसमर्थवि॰ भक्तयोर्थाश्चाकांक्षितास्त इदानीं मुच्यंते तेनक्रीतं ठञ् गोपुच्छेनक्रीतंगौपुच्छिकं साप्ततिकं प्रास्थि कं ठक् नैष्किकं इद्गोण्याः गोण्याइत्स्यात् तद्धितलुकि लुकोऽपवादः पंचभिर्गोणीभिः क्रीतः पटः पंचगोणिः तस्यनिमित्तंसंयोगोत्पातौ संयोगः संबंधः उत्पातः शुभाशुभसूचकं शत्यः शतिकोवा धनपतिसंयोगः शत्यं शतिकं दक्षिणाक्षिस्पंदनं शतस्यनिमित्तमित्यर्थः वातपित्तश्लेष्मभ्यः शम नकोपनयोरुपसंख्यानं वातस्यशमनंकोपनंवावातिकं पैत्तिकं श्लैष्मिकं सन्निपाताच्चेतिवक्तव्यम् सान्निपातिकं गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् गोर्निमित्तंसंयोगउत्पातोवागव्यः द्व्यच् धन्यः यशस्यः स्वर्ग्यः गोद्व्यचःकिं विजयस्यवैजयिकः असंख्येत्यादिकिं पंचानांपंचकंसप्तकं प्रास्थिकं - खारीकं अश्वादि आश्विकं आश्मिकं ब्रह्मवर्चसादुपसंख्यानं ब्रह्मवर्चस्यं पुत्राच्छच चाद्यत् पुत्री यः पुत्र्यः सर्वभूमिपृथिवीभ्यामणञौ सर्वभूमेर्निमित्तंसंयोगउत्पातोवासार्वभौमः पार्थिवः लोक सर्वलोकाठ्ठञ् तत्रविदितइत्यर्थे लौकिकः अनुशतिकादित्वादुभयपदवृद्धिः सार्वलौकिकः तस्य॰ वापः उप्यतेऽस्मिन्निति वापः क्षेत्रं प्रस्थस्य वापःप्रास्थिकं द्रौणिकं खारिकं पात्रात्ष्ठन् पात्रिकं पात्रि की क्षेत्रभक्तिः तदस्मिन्वृध्यायलाभशुल्कोपदादीयते वृद्धिर्दीयत इत्यादि क्रमेणप्रत्येकंसंबंधादे कवचनं पंचास्मिन्वृद्धिरायो लाभः शुल्कमुपदावादीयतेपंचकः शतिकः शत्यः साहस्रः उत्तमर्णेनमूला

तिरिक्तं ग्राह्यं वृद्धिः ग्रामादिषु स्वामिग्राह्यो भाग आयः विक्रेत्रा मूलादधिकं ग्राह्यो लाभः रक्षानिर्वेशो-
राजभागः शुल्कं उत्कोच उपदा चतुर्थ्यर्थ उपसंख्यानं पंचास्मै वृद्ध्यादि दीयते पंचको देवदत्तः सम-
मब्राह्मणे दानमिति वदधिकरणविवक्षा वा पूरणार्धाद्ठन् यथाक्रमं ठक्टिठनोरपवादः द्वितीयो वृद्ध्या
दिरस्मिन्दीयते द्वितीयिकः तृतीयिकः अर्धिकः अर्धशब्दो रूपकस्यार्धे रूढः भागाद्यच्च चाट्ठन् भा
गशब्दो रूपकस्यार्द्धे भागोऽस्मिन्दीयते भाग्यं भागिकं शतं भाग्या भागिका विंशतिः तद्धरतिवहत्या
वहति वंशाद्भारात् दिभ्यः वंशादिभ्यः परो यो भारशब्दस्तदंतं यत्प्रातिपदिकं तत्प्रकृतिकाद्द्वितीयांतादित्य
र्थः वंशभारं वहति आवहति वा वांशभारिकः ऐक्षुभारिकः भाराद्वंशादिभ्य इत्यस्य व्याख्यांतरं भारभू
तेभ्यो वंशादिभ्य इति भारभूतान्वंशान् हरति वहति आवहति वा वांशिकः ऐक्षुकः वस्नद्रव्याभ्यां ठन्
कनौ यथासंख्यं स्तः वस्नं हरति वहति आवहति वा वास्निकः द्रव्यकः संभवत्यवहरति पचति प्र-
स्थं संभवति प्रास्थिकः कटाहः प्रस्थं स्वस्मिन् समावेशयतीत्यर्थः प्रास्थिकी ब्राह्मणी प्रस्थमुपसंहरति
पचति वेत्यर्थः तत्पचतीति द्रोणादण्च द्रोणं पचति द्रौणी द्रौणिकी आढकाचितपात्रात्खोऽन्यत
रस्यां पक्षे ठञ् आढकं संभवत्यवहरति पचति वा आढकीना आढकिकी आचितीना आचितिकी पात्री
णा पात्रिकी द्विगोष्ठंश्च आढकाचितपात्रादित्येव आढकाद्यंतात् द्विगोः संभवत्यादिष्वर्थेषु ठन् खो वा-
स्तः पक्षे ठञ् तस्याध्यर्धेति लुक् बिल्वान्ङीष् द्व्याढकिकी द्व्याढकीना द्विगोरिति ङीप् द्व्याढकी द्व्या
चितिकी द्व्याचितीना अपरिमाणेति ङीप्निषेधः द्व्याचिता द्विपात्रिकी द्विपात्रीणा द्विपात्री कुलि

जाद्दुकुरवोच॰ कुलिजांतात्द्विगोः संभवत्यादिष्वर्थेषु लुक् खोवास्तः चात्ष्ठंश्च लुगभावेठञ्श्रवणं
द्विकुलिजी द्विकुलिजीना द्विकुलिजिकी द्वैकुलिजिकी सोऽस्यांशवस्नभृतयः अंशोभागः वस्नंमूल्यं-
भृतिर्वेतनं पंच अंशो वस्नोभृतिर्वा अस्यपंचकः तदस्यपरिमाणं प्रस्थंपरिमाणमस्य प्रास्थिकोराशिः सं
ख्यायाः संज्ञासंघसूत्राध्ययनेषु पूर्वसूत्रमनुवर्त्तते तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः यद्वाद्व्येकयोरिति
वत्संख्यामात्रवृत्तेः परिमाणिनिप्रत्ययः पंचैवपंचकाः शकुनयः पंचपरिमाणमेषामितिवा॰ संघेपंच-
कः सूत्रेअष्टकंपाणिनीयं संघशब्दस्य प्राणिसमूहेरूढत्वात्सूत्रं पृथगुपात्तं पंचकमध्ययनं स्तोमेड
विधिः पंचदशमंत्राः परिमाणमस्य पंचदशः स्तोमः सप्तदशः एकविंशः सोमयागेषुच्छंदोगैः क्रियमा-
णापृष्ट्यादिसंज्ञकास्तुतिः स्तोमः पंक्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिश
तं एतेरूढिशब्दानिपात्यंते पंचद्दशतौवर्गौवा पंचपरिमाणमस्य पंचद्वर्गः दशत्पक्षेपंचकः दशकःत्रिं
शच्चत्वारिंशतोर्ब्राह्मणेसंज्ञायांडण् त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानांत्रैंशानि चत्वारिंशानि
तदर्हति लब्धुंयोग्योभवतीत्यर्थेद्वितीयांताट्ठञादयः स्युः श्वेतच्छत्रमर्हतिश्वैतच्छत्रिकः छेदादिभ्यो
नित्यं नित्यमभीक्ष्ण्यं च्छेदंनित्यमर्हति च्छैदिकोवेतसः छिन्नप्ररूढत्वात् विरागविरंगंच विरागं
नित्यमर्हतिवैरंगिकः शीर्षच्छेदाद्यच्च शिरश्छेदंनित्यमर्हतिशीर्षच्छेद्यः शैर्षच्छेदिकः यद्वकोः सन्नि
योगेनशिरसः शीर्षभावोनिपात्यते दंडादिभ्यः एभ्योयत्स्यात् दंडमर्हतिदंड्यः अर्घ्यः वध्यः पात्रा
द्घश्च चाद्यत्तदर्हतीत्यर्थे पात्रियः पात्र्यः कडंगरदक्षिणाच्छच चाद्यत् कडंकरोंतीतिविग्रहे अ

तएव निपातनात् खच्च कडंगरं माषमुद्गादिकाष्ठतदर्हतिकडंकरीयोगोः कडंगर्यः दक्षिणामर्हति दक्षिणी-
यः दक्षिण्यः स्थालीबिलात् स्थालीबिलमर्हतिस्थालीबिलीयास्तंडुलाः स्थालीबिल्याः पाकयोग्याइ
त्यर्थः यज्ञर्त्विग्भ्यांघखञौ यथासंख्यंस्तः यज्ञंऋत्विजंचार्हतियज्ञियः आर्त्विजिनोयजमानः यज्ञर्त्वि
ग्भ्यांतत्कर्मार्हतीत्युपसंख्यानं यज्ञियोदेशः आर्त्विजीनः ऋत्विक् इत्याहीयाणांठगादीनांद्वादशा-
नांपूर्णोऽवधिः अतःपरंठञेन पारायणतुरायणचांद्रायणंवर्तयति पारायणंवर्तयतिपारायणिकश्छ
त्रः तुरायणंयज्ञविशेषः तंवर्तयतितौरायणिकोयजमानः चांद्रायणिकः संशयमापन्नः ठञ् संशयवि
षयीभूतोर्थःसांशयिकः योजनंगच्छति योजनिकः क्रोशशतयोजनशतयोरुपसंख्यानं क्रोशशतंगच्छ
ति क्रोशशतिकः योजनशतिकः ततोऽभिगमनमर्हतीतिवक्तव्यं क्रोशशतादभिगमनमर्हतिक्रोशशतिको
भिक्षुः योजनशतिकआचार्यः पथःष्कन् षोङीषर्थः पंथानंगच्छति पथिकःपथिकी पंथोणनित्यं पंथा
नंनित्यंगच्छतिपांथः पांथा उत्तरपथेनाहृतंचठञ् उत्तरपथेनाहृतमौत्तरपथिकं उत्तरपथेनगच्छत्यौत्तरप
थिकः आहृतप्रकरणेवारिजंगलस्थलकांतारपूर्वादुपसंख्यानं वारिपथिकंजांगलपथिकंइत्यादि का
लात् व्युष्टादिभ्योऽणित्यतः प्रागधिकारोयं तेननिर्वृत्तं ठञ् अन्हानिर्वृत्तंआन्हिकं तमधीष्टोभृतोभू
तोभावी अधिष्टः सत्कृत्यव्यापारितः भृतोवेतनेनक्रीतः भूतः स्वसत्तयाव्याप्तः कालः भावीतादृशएवाना
गतः मासमधीष्टोमासिकोऽध्यापकः मासंभृतोमासिकः कर्मकरः मासंभूतोमासिकोव्याधिः मासंभावी
मासिकउत्सवः मासाद्वयसियत्खञौ मासंभूतोमास्यः मासीनः द्विगोर्यप् मासाद्वयसीत्यनुवर्तते द्वौ

मासो भूतो द्विमास्यः षण्मासाण्यच्च वयसीत्येव यबप्यनुवर्तते चाठुञ् षाण्मास्यः षण्मास्यः षा
ण्मासिकः अवयसिठंश्च चाण्यत् षण्मासिको ऽधिः षाण्मास्यः समायाःखः समामधिष्टो भृ-
तोभूतो भावीवासमीनः द्विगोर्वा समायाः खइत्येव तेनपरिजय्ये त्यतः प्राग्निर्वृत्तादिषुपंचस्वर्थेषुप्र
त्ययाः द्विसमीनः द्वैसमीकः रात्र्यहः संवत्सराच्चद्विगोरित्येव द्विरात्रीणः द्वैरात्रिकः द्व्यहीनः द्वैय-
न्हिकः समासांतविधेरनित्यत्वान्नटच् द्विसंवत्सरीणः संख्यायाः संवत्सरसंख्यस्यच संख्याया
उत्तरपदस्य वृद्धिः स्यात् ञिदादौ द्विसांवत्सरिकः द्वेषष्टी भृतो द्विषाष्टिकः परिमाणांतस्येत्येवसि-
द्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थं तेनद्वैसमिकइत्यादावुत्तरपदवृद्धिर्न व
र्षाह्लुक्च वर्षशब्दांताद्विगोर्लुक्खौवास्तः पक्षेठञ् तस्य लुक् त्रीणिरूपाणि द्विवर्षीणो व्याधिः
द्विवर्षः वर्षस्याभविष्यति· उत्तरपदस्य वृद्धिः स्यात् द्विवार्षिकः भविष्यतितु द्वैवर्षिकः अधीष्ट-
भृतयोरभविष्यति इतिप्रतिषेधोन गम्यतेहितत्र भविष्यतानतु तद्धितार्थः द्वेवर्षे अधीष्टोभृतोवा
कर्मकरिष्यतीति द्विवार्षिकोमनुष्यः परिमाणांतस्यासंज्ञाशाणयोः परिमाणांतस्यांगस्य संख्या
या यदुत्तरपदं तस्याचामादेरचोवृद्धिर्ञिदादौ द्वौकुडवौ प्रयोजनमस्य द्विकौडविकः द्वाभ्यांसुवर्णा-
भ्यां क्रीतं द्विसौवर्णिकं द्विनैष्किकं असंज्ञेतिकिं पंचकलापाः परिमाणमस्य पांचकलापिकं तद्धितां
तासंज्ञा द्वैशाणं कुलिजशब्दमपिकेचित् पठंति द्वैकुलिजिकः चित्तवतिनित्यं वर्षशब्दांतात् द्विगोः
प्रत्ययस्य नित्यं लुक् स्याच्चेतने प्रत्ययार्थे द्विवर्षो दारकः षष्टिकाः षष्टिरात्रेणपच्यंते बहुवचनमतं

त्रं षष्ठिको धान्यविशेषः तृतीयायां तात्कन् रात्रशब्दलोपश्च निपात्यते तेन परिजय्य लभ्य कार्यसुकरं
मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः मासेन लभ्यं कार्यं सुकरं वा मासिकं तदस्य ब्रह्मचर्यं द्विती
यांतात्कालवाचिनो ऽस्येत्यर्थे प्रत्ययः अत्यंतसंयोगे द्वितीया मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी
आर्धमासिकः यद्वा प्रथमांतादस्येत्यर्थे प्रत्ययः मासो ऽस्येति मासिकं ब्रह्मचर्यं महानाम्न्यादिभ्यः ष
ष्ठ्यंतेभ्य उपसंख्यानं महानाम्न्यो नाम विदामघवन्नित्याद्या ऋचस्तासां ब्रह्मचर्यमस्य माहानाम्नि
कः हरदत्तस्तु भस्याढ इति पुंवद्भावान्महानामिक इत्याह चतुर्मासाण्ण्यो यज्ञे तत्र भवे चतुर्षु मासे
षु भवंति चातुर्मास्यानि यज्ञाः अण् संज्ञायां चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी आषाढी तस्य
च दक्षिणा यज्ञाख्येभ्यः द्वादशाहस्य दक्षिणा द्वादशाह्निकी आख्याग्रहणादकालादपि आग्निष्टोमि
की वाजपेयिकी तत्र च दीयते कार्यं भववत् प्रावृषि दीयते कार्यं वा प्रावृषेण्यं शारदं इति कालाधि
कारस्य पूर्णो ऽवधिः व्युष्टादिभ्यो ऽण् व्युष्टे दीयते कार्यं वा वैयुष्टं व्युष्टं तीर्थं संग्राम प्रवास इत्यादि
तेन यथाकथाचहस्ताभ्यां णयतौ यथाकथाचेत्यव्ययसंघातात्तृतीयांतात्थस्तशब्दाच्च यथासंख्यं
णयतौ स्तः अर्थाभ्यां तु यथासंख्यं नेष्यते यथाकथाच दीयते कार्यं वा याथाकथाचं अनादरेण देयं का
र्यं वेत्यर्थः हस्तेन दीयते कार्यं वा हस्त्यं संपादिनि तेनेत्येव कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकं मुखं
कर्णालंकाराभ्यामवश्यं शोभत इत्यर्थः कर्मवेषाद्यत् कर्मणा संपादि कर्मण्यं शौर्यं वेषेण संपादी वे
ष्यो नटः वेषः कृत्रिम आकारः तस्मै प्रभवति संतापादिभ्यः संतापाय प्रभवति सांतापिकः शत्रुः सां

ग्रामिकः योगाद्यच्च चाठञ् योगाय प्रभवति योग्यः यौगिकः कर्मणउकञ् कर्मणे प्रभवति कार्मुकं स
मयस्तदस्य प्राप्तं समयः प्राप्तोऽस्य सामयिकं ऋतोरण् ऋतुः प्राप्तोऽस्य आर्त्तवं कालाद्यत् कालः प्रा
प्तोऽस्य काल्यंशीतं प्रकृष्टेठञ् कालादित्येव तदस्येति च प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरं प्रयो
जनं तदस्येत्येवइंद्रमहः प्रयोजनमस्य ऐंद्रमाहिकं प्रयोजनं फलं कारणं च विशाखाषाढादण्मंथदंड
योः आभ्यामण्स्यात्प्रयोजनमित्यर्थे क्रमान्मंथदंडयोरर्थयोः विशाखा प्रयोजनमस्य वैशाखो मंथः
आषाढो दंडः चूडादिभ्यउपसंख्यानं चूडा चौडं श्रद्धा श्राद्धं अनुप्रवचनादिभ्यश्छः अनुप्रवचनं प्र
योजनमस्य अनुप्रवचनीयं समापनात्सपूर्वपदात् व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमा
पनीयः ऐकागारिकट्चौरे एकमसहायमगारं प्रयोजनमस्य सुमुषिषोः सऐकागारिकश्चौरः आकालि
कडाद्यंतवचने समानकालावाद्यंतौ यस्येत्याकालिकः समानकालस्याकालआदेशः आशुविनाशी
त्यर्थः पूर्वदिवसे मध्यान्हादावुत्पद्य दिनांतरे तत्रैव नश्वर इति वा आकालाट्ठंश्च आकालिका विद्युत्
इति ठञः पूर्णोऽवधि तेन तुल्यं क्रिया चेद्वतिः ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते क्रिया चेत्किं-
गुणतुल्ये मा भूत् पुत्रेण तुल्यः स्थूलः तत्र तस्येव वतिः मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः चैत्र-
स्येव चैत्रवत् मैत्रस्य गावः तदर्हं विधिमर्हतीति विधिवत्पूज्यते क्रियाग्रहणं मंडूकप्लुत्यानुवर्तते तेनेह न राजानमर्ह-
तिच्छत्रं तस्य भावस्त्वतलौ प्रकृतिजन्यबोधे प्रकारो भावः गोर्भावः गोत्वं गोता त्वांतं क्लीबं तलंतं
स्त्रियां आच्त्वात् ब्राह्मणस्त्वइत्यतः प्राक्त्वतलावधिक्रियेते अपवादैः सहसमावेशार्थं गुणव-

चनादिभ्यः कर्मणिविधानार्थश्चेदं चकारोनञ्स्नञ्भ्यामपि समावेशार्थः स्त्रियाभावः स्त्रैणं-
स्त्रीत्वं स्त्रीता पौंस्नं पुंस्त्वं पुंस्ता ननञ्पूर्वात्तत्पुरुषादचतुरसंगत लवण वटयुध कतरस लसेभ्यः
इतः परं येभावप्रत्ययास्तेनञ्तत्पुरुषान्नस्युश्चतुरादीन्वर्जयित्वा अपतित्वं अपटुत्वं नञ्पूर्वात्किं
बार्हस्पत्यं तत्पुरुषात्किं नास्यपटवः संतीत्यपटुस्तस्यभावः आपटवं अचतुरेतिकिं आचतुर्यं आ
संगत्यं आलवण्यं आवट्यं आयुध्यं आकत्यं आरस्यं आलस्यं पृथ्वादिभ्यइमनिज्वा वावचनम
णादिसमावेशार्थं रऋतोहलादेर्लघोः इष्ठमेयःस्र टेः टेर्लोपः स्यादिष्ठेमेयःस्र पृथोर्भावः प्रथिमा
पार्थवं म्रदिमा मार्दवं वर्णदृढादिभ्यःष्यञ्च चादिमनिच् शौक्ल्यं शुक्लिमा दार्ढ्यं पृथुमृदुभृशकृ
शदृढपरिवृढानामेवरत्वं द्रढिमा षोडीवर्थः औचिती याथाकामी गुणवचनब्राह्मणादिभ्यः कर्म
णिच ष्यञ् चाद्भावे जडस्यकर्मभावोवाजाड्यं मौढ्यं ब्राह्मण्यं अर्हतोनुम्च अर्हतोभावः कर्मवा-
आर्हंत्यं आर्हंतीब्राह्मणादिराकृतिगणः यथातथायथापुरयोः पर्यायेण नञ्पूर्वयोरेतयोः पूर्वो
त्तरपदयोः पर्यायेणादेरचोवृद्धिर्ञिदादौ अयथातथाभावः आयथातथ्यं आयाथातथ्यं आयथा
पुर्यंआयाथापुर्यंआपादपरिसमाप्तेर्भावकर्माधिकारः चतुर्वर्णादीनांस्वार्थेउपसंख्यानं चत्वारोवर्णाश्चातुर्व
र्ण्यं चातुराश्रम्यं त्रैस्वर्यं षाड्गुण्यं सैन्यं सान्निध्यं सामीप्यं औपम्यं त्रैलोक्यमित्यादि सर्ववेदाः सर्ववे
दास्तानधीते सर्ववेदः सर्वादेरिति लुक् सएव सार्ववेद्यः चतुर्वेदस्योभयपदवृद्धिश्च चतुरोवेदानधी
तेचतुर्वेदः सएवचातुर्वैद्यः चतुर्विद्यस्येति पाठांतरं चतुर्विद्यएवचातुर्वैद्यः स्तेनाद्यन्नलोपश्च नेतिसंघा

तद्ग्रहणं स्तेनचौर्येपचाद्यच् स्तेनस्य भावः कर्म वा स्तेयं स्तेनादिति योगं विभज्य स्तैन्यमितिष्यंतमपि केचि
दिच्छंति सख्युर्यः सख्युर्भावः कर्म वा सख्यं दूतवणिग्भ्यां च दूतस्य भावः कर्म वा दूत्यं वणिज्यमिति का
शिका माधवस्तु वणिज्याशब्दः स्वभावात् स्त्रीलिंगः तस्मात् भाव एव चात्र प्रत्ययो न तु कर्मणी त्याह
भाष्ये तु दूतवणिग्भ्यां चेति नास्त्येव ब्राह्मणादित्वाद्वाणिज्यमपि कपिज्ञात्योर्ढक् कापेयं ज्ञातेयं पत्यं
तपुरोहितादिभ्यो यक् सैनापत्यं पौरोहित्यं राजासे राजन शब्दो असमासे यकं लभत इत्यर्थः राज्ञो-
भावः कर्म वा राज्यं समासे तु ब्राह्मणादित्वात् ष्यञ् आधिराज्यं प्राणभृज्जाति वयोवचनोद्गात्रादि
भ्योऽण् प्राणभृज्जाति आश्वं औष्ट्रं वयोवचनं कौमारं कैशोरं औन्नेत्रं औद्गात्रं सौष्टवं दौष्टवं हायनां
तयुवादिभ्योऽण् द्वैहायनं त्रैहायनं यौवनं स्थाविरं श्रोत्रियस्य यलोपश्च कुशलचपलनिपुणपिशु
नकुतूहलक्षेत्रज्ञाः युवादिषु ब्राह्मणादिषु च पठ्यंते कौशलं कौशल्यमित्यादि इगंताच्च लघुपूर्वात् शु
चेर्भावः कर्म वा शौचं मौनं कथं काव्यं कविशब्दस्य ब्राह्मणादित्वात् ष्यञ् योपधाद्गुरूपोत्तमाद्वुञ् राम
णीयकं आभिधानीयकं सहायाद्वा साहाय्यं साहायकं द्वंद्वमनोज्ञादिभ्यश्च शैष्योपाध्यायिकं मानोज्ञकं
गोत्रचरणात् श्लाघात्याकार तदवेतेषु अत्याकारोऽधिक्षेपः तदवेतस्तु गोत्रचरणयोर्भावकर्मणी प्राप्तः
अवगतवान्वा गार्गिकया श्लाघते गार्ग्यत्वेन विकत्थत इत्यर्थः गार्गिकयात्याकुरुते गार्गिकामन्ववेतः काठ
केन श्लाघते होत्राभ्यश्छः होत्राशब्दः स्त्रीलिंग ऋत्विग्वाची बहुवचनाद्विशेषग्रहणं अच्छावाकस्य भा
वः कर्म वा अच्छावाकीयं मैत्रावरुणीयं ब्रह्मणस्त्वः होत्रावाचिनो ब्रह्मन् शब्दात्त्वः स्याच्छस्यापवादः

ब्रह्मत्वंनेतिवाच्येत्ववचनंतल्लोबाधनार्थं ब्राह्मणपर्यायाब्रह्मन्शब्दात्तुत्वतल्लौब्रह्मत्वं ब्रह्मता इतिन
अस्नयोरधिकारः समासः धान्यानांभवनेक्षेत्रेखञ् भवंत्यस्मिन्निति भवनं मुद्गानांभवनंक्षेत्रंमौ
द्गीनंव्रीहिशाल्योर्ढक् व्रैहेयं शालेयं यवयवकषष्टिकाद्यत् यवानांभवनंक्षेत्रं यव्यं यवक्यं षष्टिक्यं वि
भाषातिलमाषोमाभंगाणुभ्यः यद्वास्यात् पक्षेखञ् तिल्यं तैलीनं माष्यं माषीणंउम्यं औमीनं भंग्यं
भांगीनं अणव्यं आणवीनं सर्वचर्मणःकृतःखखञौ असामर्थ्येऽपिनिपातनात्समासः सर्वचर्मणा
कृतः सर्वचर्मीणः सार्वचर्मीणः यथामुखसंमुखस्यदर्शनःखः मुखस्यसदृशं यथामुखंप्रतिबिंबं
निपातनात्साहृश्येऽव्ययीभावः समंसर्वंमुखंसंमुखं समशब्दस्यांतलोपोनिपात्यते यथामुखंदर्श
नःयथामुखीनः सर्वस्यमुखस्यदर्शनः संमुखीनः तत्सर्वादेःपथ्यंगकर्मपत्रपात्रंव्याप्नोतिसर्वादेःपूथ्याद्यंतात् द्वितीयातात्खः
स्यात्सर्वपथान्व्याप्नोति सर्वपथीनः सर्वांगीणः सर्वकर्मीणः सर्वपत्रीणः सर्वपात्रीणः आप्रपदंप्रा
प्नोति पदस्याग्रंप्रपदं तन्मर्यादीकृत्याप्रपदं आप्रपदीनः पटः अनुपदसर्वान्नायानयंबद्धाभक्षय
तिनेयेषु अनुरायामेसादृश्येवा अनुपदंबद्धाअनुपदीनाउपानत् सर्वान्नानिभक्षयतिसर्वान्नीनो-
भिक्षुः आयानयः स्थलविशेषस्तन्नेयः आयानयीनःशारः परोवरपरंपरपुत्रपौत्रमनुभवति परां
श्चावरांश्चानुभवतिपरोवरीणः अवरस्योत्वंनिपात्यते परांश्चपरतरांश्चानुभवतिपरंपरीणः प्रकृतेःप
रंपरभावोनिपात्यते पुत्रपौत्राननुभवति पुत्रपौत्रीणः परंपराशब्दस्त्वव्युत्पन्नंशब्दांतरं स्त्रीलिंगंतस्मा
दवेस्वार्थेष्यञिपारंपर्यं कथंपारोवर्यविदिति असाधुरेवायं खप्रत्ययसंनियोगेनैवपरोवरेतिनिपात्त

नात् अवारपारात्यंतानुकामंगामी अवारपारंगामी अवारपारीणः अवारीणः पारीणः पारावा
रीणः अत्यंतगामीअत्यंतीनः भृशंगंतेत्यर्थः अनुकामंगामी अनुकामीनः यथेष्टंगंता समांसमांवि
जायते यलोपोऽवशिष्टविभक्तेरलुक्च पूर्वपदे निपात्यते समांसमीनागौः समांसमीनासायैवप्रतिव
र्षंप्रसूयते खप्रत्ययानुत्पत्तौयलोपोवावक्तव्यः समांसमांविजायते समायांसमायांवा अद्यश्वी
नावष्टब्धे अद्यश्वोवाविजायतेअद्यश्वीनावडवाआसन्नप्रसवेत्यर्थः केचित्तुविजायत इतिनानुव
र्तयंति अद्यश्वीनंमरणं आसन्नमित्यर्थः आगवीनः आङ्पूर्वात्गोः कर्मकरेखप्रत्ययोनिपात्यते
गोः प्रत्यर्पणपर्यंतंयः कर्मकरोतिसआगवीनः अनुग्वलंगामी अनुगुगोः पश्चात्पर्याप्तंगच्छत्यनुगवी
नोगोपालः अध्वनोयत्खौ अध्वानमलंगच्छतिअध्वन्यः अध्वनीनः येचाभावकर्मणोः आत्माध्वानौ
खइतिप्रकृतिभावः अभ्यमित्राच्छच चाद्यत्खौ अभ्यमित्रीयः अभ्यमित्र्यः अभ्यमित्रीणः अमित्रा
भिमुखंसुष्टुगच्छतीत्यर्थः गोष्ठात्खञ्भूतपूर्वे गोष्ठोभूतपूर्वः गौष्ठीनोदेशः अश्वस्यैकाहगमः एका
हेनगम्यतेइत्येकाहगमः आश्वीनोऽध्वा शालीनकौपीनेअधृष्टाकार्ययोः शालाप्रवेशमर्हतिशाली-
नोऽधृष्टः कूपपतनमर्हतिकौपीनंपापं तत्साधनत्वात्तद्गोप्यत्वाद्वापुरुषलिंगमपि तत्संबंधात्तदाच्छा
दनमपि व्रातेनजीवति व्रातेनशरीरायासेनजीवतिनतुबुद्धिवैभवेन सव्रातीनः साप्तपदीनंसख्यं स
प्तभिः पदैरवाप्यतेसाप्तपदीनंसख्यं हैयंगवीनंसंज्ञायां ह्योगोदोहस्यहियंगुरादेशः विकारार्थेखञ्च
निपात्यते दुह्यतइतिदोहः क्षीरं ह्योगोदोहस्यविकारः हैयंगवीनं नवनीतं तस्यपाकमूलेपील्वादिक

र्णादिभ्यः कुणप् जाहचौ पीलूनां पाकः पीलुकुणः कर्णस्य मूलं कर्णजाहं पक्षात्तिः मूलग्रहणमात्रमनु
वर्त्तते पक्षस्य मूलं पक्षतिः तेन वित्तश्चंचुप्चणपौ यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः तेन चस्य नेत्संज्ञा वि
द्यया वित्तः विद्याचंचुः विद्याचणः विनञ्भ्यां नानाञौ नसह असहार्थे पृथग्भावे वर्त्तमानाभ्यां स्वार्थे प्र
त्ययौ विना नाना वेः शालच्छंकटचौ क्रियाविशिष्टसाधनवाचकात् स्वार्थे विस्तृतं विशालं विशंकटं
संप्रोदश्च कटच् संकटं प्रकटं उत्कटं चाद्विकटं अलाबूतिलोमाभंगाभ्यो रजस्युपसंख्यानं अलाबूनां
रजः अलाबूकटं तिलकटं गोष्ठजादयः स्थानादिषु पशुनामभ्यः गवां स्थानं गोगोष्ठं अश्वगोष्ठं सं
घाते कटच् अवीनां संघातः अविकटः विस्तारे पटच् अविपटः द्वित्वे गोयुगच् द्वावुष्ट्रौ उष्ट्रगोयुगं
षट्त्वे षड्गवच् अश्वषड्गवं स्नेहे तैलच् तिलतैलं सर्षपतैलं भवने क्षेत्रे शाकटशाकिनौ इक्षुशा
कटं इक्षुशाकिनं अवात्कुटारच्च वा कटच् अवाचीनः अवकुटारः अवकटः नते नासिकायाः संज्ञायां
टीटञ्नाटज्भ्रटचः अवादित्येव नतं नमनं नासिकायाः नतं अवटीटं अवनाटं अवभ्रटं तद्योगान्नासिका
अवटीटा पुरुषोऽप्यवटीटः नेर्बिडज्बिरीसचौ निबिडं निबिरीसं इनच्पिटच्चिकचि च नेरित्येव नासि
कायानतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिकचिइत्यादेशौ च कप्रत्ययचिकादेशौ च वक्तव्यौ
चिकिनं चिपिटं चिकं क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी क्लिन्ने चक्षुषी अस्य चिल्लः पिल्लः चुलच् चुल्लः उपाधि-
भ्यां त्यकन्नासन्नारूढयोः संज्ञायामित्यनुवर्तते पर्वतस्यासन्नं स्थलमुपत्यका आरूढं स्थलमधित्यका
कर्मणि घटोऽठच् घटत इति घटः पचाद्यच् कर्मणि घटते कर्मठः पुरुषः तदस्य संजातं तारकादिभ्य इ

तच् तारकाः संजाता अस्य तारकितं नभः आकृतिगणोऽयं प्रमाणे द्वयसज्दघ्नञ्मात्रचः तदस्ये
त्यनुवर्तते ऊरू प्रमाणमस्य ऊरुद्वयसं ऊरुदघ्नम् ऊरुमात्रम् प्रमाणे लः शमः दिष्टिः वितस्तिः द्वि
गोर्नित्यं द्वौ शमौ प्रमाणस्य द्विशमं प्रमाणपरिमाणाभ्यां संख्यायाश्च संशये मात्रज् वक्तव्यः शमम
त्रं प्रस्थमात्रं पंचमात्राः वत्वंतात्स्वार्थे द्वयसज्मात्रचौ तावदेव तावत्द्वयसं तावन्मात्रं पुरुषहस्ति
भ्यामण्च पुरुषः प्रमाणमस्य पौरुषं पुरुषद्वयसं यत्तदेतेभ्यः परिमाणे वतुप् यत्परिमाणमस्य या
वान् तावान् एतावान् किमिदंभ्यां वो घः आभ्यां वतुप् स्यात् वस्य च घः कियान् इयान् किमः संख्या
परिमाणे डतिच चाद्वतुप् तस्य च वस्य घः का संख्या येषां ते कति कियंतः संख्याया अवयवे तयप् पं
चावयवा अस्य पंचतयं द्वित्रिभ्यां तयस्यायज्वा द्वयं द्वितयं त्रयं त्रितयं उभादुदात्तो नित्यं उभशब्दा
त्तयपोऽयच् स्यात्स चाद्युदात्तः उभयं तदस्मिन्नधिकमिति दशांताड्डः एकादश अधिका अस्मि
न्निति एकादशं शतं शतसहस्रयोरेवेष्यते नेह एकादश अधिका अस्यां विंशत्यां प्रकृतिप्रत्ययार्थयोः
समानजातीयत्व एवेष्यते नेह एकादश माषा अधिका अस्मिन्सुवर्णशते शदंतविंशतेश्च डः स्यात्उ
क्तेऽर्थे त्रिंशदधिका अस्मिन् त्रिंशं शतं विंशं संख्याया गुणस्य निमाने मयट् भागस्य मूल्ये वर्त्तमाना
त् प्रथमांतात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात् यवानां द्वौ भागौ निमानमस्य दश्विद्भागस्य द्विमयमु
दश्वि द्यवानां गुणस्येति किं द्वौ व्रीहियवौ निमानमस्यो दश्वितः निमाने किं द्वौ गुणौ क्षीरस्य एकस्तैल
स्य द्विगुणं तैलं पच्यते क्षीरेण तस्य पूरणे डट् एकादशानां पूरण एकादशः नांतादसंख्यादेर्मट् दडोम

डागमः स्यात् पंचानांपूरणः पंचमः नांतात्किं विंशः असंख्यादेः किं एकादशः षट्कतिकतिपयच
तुरां थुक् एषांथुगागमः स्याड्डटि षण्णांपूरणः षष्ठः कतिथः कतिपयशब्दस्यासंख्यात्वेऽतएवज्ञा
पकाडडट् कतिपयथः चतुर्थः चतुरश्छयतावाद्यक्षरलोपश्च तुरीयः तुर्यः बहुपूगगणसंघस्यति
थुक् डटित्येव पूगसंघयोरसंख्यात्वेऽप्यतएवडट् बहुतिथइत्यादि वतोरिथुक् डटित्येव यावति
थः द्वेस्तीयः डटोऽपवादः द्वयोः पूरणः द्वितीयः त्रेः संप्रसारणंच तृतीयः विंशत्यादिभ्यस्तमड-
न्यतरस्यां एभ्योडटस्तमडागमोवा विंशतितमः विंशः एकविंशतितमः एकविंशः नित्यंशतादिमा
सार्द्धमाससंवत्सराच्च शतस्यपूरणः शततमः एकशततमः मासादेरतएवडट् षष्ट्यादेश्चासंख्यादेः
षष्ठितमः संख्यादेस्तुविंशत्यादिभ्य इतिविकल्पएव एकषष्ठः एकषष्ठितमः मतौछः सूक्तसाम्नोः मत्व
र्थेछः स्यात् अच्छावाक्शब्दोस्मिन्नस्तीत्यच्छावाकीयंसूक्तम् वारवंतीयंसाम अध्यायानुवाकयो
र्लुक् मत्वर्थस्यछस्य अतएवज्ञापकात्तत्रछः विधानसामर्थ्याच्चविकल्पेनलुक् गर्दभांडः गर्दभां
डीयः विमुक्तादिभ्योऽण् मत्वर्थेऽण् स्यादध्यायानुवाकयोः विमुक्तशब्दोऽस्मिन्नस्तीतिवैमुक्तः
दैवासुरः गोषदादिभ्योवुन् गोषदकः इषेत्वकः तत्रकुशलः पथः वुन्स्यात् पथिकुशलः पथकः
आकर्षादिभ्यः कन् आकर्षेकुशलआकर्षकः आकषादितिरेफरहितोमुख्यः पाठः आकषोनिकषः
धनहिरण्यात्कामे कामइच्छा धनेकामोधनकोदेवदत्तस्य हिरण्यकः स्वांगेभ्यः प्रसिते केशेषुप्रसि
तः केशकः तद्रचनायांतत्परइत्यर्थः उदरात्ठगाद्यूने अविजिगीषौठक्स्यात् कनोऽपवादः बुभुक्षया

त्यंतंपीडितउदरे प्रसित औदरिकः आद्यूनेकिं उदरकः उदरपरिमार्जनादौ प्रसक्तइत्यर्थः सस्येनपरिजा
तः कन्स्वर्यतेनतुठक् सस्यशब्दोगुणवाची नतुधान्यवाची शस्येनेतिपाठांतरं सस्येनगुणेनपरिजातः
संबध्दःसस्यकः साधुः अंशंहारी हारीत्यावश्यकेणिनिः अतएवतद्योगेषष्टीन. अंशकोदायादः तंत्रा
दचिरापल्हते तंत्रकःपटः प्रत्यग्रइत्यर्थः ब्राह्मणकोष्णिकेसंज्ञायां आयुधजीविनोब्राह्मणायस्मिन्दे
शेसब्राह्मणकः अल्पमन्नंयस्यां साउष्णिकायवागूः अन्नशब्दस्यउष्णादेशोनिपात्यते शीतोष्णा-
भ्यांकारिणि शीतंकरोतिशीतकः अलसः उष्णंकरोतिउष्णकः शीघ्रकारी अधिकं अध्यारूढश-
ब्दात्कन् स्वार्थेउत्तरपदलोपश्च अनुकाभिकाभीकःकमिता अन्वभिभ्यांकन् अभेः पाक्षिकोदीर्घ-
श्च अनुकामयतेऽनुकः अभिकामयतेभिकः अभीकः पार्श्वेनान्विच्छति अनृजुरुपायः पार्श्वंतेनान्वि
च्छतिपार्श्वकः अयःशूलदंडाजिनाभ्यांठक्ठञौ तीक्ष्णउपायोयःशूलं तेनान्विच्छतिआयःशूलिकः
साहसिकः दंडाजिनंदंभः तेनान्विच्छतिदंडाजिनिकः तावतिथंग्रहणमितिलुग्वा कन्स्यात्पूरण
प्रत्ययस्यचवालुक् द्वितीयकंद्विकंवाग्रहणंदेवदत्तस्य द्वितीयेनरूपेणग्रहणमित्यर्थः तावतिथेन
गृण्हातीतिकन्वक्तव्यः नित्यंचलुक् षष्टेनरूपेणगृण्हातीतिषट्कोदेवदत्तः पंचकः सएषांग्राम-
णीः देवदत्तोमुख्योयेषांतेदेवदत्तकाः त्वत्काः मत्काः शृंखलमस्यबंधनंकरभे शृंखलकः करभः उत्क
उन्मनाः उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थेकन् उत्कउत्कंठितः कालप्रयोजनाद्रोगे कालवाचकात् प्र
योजनवाचकाच्चकन्स्याद्रोगे द्वितीयेऽहनिभवोद्वितीयकोज्वरः प्रयोजनंकारणं रोगस्यफलंवा-

विषपुष्पैर्जनितो विषपुष्पकः उष्णंकार्यमस्यउष्णकः रोगेकिं द्वितीयोदिवसोस्य तदस्मिन्नन्नंप्रायेसंज्ञा
यां प्रथमांतात्सप्तम्यर्थेकन् यत्प्रथमांतमन्नंचेत्प्रायविषयकंतत् गुडापूपाः प्रायेणान्नमस्यांगुडापूपि
कापौर्णमासी वटकेभ्यइनिर्वाच्यः वटकिनी कुल्माषादञ् कुल्माषाः प्रायेणान्नमस्यां कौल्मा
षी श्रोत्रियंश्छंदोऽधीते श्रोत्रियः वेत्यनुवृत्तेश्छांदसः श्राद्धमनेनभुक्तमिनिठनौ श्राद्धी श्रा
द्धिकः पूर्वादिनिः पूर्वंकृतमनेनपूर्वी सपूर्वाच्च कृतपूर्वी इष्टादिभ्यश्च इष्टमनेन इष्टी अधीती छं
दसिपरिपंथिपरिपरिणौपर्यवस्थातरि लोकेतुपरिपंथिशब्दोनन्यायः अनुपद्यन्वेष्टा अनुपदमन्वे-
ष्टानुपदीगवां साक्षाद्द्रष्टरिसंज्ञायां साक्षाद्द्रष्टासाक्षी क्षेत्रियच्परक्षेत्रेचिकित्स्यः क्षेत्रियोव्याधिः श
रीरांतरेचिकित्स्यः अप्रतीकार्यइत्यर्थः इंद्रियमिंद्रलिंगमिंद्रदृष्टमिंद्रसृष्टमिंद्रजुष्टमिंद्रदत्तमि
तिवा इंद्रआत्मातस्यलिंगं करणेनकर्त्तुरनुमानात् इतिकरणंप्रकारार्थं इंद्रेणदुर्जयमिंद्रियं तदस्या
स्त्यस्मिन्निति मतुप् गावोऽस्याऽस्मिन्वासंति गोमान् भूमनिंदाप्रकाशंसासु नित्ययोगेऽतिशायने
संबंधेस्ति विवक्षायांभवंतिमतुबादयः रसादिभ्यश्च मतुप् रसवान् रूपवान् अन्यमत्वर्थीयनिवृत्त्य
र्थंवचनं रसरूपवर्णगंधस्पर्शशब्दस्नेहगुणात् एकाचः स्ववान् गुणग्रहणंरसादीनांविशेषणं तसौम-
त्वर्थे तांतसांतौभसंज्ञौस्तोमत्वर्थेप्रत्ययेपरे वसोःसंप्रसारणं विदुष्मान् गुणवचनेभ्योमतुपोलुगि
ष्टः शुक्लोगुणोऽस्यास्तीतिशुक्लः पटः कृष्णः मादुपधायाश्चमतोर्वोऽयवादिभ्यः मवर्णावर्णांतान्म-
वर्णान्वर्णोपधाच्चयवादिवर्ज्यात्परस्यमतोर्मस्यवःस्यात् किंवान् ज्ञानवान् विद्यावान् लक्ष्मीवान् यश

स्वान् भास्वान् यवादेस्तु यवमान् भूमिमान् झयः झयंतान्मतोर्मस्य वः स्यात् अपदांतत्वान्न जश्त्वं विद्यु-
त्वान् संज्ञायां मतोर्मस्य वः स्यात् अहीवती मुनीवती शरादित्वाद्दीर्घः आसंदीवदष्ठीवच्चक्रीवत्कक्षीव
द्रुमण्वच्चर्मण्वती एते षट् संज्ञायां निपात्यंते आसन्नशब्दस्यासंदीभावः आसंदीवान्ग्रामः अन्यत्रा
सन्नवान् अस्थिशब्दस्य अष्ठीभावः अस्थिमानन्यत्र चक्रशब्दस्य चक्रीभावः चक्रीवान्नाम राजा चक्रवा
नन्यत्र कक्ष्यायाः संप्रसारणं च कक्षीवान्नाम ऋषिः कक्ष्यावानन्यत्र लवणशब्दस्य रुमण्भावः रुम
ण्वान्नाम पर्वतः लवणवानन्यत्र चर्मणो नलोपाभावो णत्वं च चर्मण्वती नाम नदी चर्मवत्यन्यत्र उदन्वा
नुदधौ च उदकशब्दस्योदन्भावो मतौ उदधौ संज्ञायां च उदन्वान् समुद्रः ऋषिश्च राजन्वान्सौराज्ये
राजती भूः राजवत्यन्यत्र प्राणिस्थादातो ऽलजन्यतरस्यां चूडालः चूडावान् प्राणिस्थात्किं शिखा
वान् दीपः आतः किं हस्तवान् प्राण्यंगादेव नेह मेधावान् प्रत्ययस्वरेणैवांतोदात्तत्वे सिद्धे चूडालो ऽसीत्या
दौ स्वरितो वानुदात्ते ऽपदादाविति स्वरितबाधनार्थश्चकारः सिध्मादिभ्यश्च लज्वा सिध्मलः सिध्मवा-
न् अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं न तु प्रत्ययविकल्पार्थं तेनाकारांतेभ्य इनिठनौ न वातदंतबलल
लाटानामूङ् च वातूलः वत्सांसाभ्यां कामबले आभ्यां लज्वा यथासंख्यं कामवति बलवति चार्थे व
त्सलः अंसलः फेनादिलच्च चादिलच् अन्यतरस्यांग्रहणं मतुप् समुच्चयार्थमनुवर्तते फेनिलः फेनलः
फेनवान् लोमादिपामादिपिच्छादिभ्यः शनेलचः लोमादिभ्यः शः लोमशः लोमवान् रोमशः रोमवा
न् पामादिभ्यो नः पामनः अंगात्कल्याणे अंगना लक्ष्म्या अच्च लक्ष्मणः विष्वगित्युत्तरपदलोपश्चा

कृतसंधेः विषुणः पिच्छादिभ्यइलच्च पिच्छिलः पिच्छवान् उरसिलः उरस्वान् प्रज्ञाश्रद्धार्चाभ्यो-
णः प्राज्ञोव्याकरणे प्राज्ञश्राद्धः आर्चः वृत्तेश्च वार्त्तः तपः सहस्राभ्यांविनिनी विनीन्योरिकारोनकार
परित्राणार्थः तपस्वी सहस्री असंतत्वाददंतत्वाच्चासिद्धे पुनर्वचनमणाबाधामाभूदिति सहस्रात्तुठनोऽ
पिबाधनार्थं अणच्च योगविभागउत्तरार्थः तापसः साहस्रः ज्योत्स्नादिभ्यउपसंख्यानं ज्योत्स्नः ता
मिस्रः सिकताशर्कराभ्यश्च सैकतोघटः शार्करः देशेलुबिलचोच चादण्मतुप्च सिकताः संत्य-
स्मिन्देशेसिकतः सिकतिलः सैकतः सिकतावान् एवंशर्करेत्यादि दंतउन्नतउरच् उन्नतादंताः संत्यस्यदं
तुरः उषशुषिमुष्कमधोरः ऊषरः शुषिरः मुष्कोऽडः मुष्करः मधुमाधुर्ये मधुरः रप्रकरणेखमुखकुं
जेभ्यउपसंख्यानं खरः मुखरः कुंजोहस्तिहनुः कुंजरः नगपांसुपांडुभ्यश्च नगरं पांसुरः पांडुरः
पांडुरशब्दस्त्वव्युत्पन्नएव कच्छ्वाह्रस्वत्वंच कच्छुरः द्युद्रुभ्यांमः द्युमः द्रुमः केशाद्वोऽन्यतरस्यां
प्रकृतेनान्यतरस्यांग्रहणेनमतुपिसिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थं केशवः केशी केशिकः के
शवान् अन्येभ्योऽपिदृश्यते मणिवोनागविशेषः हिरण्यवोनिधिविशेषः अर्णसोलोपश्च अर्ण
वः गांड्यजगात्संज्ञायां ह्रस्वदीर्घयोर्यथातंत्रेणनिर्देशः गांडिवं गांडीवमर्जुनस्यधनुः अजगवंपि
नाकः कांडांडादीरन्नीरचौ कांडीरः आंडीरः रजःकृष्यासुतिपरिषदोवलच् रजस्वलास्त्रीकृषी
वलः वलइतिदीर्घः आसुतीवलः शौंडिकः परिषद्वलः पर्षदिति पाठांतरं पर्षद्वलः अन्येभ्योपि-
दृश्यते भ्रातृवलः शत्रुवलः वलइत्यत्रसंज्ञायामित्यनुवृत्तेनहदीर्घः दंतसिखात्संज्ञायां दंतावलो

हस्तीशिखावलः केकी ज्योत्स्नातमिस्राशृंगिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः मत्व
र्थेनिपात्यंते ज्योतिषे उपधालोपोनश्चप्रत्ययः तमसउपधाया इत्वं रश्चतमिस्रा स्त्रीत्वमतंत्रं तमिस्रं
शृंगादिनच् शृंगिणः ऊर्जसोवलच् तेनबाधा मा भूदिति विनिरपि उर्जस्वी उर्जस्वलः ऊर्जो ऽसुगाग
म इतिवृत्तिस्तुचिंत्या उर्जस्वतीरितिवदसुन्यंते नैवोपपत्तेः गोशब्दान्मिनिः गोमी मलशब्दादिनच्
मलिनः ईमसश्च मलीमसः अतइनिठनौ दंडी दंडिकः व्रीह्यादिभ्यश्च व्रीही व्रीहिकः नच
सर्वेभ्योव्रीह्यादिभ्य इनिठनाविष्येतेकिंतु शिखामालासंज्ञादिभ्यइनिः यवखदादिभ्यइकः अन्ये
भ्यउभयं तुंदादिभ्यइलच्च चादिनिठनौमतुप्च तुंदिलः तुंदी तुंदिकः तुंदवान् उदरपिचंड य
वव्रीहि स्वांगाद्विवृद्धौ कर्णिलः एकगोपूर्वाट्ठञ् नित्यं एकशतमस्यास्ति एकशतिकः एकसहस्रि
कः गौशतिकः गौसहस्रिकः शतसहस्रांताच्चनिष्कात् निष्कात् परौयौ शतसहस्रशब्दौ तदंतात्प्रा
तिपदिकात् ठञ् स्यान्मत्वर्थे नैष्कशतिकः नैष्कसहस्रिकः रूपादाहतप्रशंसयोर्यप् आहतंरूपम
स्यास्तीतिरूप्यः कार्षापणः प्रशस्तं रूपमस्यास्तीतिरूप्योगौः आहतेतिकिं रूपवान् अन्येभ्योपिदृश्य
ते हिम्याः पर्वताः गुण्याः ब्राह्मणाः अस्मायामेधास्रजोविनिः यशस्वी यशस्वान् मायावी माया-
वान् व्रीह्यादिपाठादिनिठनौ मायी मायिकः क्विन्नं तत्वात्कुत्वं स्रग्वी आमयस्योपसंख्यानं दीर्घ
श्च आमयावी शृंगवृंदाभ्यामारकन् शृंगारकः वृंदारकः फलबर्हाभ्यामिनच् फलिनः बर्हिणः हृ
दयाच्चालुरन्यतरस्यां हृदयालुः हृदयी हृदयिकः हृदयवान् शीतोष्णतृप्रेभ्यस्तदसहने शीतं

नसहतेशीतालुः उष्णालुः स्फायितंचीतिरक् तृप्रः पुरोडाशः तन्नसहतेतृप्रालुः त्रिप्रंदुः स्वमितिमा-
धवः हिमाच्चेलुः हिमंनसहतेहिमालुः बलादूलः बलंनसहतेबलूलः वातात्समूहेच वातंनसहते
वातस्यसमूहोवावातुलः तप्पर्वमरुद्भ्यां पर्वतः मरुत्तः ऊर्णायायुस् सित्वात्पदत्वं ऊर्णायुः अत्रच्छं
दसीतिकेचिदनुवर्तयंति युक्तंचैतत् अन्यथात्वहंशुभमोरित्यत्रैवोर्णाग्रहणंकुर्यात् वाचोग्मिनिः वा
ग्मी आलजाटचौबहुभाषिणि कुत्सितइतिवक्तव्यं कुत्सितंबहुभाषतेवाचालोवाचाटः यस्तुसम्य
ग्बहुवदतितत्रवाग्मीत्येव स्वामिन्नैश्वर्ये ऐश्वर्यवाचकात् स्वशब्दान्मत्वर्थे आमिनिच् स्वामी अर्शआ
दिभ्योऽच् अर्शांस्यस्यविद्यंते अर्शसः आकृतिगणोऽयम् द्वंद्वोपतापगर्ह्यात्प्राणिस्थादिनिः द्वंद्वः क
टकवलयिनी शंखनूपुरिणी उपतापोरोगः कुष्ठीकिलासी गर्ह्यंनिंद्यं ककुदावर्ती काकतालुकी प्राणिस्था
त्किं पुष्पफलवान्घटः प्राण्यंगान्न पाणिपादवती अतइत्येव चित्रकललाटिकावती सिद्धेप्रत्यये पु-
नर्वचनंठनादिबाधनार्थं वातातीसराभ्यांकुक्च चादिनिः वातकी अतिसारकी रोगएवायमिष्यते
नेह वातवतीगुहा पिशाचाच्च पिशाचकी वयसिपूरणात् पूरणप्रत्ययांतान्मत्वर्थेइनिः स्याद्वयसिद्यो-
त्ये मासः संवत्सरोवा पंचमोऽस्यास्तिपंचमीउष्ट्रः ठन्बाधनार्थमिदं वयसिकिंपंचमवान्ग्रामः सुखा-
दिभ्यश्च इनिर्मत्वर्थे सुखी दुःखी मालाक्षेपे माली धर्मशीलवर्णांताच्च धर्मांयंतादिनिर्मत्वर्थे ब्रा
ह्मणधर्मी ब्राह्मणशीली ब्राह्मणवर्णी हस्ताज्जातौ हस्तीजातौकिं हस्तवान्पुरुषः वर्णात्ब्रह्मचारि
णि वर्णी पुष्करादिभ्योदेशे पुष्करिणी पद्मिनी देशेकिं पुष्करवान्हस्ती बाहूरुपूर्वपदात्बलात्

बाहुबली ऊरुबली सर्वादेश्च सर्वबीजी अर्थाच्चासन्निहिते अर्थिसंन्निहितेतु अर्थवान् तदंता-
च्च धान्यार्थी हिरण्यार्थी बलादिभ्योमतुबन्यतरस्यां बलवान् बली उत्साहवान् उत्साही संज्ञायां
मन्माभ्यां मन्नंतान्मांताच्चेनिर्मत्वर्थे प्रथिमिनि दामिनी होमिनी सोमिनी संज्ञायांकिं सोमवान् कंशं
भ्यांबभयुस्तितुतयसः कंशमितिमांतो कमित्युदकसुखयोः शमितिसुखे आभ्यांसप्तप्रत्ययाःस्युः
युस् सोः सकारः पदत्वार्थः कंबः कंभः कंयुः कंतिः कंतुः कंतः कंयः शंबः शंभः शंयुः शंतिः शंतुः शं
तः शंयः अनुस्वारस्यवैकल्पिकः परसवर्णः वकार यकार परस्यानुनासिकौवयौ तुंदिबलिवटेर्भः वृद्धा
नाभिस्तुंदिः मूर्धन्योपधोयमिति माधवः तुंदिभः वलिभः वटिभः पामादित्वात्पक्षेवलिनोपि अहंशु
भयोशुंस् अहमितिमांतमव्ययमहंकारे शुभमितिशुभे अहंयुः अहंकारवान् शुभंयुः शुभान्वितः इ
तिमत्वर्थीयाः समाप्ताः प्राग्दिशोविभक्तिः दिक्शब्देभ्यइत्यतः प्राग्वक्ष्यमाणाः प्रत्ययाविभक्ति
संज्ञाः स्युः अथस्वार्थिकाः प्रत्ययाः समर्थानामिति प्रथमादितिचनिवृत्तं वेत्यनुवर्ततएव किंसर्वना
मबहुभ्योऽव्द्यादिभ्यः किमः सर्वनाम्नोबहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते इदमइश् प्राग्दिशीयेप
रे एतेतौरथोः इदंशब्दस्य एत इत् इत्यादेशौस्तोरेफादौ थकारादौच प्राग्दिशीयेपरे इशोऽपवादः एत-
दोन् योगविभागः कर्तव्यः एतदः एतेतौस्तोरथोः अन् एतदइत्येव अनेकाल्त्वात्सर्वादेशः नलो
पःप्रातिपदिकांतस्य सर्वस्यसोऽन्यतरस्यांदि प्राग्दिशीयेदकारादौ प्रत्ययेपरे सर्वस्य सोवास्यात् पंच
म्यास्तसिल् पंचम्यंतेभ्यः किमादिभ्यस्तसिल्वास्यात् कुतिहोः किमःकुःस्यात्तादौहादौचविभक्तौपरतः

कुतः कस्मात् यतः ततः इतः अतः अमुतः बहुतः द्व्यादेस्तु द्वाभ्यां तसेश्च किंसर्वनाम बहुभ्यः परस्य तसे-
स्तशिलादेशः स्यात् स्वरार्थविभक्त्यर्थंचवचनं पर्यभिभ्यांच आभ्यांतसिल्स्यात् सर्वोभयार्थाभ्यामेव प
रितः सर्वत इत्यर्थः अभितः उभयत इत्यर्थः सप्तम्यास्त्रल् कुत्र यत्र तत्र बहुत्र इदमोहः त्रलोऽपवादः इशा
देशः इह किमोऽत् वाग्रहणमपकृष्यते सप्तम्यंतात्किमोऽद्वास्यात् पक्षेत्रल् क्वाति किमः क्वेत्यादेशः स्या
दति ककुत्र वाह्नचच्छंदसि कुहस्थः कुहजग्मुथुः एतदस्त्रतसोस्त्रतसोचानुदात्तो अन्वादेशविषयेएत
दोऽश् स्यात्सचानुदात्तस्त्रतसोः परतस्तोचानुदात्तौस्तः एतस्मिन्ग्रामेसुखंवसामः अथोत्रा धीमहे अतोन-
गंतास्मः इतराभ्योऽपि दृश्यंते पंचमीसप्तमीतरविभक्त्यंतादपितसिलादयो दृश्यंते दृशिग्रहणाद्भवदादि
योगएवसभवान् ततोभवान् तत्रभवान् तंभवंतं तत्रभवंतं एवंदीर्घायुः देवनांप्रियः आयुष्मान् सर्वैकान्यकिं
यत्तदः कालेदा सप्तम्यंतेभ्यएतेभ्यः कालार्थेभ्यः स्वार्थेदास्यात् सर्वस्मिन्काले सदा सर्वदाएकदा अन्य
दाकदा तदा यदा कालेकिं सर्वत्रदेशे इदमोर्हिल् सप्तम्यंतात्काल इत्येव हस्यापवादः अस्मिन्कालेएतर्हि -
कालेकिं इहदेशे अधुना इदमः सप्तम्यंतात्कालवाचिनः स्वार्थे अधुनाप्रत्ययः स्यात् इश् यस्येतिलोपः
अधुना दानींच इदानीं तदोदाच तदा तदानीं तदोदावचनमनर्थकं विहितत्वात् अनद्यतनेर्हिलन्यतरस्यां
कर्हि कदा यर्हि यदा तर्हि तदा एतस्मिन्काले एतर्हि सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वे द्युरन्ये द्युरन्य
तरे द्युरपरे द्युर धरे द्युरुभये द्युरुत्तरे द्युः एतेनिपात्यंतेस मानस्य सभावोद्यश्चाहनि समानेऽहनिसद्यः
पूर्वपूर्वतरयोः परउदारीचसंवत्सरे पूर्वस्मिन्वत्सरेपरुत् पूर्वतरेवत्सरेपरारि इदमईश् समस् सण् प्रत्यय-

श्चसंवत्सरे अस्मिन् संवत्सरे ऐषमः परस्मादे द्यव्यहनि परस्मिन्नहनिपरेद्यवि इदमोऽश्‌द्यश्च अस्मिन्नहनि
अद्य पूर्वादिभ्यो ऽष्टभ्यो ऽहन्येद्युस् पूर्वस्मिन्नहनि पूर्वेद्युः अन्यास्मिन्नहनि अन्येद्युः उभयोरन्होरुभयेद्युः द्यु
श्चोभयाद्वक्तव्यः उभयद्युः प्रकारवचनेथाल् प्रकारवृत्तिभ्यः किमादिभ्यः स्थाल्स्यात्स्वार्थे तेनप्रकारे-
णतथा इदमस्थमुः थालोऽपवादः एतदोपिवाच्यः अनेनएतेनवाप्रकारेणइत्थं किमश्च केनप्रकारेणक
थं इतिप्राग्दिशीयानांविभक्तिसंज्ञानां पूर्णोऽवधिः दिक्शब्देभ्यः सप्तमीपंचमीप्रथमाभ्यो दिग्दे
शकालेष्वस्तातिः सप्तम्याद्यंतेभ्योदिशिरूढेभ्योदिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिप्रत्ययस्स्यात् पू
र्वाधरावराणामसिपुरधवश्चैषां एभ्यो ऽस्तात्यर्थे असिप्रत्ययः स्यात्तद्योगेचैषांक्रमात्पुर अध् अव्
इत्यादेशाः स्युः अस्तातिच अस्तातौ परे पूर्वादीनांपुरादयः स्युः पूर्वस्यां पूर्वस्याः पूर्वावादिक् पुरः पुरस्ता
त् अधः अधस्तात् अवः विभाषावरस्य अवरस्या स्तातौपरे अव् वास्यात् अवस्तात् अवरस्तात् एवंदेशे
कालेच दिशिरूढेभ्यः किम् ऐंद्र्यांवसति सप्तम्याद्यंतेभ्यः किम् पूर्वंग्रामंगतः दिगादिवृत्तिभ्यः किम् पूर्व-
स्मिन्गुरौवसति अस्तातिचेतिज्ञापकादसिरस्तातिंनबाधते दक्षिणोत्तराभ्यामतसुच् अस्तातेरपवा
दः दक्षिणतः उत्तरतः विभाषापरावराभ्यां परतः अवरतः परस्तात् अवर स्तात् अंचेर्लुक् अंचत्यं
ताद्दिक्शब्दादस्तातेर्लुक् स्यात् लुक्तद्धितलुकि प्राच्यांप्राच्याः प्राचीवादिक् प्राक् उदक् एवंदेशे काले
च उपर्युपरिष्टात् अस्तातेर्विषये ऊर्ध्वशब्दस्य उपादेशः स्यात् रिल् रिष्टातिलौच प्रत्ययौ उपरि उपरिष्टाद्वा
वसति आगतोरमणीयंवा पश्चात् अपरस्य पश्चभावो आतिश्च प्रत्ययो ऽस्तातेर्विषये उत्तराधरदक्षि

णाादातिः उत्तरात् अधरात् दक्षिणात् एनबन्यतरस्यामदूरेपंचम्याः उत्तरादिभ्यएनब्वास्यादवध्य
वधिमतोः सामीप्येपंचम्यंतंविनाउत्तरेण अधरेण दक्षिणेन पक्षेयथास्वंप्रत्ययाः इहकेचिदुत्तरादीननु-
वर्त्यदिक्शब्दमात्रादेनपमाहुः पूर्वेणग्रामं दक्षिणादाच् अस्तातेर्विषये दक्षिणावसति अपंचम्याइत्ये-
व दक्षिणादागतः आहिचदूरे दक्षिणात् दूरे आहिः स्याच्चादाच् दक्षिणाहि दक्षिणा उत्तराच्च उत्तरा
हिउत्तरात् संख्यायाविधार्थेधा क्रियाप्रकारेवर्तमानात्संख्याशब्दात्स्वार्थेधास्यात् चतुर्धा पंचधा अ-
धिकरणविचालेच द्रव्यस्यसंख्यांतरापादनेसंख्यायाधास्यात् एकंराशिंपंचधाकुरु एकाद्धोध्यमुञ्न-
न्यतरस्यां ऐकध्यं एकधा द्वित्र्योश्चधमुञ् आभ्यांधाइत्यस्यधमुञ्वास्यातद्वैधंद्विधात्रैधंत्रिधा ध
मुञंतात्स्वार्थेडदर्शनं पथिद्वैधानि एधाच्च आदेशोऽयं द्वेधा त्रेधा याप्येपाशप् कुत्सितोभिषक्
भिषक्पाशः पूरणाद्भागेतीयादन् द्वितीयोभागोद्वितीयः स्वरेविशेषः तीयादीकक्स्वार्थेवाच्यः द्वै-
तीयीकः द्वितीयः तार्तीयीकः तृतीयः नविद्यायाः द्वितीया तृतीयाविद्येत्येव प्रागेकादशभ्योच्छंद
सि पूरणप्रत्ययांताद्भागेन् चतुर्थः पंचमः षष्ठाष्टमाभ्यांञच चादन् षष्ठोभागः षाष्ठः अष्टमः आ-
ष्टमः मानपश्वंगयोः कन्लुकौच षष्ठाष्टमशब्दाभ्यांक्रमेणकन्लुकौस्तो मानेपश्वंगेचवाच्ये षष्ठको
भागः मानंचेत् अष्टमोभागः पश्वंगंचेत् ञस्यानोवालुक् चकाराद्यथाप्राप्तं षष्ठः षाष्ठः अष्टमः आष्ट-
मः महाविभाषयासिद्धेलुग्वचनंपूर्वत्रञानोनित्यावित्तिज्ञापयति एकादाकिनिच्चासहाये चात्कन्लु-
कौ एकः एकाकी एककः भूतपूर्वेचरट् आढ्योभूतपूर्वः आढ्यचरः षष्ठ्यारूप्यच षष्ठ्यंतात्भूतपूर्वेऽ

र्थेरूप्यः स्याच्चरट्च कृष्णास्यभूतपूर्वोगौः कृष्णरूप्यः कृष्णचरः तसिलादिषुरूप्यस्यापरिगणना
न्नपुंवत् शकुन्नायाः भूतपूर्वः शकुन्नारूप्यः अतिशायनेतमबिष्ठनौ अतिशयविशिष्टार्थवृत्तेः स्वार्थेए
तौस्तः अयमेषामतिशयेनाढ्य आढ्यतमः लघुतमः लघिष्ठः तिङश्च तिङंतादतिशयेद्योत्येतमप्स्या-
त् तरप्तमपौघः एतौघसंज्ञौस्तः किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे किमएदंतात्तिङो ऽव्ययाच्च योघ-
स्तदंतादामुः स्यान्नतुद्रव्यप्रकर्षे किंतमां प्राण्हेतमां पचतितमां उच्चैस्तमां द्रव्यप्रकर्षेतुउच्चैस्तमस्तरुः द्वि
वचनविभज्योपपदेतरबीयसुनौ द्वयोरेकस्यातिशयेविभक्तव्येचोपपदेसुप्तिङंतादेतौस्तः पूर्वयोरप
वादः अयमनयोरतिशयेनलघुः लघुतरोलघीयान् उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः अजादीगुण
वचनादेव इष्ठन्नीयसुनौगुणवचनादेवस्तः नेह पाचकतरः पाचकतमः तुश्छंदसि तृन्तृजंतादिष्ठन्नीयसुनौस्तः
तुरिष्ठेमेयःसु तृशब्दस्यलोपः स्यादेषुपरेषु अतिशयेनकर्ताकरिष्ठः दोहीयसीधेनुः प्रशस्यस्यश्रः अ
स्यश्रादेशः स्यादजाद्योः प्रकृत्यैकाच् इष्ठादिष्वेकाच्प्रकृत्याश्रेष्ठः श्रेयान् ज्यच्च प्रशस्यस्यज्यादेशः
स्यादिष्ठेयसोः ज्येष्ठः ज्यादादीयसः आदेशःपरस्यज्यायान् वृद्धस्यच ज्यादेशः स्यादजाद्योः ज्येष्ठःज्या
यान् अंतिकबाढयोर्नेदसाधौ अजाद्योः नेदिष्ठः नेदीयान् साधिष्ठः साधीयान् स्थूलदूरयुवन्हस्व-
क्षिप्रक्षुद्राणां यणादिपरंपूर्वस्यचगुणः एषांयणादिपरंलुप्यते पूर्वस्यचगुणइष्ठादिषु स्थविष्ठः दविष्ठः
यविष्ठः न्हसिष्ठः क्षेपिष्ठः क्षोदिष्ठः एवमीयसुनि न्हस्वक्षिप्रक्षुद्राणांपृथ्व्यादित्वात्भ्रसिमा क्षेपिमा
क्षोदिमा प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृंदारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघि

वृंदाः प्रियादीनांक्रमात्प्रादयः स्युरिष्ठादिषु प्रेष्ठः स्थेष्ठः स्फेष्ठः वरिष्ठः बंहिष्ठः वर्षिष्ठः त्रपिष्ठः द्राघिष्ठः वृं
दिष्ठः एवमीयस् प्रियोरुबहुलगुरुदीर्घाणांपृथ्वादित्वात्प्रेमाइत्यादि बह्वोर्लोपोभूचबहोः बहोः परयोरिमे
यसोर्लोपः स्याद्बहोश्चभूरादेशः आदेःपरस्य भूमा भूयान् इष्ठस्ययिट्च बहोः परस्य इष्ठस्यलोपः स्या
द्यिडागमश्च भूयिष्ठः भूयान् युवाल्पयोः कनन्यतरस्यां एतयोः कनादेशोवास्यादिष्ठेयसोः कनिष्ठः कनीया
न् पक्षेयविष्ठः अल्पिष्ठः इत्यादि विन्मतोर्लुक् विनोमतुपश्चलुगिष्ठेयसोः अतिशयेनस्त्रग्वीस्त्रजिष्ठः स्त्र-
जीयान् अतिशयेनत्वग्वान् त्वचिष्ठः त्वचीयान् प्रशंसायांरूपप् स्रुबंतात्तिङंताच्च प्रशस्तः पटुः पटुरूपः
प्रशस्तंपचतिपचतिरूपं ईषदसमाप्तौ कल्पपूदेश्यदेशीयरः ईषदूनोविद्वान्विद्वत्कल्पः यशस्कल्पं यजु
ष्कल्पं विद्वद्देश्यः विद्वद्देशीयः पचतिकल्पं विभाषा स्रुपो बहुच्पुरस्तात्तु ईषदसमाप्तिविशिष्टेऽर्थे
स्रुबंताद्बहुज्वास्यात् सचप्रागेवनतुपरतः ईषदूनः पटुः बहुपटुः पटुकल्पः स्रुपः किं पचतिकल्पं प्रका
रवचनेजातीयर् प्रकारवतित्यर्थं थाल्तुप्रकारमात्रे पटुः प्रकारः पटुजातीयः प्रागिवात्कः इवेप्रतिकृ-
ताविव्यतः प्राक्काधिकारः अव्ययसर्वनाम्नामकच्प्राक्टेः तिङश्चेत्यनुवर्तते कस्यचदः कांताव्यय
स्य दकारोंऽता देशः स्यादकच्च अज्ञाते कस्यायमश्वो अश्वकः उच्चकैः नीचकैः सर्वके विश्वके ओंकारस
कार भकारादौस्रुपिसर्वनाम्नष्टेः प्रागकच् युवकयोः आवकयोः युष्मकास्र अस्मकास्र युष्मकाभिः अ-
स्मकाभिः ओंकारेत्यादिकिं त्वयका मयका अकच्प्रकरणेतूष्णीमः काम्वक्तव्यः मित्वादंत्यादचः परः तूष्णी
कामास्ते शीलेकोमलोपश्च तूष्णींशील स्तूष्णीकः पचतकि जल्पतकि धकित् हिरकुत् कुत्सिते कु-

त्सितोऽश्वोऽश्वकः संज्ञायांकन् कुत्सितेकन्स्यात्तदंतेनचेत्संज्ञागम्यते शूद्रकः राधकः स्वरार्थव॰
चनं अनुकंपायां पुत्रकः अनुकंपितः पुत्रइत्यर्थः नीतौचतद्युक्तात् साम दानादिरूपाया नीतिस्त॰
स्यांगम्यमानायां अनुकंपयायुक्तात् प्रत्ययः स्यात् हंततेधानकाः गुडकाः एहिकि अरधकि पूर्वेणानुकं
प्यमानात्प्रत्ययः अनेनतुपरंपरासंबंधेऽप्रीतिविशेषः बह्वचोमनुष्यनाम्नष्ठज्वा पूर्वसूत्रद्वयविषये घ
निलचौच तत्रैव ठाजादावूर्ध्वंद्वितीयादचः अस्मिन्प्रकरणेयष्ठोऽजादिप्रत्ययस्तस्मिन्परे प्रकृतेर्द्वि
तीयादचऊर्ध्वंसर्वंलुप्यते अनुकंपितोदेवदत्तोदेविकः देवियः देविलः देवदत्तकः अनुकंपितोवायुदत्तो
वायुकः ठग्रहणमुकोद्वितीयत्वेकविधानार्थं पितृकः चतुर्थादचऊर्ध्वस्यलोपोवाच्यः अनुकंपितो
बृहस्पतिदत्तोबृहस्पतिकः अनजादौविभाषालोपोवक्तव्यः देवदत्तकः देवकः लोपः पूर्वपदस्यच द
त्तिकः दत्तियः दत्तिलः दत्तकः विनापिप्रत्ययंपूर्वोत्तरपदयोर्लोपोवाच्यः देवदत्तः देवः दत्तः सत्यभामा भा
मासत्या उवर्णाल्लइलस्यच भानुदत्तः भानुलः ऋवर्णादपि सवित्रियः सवित्रिलः चतुर्थादनजादौचलो
पः पूर्वपदस्यच अप्रत्ययेतथैवेष्टउवर्णाल्लइलस्यच प्राचामुपोदेरडज्वुचौच उपशब्दपूर्वात्प्रातिपदिकाद्व
पूर्वविषये अडच्वुच्एतौस्तः चाद्यथाप्राप्तं प्राचांग्रहणंपूजार्थं अनुकंपितः उपेंद्रदत्तः उपडः उपकः उपियः
उपिलः उपिकः उपेंद्रदत्तकः षड्रूपाणिजातिनाम्नःकन् मनुष्यनाम्नइत्येव जातिशब्दोयो मनुष्यनामधे
यं तस्मात् कननुकंपायांनीतौच सिंहकः शरभकः द्वितीयंसंध्यक्षरंचेत्तदादेर्लोपोवक्तव्यः कहोडः कहि
कः एकाक्षरपूर्वपदानामुत्तरपदलोपोवाच्यः वागाशीर्दत्तः वाचिकः कथंषडंगुलिदत्तः षडिकइतिषषष्ठा-

जादिवचनात्सिद्धं शेवलस्रुपरि विशालवरुणार्यमादीनांतृतीयात् एषांमनुष्यनाम्नांठाजादौपरेतृतीया
दचऊर्ध्वस्यलोपःस्यात्पूर्वस्यापवादः अनुकंपितः शेवलदत्तः शेवलिकः स्रुपरिकः विशालिकः वरुणिकः
अर्यमिकः अजिनांतस्योत्तरपदलोपश्च अजिनांतान्मनुष्यनाम्नोऽनुकंपायांकन्तस्यचोत्तरपदलोपः
अनुकिंपितोव्याघ्राजिनोव्याघ्रकः सिंहकः अल्पे अल्पंतैलंतैलकं ह्रस्वे ह्रस्वोवृक्षोवृक्षकः संज्ञायांकन्
ह्रस्वहेतुकायासंज्ञातस्यांगम्यमानायांकन् पूर्वस्यापवादः वंशकः वेणुकः कुटीशमीशुंडाभ्योरः ह्र-
स्वाकुटीकुटीरः शमीरः शुंडारः कुत्वाडुपच्च ह्रस्वाकुतूः कुतुपः कुतूः कृत्तेः स्नेहपात्रेसैवाल्पाकुतुपःपुमा
न् कासू गोणीभ्यांष्टरच्च आयुधविशेषः कासूः ह्रस्वाकासूः कासूतरी गोणीतरी वत्सोक्षाश्वर्षभेभ्य
श्चतनुत्वे वत्सतरः द्वितीयंवयः प्राप्तः उक्षतरः अश्वतरः ऋषभतरः प्रवृत्तिनिमित्ततनुत्वएवायं किंयत्त
दोर्निर्धारणेद्वयोरेकस्यडतरच् अनयोः कतरोवैष्णवः यतरः ततरः महाविभाषया कः यः सः वाब-
हूनांजातिपरिप्रश्नेडतमच् बहूनां मध्येनिर्धारणेडतमज्वास्यात् जातिपरिप्रश्न इतिप्रत्याख्यातमाकरे क
तमोभवतांकठः यतमः ततमः वाग्रहणमकजर्थं यकः सकः महाविभाषया यः सः किमोऽस्मिन्विष
येडतरजपि कतरः एकाच्चप्राचां डतरच् डतमच्चस्यात् अनयोरेकतरोमैत्रः एषामेकतमः अवक्षेपणे
कन् व्याकरणकेनगर्वितः येनेतरः कुत्स्यते तद्धिहोदाहरणं स्वतःकुत्सितंतुकुत्सितेइत्यस्य इतिप्रागिवी
यानां पूर्णोऽवधिः इवेप्रतिकृतौ कन्स्यात् अश्वइवप्रतिकृतिः अश्वकः प्रतिकृतौकिं गौरिवगवयः
संज्ञायांच इवार्थेकन्स्यात्समुदायश्चेत्संज्ञा अप्रतिकृत्यर्थआरंभः अश्वसदृशस्यसंज्ञा अश्वकः उष्ट्रकः

लुम्मनुष्ये संज्ञायांविहितस्यकनोलुप्स्यान्मनुष्येवाच्येचंचातृणमयः पुमान् चंचेवमनुष्यश्चंचा वर्धिका जीविकार्थेचापण्ये जीविकार्थं यदविक्रियमाणंतस्मिन्वाच्येकनोलुप्स्यात् वासुदेवः शिवः स्कंदः देवलकानां जीविकार्थासुदेवप्रतिकृतिष्विदं आपण्येकिं हस्तिकान्विक्रीणीते देवपथादिभ्यश्च कनोलुप्स्यात् देवपथः हंसपथः आकृतिगणोऽयं वस्तेर्ढञ् इवेत्यनुवर्तते प्रतिकृताविर्तिनिवृत्तं वस्तिरिवबास्तेयं वास्तेयी शीलायाढः शीलाया इति योगविभागात् ढयपीत्येके शिलेवशिलेयं शैलेयं शाखादिभ्योयः शाखेवशाख्यः मुख्यः जघन्यः अग्र्यः शरण्यः द्रव्यंचभव्ये द्रव्यमयंब्राह्मणः कुशाग्राच्छः कुशाग्रमिवकुशाग्रीयाबुद्धिः समासाच्चतद्विषयात् इवार्थविषयात्समासाच्छः स्यात् काकतालीयोदेवदत्तवधः इह काकतालसमागम सदृशश्चोरसमागम इति समासार्थः तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः अजाकृपाणीयः अतर्कितोपनत इतिफलितोर्थः शर्करादिभ्योऽण् शर्करेवशार्करः अंगुल्यादिभ्यष्ठक् अंगुलीव आंगुलिकः भरुजेवभारुजिकः एकशालायाष्ठजन्यतरस्यां एकशालाशब्दादिवार्थे ठज्वापक्षेठक् एकशालेव एकशालिकः ऐकशालिकः कर्कलोहितादीकक् कर्कः शुक्लोऽश्वः सएवकार्कीकः लौहितीकः स्फाटीकः पूगाञ्ञ्योग्रामणीपूर्वात् इवार्थोनिवृत्तः नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगास्तद्वाचकात्स्वार्थेञ्यः स्यात् लौहितध्वज्यः व्रातच्फञोरस्त्रियां व्रातेकापोतपाक्यः च्फञ् कौंजायन्यः ब्राध्यायन्यः आयुधजीविसंघाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात् वाहीकेषु ये आयुधजीविसंघास्तद्वाचकात् स्वार्थेञ्यड् क्षौद्रक्यः मालव्यः टित्वान्ङीप् क्षौद्रकी मालवी आयुधेतिकिं मल्लाः संघेतिकिं सम्राट् वाही

केषु किं शबराः अब्राह्मणेति किं गोपालकाः शालंकायनाः ब्राह्मणेतद्विशेषग्रहणं राजन्येस्वरूपग्रहणं वृका
ट्टेण्यण् आयुधजीविसंघवाचकात् स्वार्थे वार्केण्यः आयुधे किं जातिशब्दान्माभूत् दामन्यादित्रिगर्तषष्ठा
च्छः दामन्यादिभ्यस्त्रि गर्तषष्ठेभ्यश्च आयुधजीविसंघवाचिभ्यः स्वार्थे छः स्यात् त्रिगर्तः षष्ठो वर्गो येषां
ते त्रिगर्त्तषष्ठाः आहुस्त्रिगर्तषष्ठांस्तु कौंडोपरथदांडकी क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथजानकिः दाम
नीयः दामनीयौ दामनयः औलपिः औलपीयः त्रिगर्तः कौंडोपरथीयः दांडकीयः पर्श्वादियौधेयादिभ्यो
ऽणञौ आयुधजीविसंघवाचिभ्य एभ्यः क्रमादणञौस्तः स्वार्थे पार्शवः पार्शवौ पार्शवः यौधेयः यौधेयौ
यौधेयाः अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमवदणो यञ् अभिजिदादिभ्योऽणं
तेभ्यः स्वार्थे ञ्यः स्यात् अभिजितोऽपत्यामाभिजित्यः वैदभृत्यः शालावत्यः शैखावत्यः शामीवत्यः
और्णावत्यः श्रौमवत्यः ञ्यादयस्तद्राजाः पूगाञ्ञ इत्यारभ्योक्ता एतत्संज्ञाः स्युः तेनास्त्रियां बहुषु
लुक् लोहितध्वजाः कपोतपाकाः कौंजायनाः ब्राध्नायना इत्यादि पादशतस्य संख्यादेर्वीप्सायां वुन्लो
पश्च लोपवचनमनैमित्तिकत्वार्थं अतो न स्थानिवत् पादः पत् तद्धितार्थेति समासे कृते प्रत्ययः वुन्नंतं स्त्रि
यामेव द्वौद्वौ पादौ ददाति द्विपदिकां द्विशतिकां पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् द्विमोदकिकां दं
डव्यवसर्गयोश्च वुन् स्यात् अवीप्सार्थमिदं द्वौ पादौ दंडितः द्विपदिकां द्विशतिकां व्यवसृजति ददा
तीत्यर्थः स्थूलादिभ्यः प्रकारवचने कन् जातीयरोऽपवादः स्थूलप्रकारः स्थूलकः अणुकः चंच
त्बृहतोरुपसंख्यानं चंचत्कः बृहत्कः सुरायाअहौ सुरावर्णोऽहिः सुरकः अनत्यंतगतौ क्तात् छि

न्नकं भिन्नकं नसामिवचने सामिपर्याये उपपदेक्तांतात्कन्नस्यात् सामिकृतं अर्धकृतं अनत्यंतगतौ रिहम
कृत्यैवाभिधानात्पूर्वेण कन्नप्राप्तः इदमेवनिषेधसूत्रमत्यंतस्वार्थिकमपिकनंज्ञापयति बहुतरकं बृहत्या
आच्छादने कन् स्यात् द्वौप्रावारोत्तरासंगौसंमौबृहतिकातथा आच्छादनेकिं बृहतीछंदः अषडक्षाशि
तंगवलंकर्मालंपुरुषाध्युत्तरपदात्खः स्वार्थे अषडक्षीणोमंत्रः द्वाभ्यामेवकृतइत्यर्थः आशिताःगावोय
स्मिन्नित्याशितंगवीनमरण्यं निपातनात्पूर्वस्यमुम् अलंकर्मणेऽलंकर्मीणः अलंपुरुषीणः ईश्वरा
धीनः नित्योऽयंखः उत्तरसूत्रेविभाषाग्रहणात् अन्येऽपिकेचनस्वार्थिकानित्यमिष्यंते तमबादयःप्रा
क्कनः अयादयःप्राग्वुनः आमादयःप्राङ्मयटः बृहतीजात्यंताः समासांताश्चेति विभाषांचेरदिक्
स्त्रियां अदिक्स्त्रीवृत्तेरंचत्यंतात्प्रातिपदिकात्स्वार्थेखःस्यात् प्राक्प्राचीनं प्रत्यक्प्रतीचीनं अर्वाक्
अर्वाचीनं निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः अर्वत्तंअंचतीत्यर्वाक् अर्वाचीनं अदिक्स्त्रियां
किं प्राचीदिक् दिग्ग्रहणंकिं प्राचीनाब्राह्मणी स्त्रीग्रहणंकिं प्राचीनं ग्रामादाम्राः जात्यंताच्छबंधु
नि ब्राह्मणजातीयः बंधुनिकिं ब्राह्मणजातिः शोभना जातेर्व्यंजकंद्रव्यंबंधु स्थानांताद्विभाषास-
स्थानेनेतिचेत् सस्थानेनतुल्येनचेत्स्थानांतमर्थवदित्यर्थः पितृस्थानीयः पितृस्थानः सस्थाने
नकिं गोस्थानं अनुगादिनष्ठक् अनुगदतीत्यनुगादी सएवानुगादिकः णचस्त्रियामञ् णच्प्रत्य
यांतात्स्त्रियामञ्स्यात्स्वार्थे नकर्मव्यतिहारे अत्रऐच्नस्यात् व्यावक्रोशी अणिनुणः इनुणं
तात्स्वार्थेऽण्स्यात् इनण्यनपत्ये सांराविणं विसारिणोमत्स्ये अण्स्यात् वैसारिणः मत्स्येकिं विसा

रीदेवदत्तः संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् अभ्यावृत्तिर्जन्मक्रियाजन्मगणनवृत्तेः संख्या
शब्दात्स्वार्थे कृत्वसुच् स्यात् पंचकृत्वोभुंक्ते संख्यायाः किम् भूरिवारान्भुंक्ते द्वित्रिचतुर्भ्यः सुच् कृत्व
सुचोपवादः द्विर्भुंक्ते त्रिः रात्सस्य चतुः एकस्य सकृच्च सकृदित्यादेशः स्याच्चात्सुच् सकृद्भुंक्ते संयो
गांतस्येति सुचोलोपः नतु हल्ङ्याबिति अभैत्सीदित्रत्य सिच इव सुचोऽपितद्योगात् विभाषाबहो
र्धाविप्रकृष्टकाले अविप्रकृष्टआसन्नः बहुधा बहुकृत्वो वा दिवस्यस्य भुंक्ते आसन्नकाले किं बहुकृ
त्वो मासस्य भुंक्ते तत्प्रकृतवचने मयट् प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनं भावेऽधिकर
णे वा ल्युट् आद्ये प्रकृतमन्नमन्नमयं अपूपमयं यवागूमयी द्वितीये अन्नमयो यज्ञः अपूपमयं पर्व
समूहवच्च बहुषु सामूहिकाः प्रत्यया अतिदिश्यंते चान्मयट् मोदकाः प्रकृताः मोदकिकं मोदकमयं
शाष्कुलिकं शष्कुलीमयं द्वितीयेऽर्थे मोदकिको यज्ञः मोदकमयः अनंतावसथेतिहभेषजाञ्ञ्यः अ
नंत एवानंत्यं आवसथ एवावसथ्यं इतिहेति निपातसमुदायः ऐतिह्यं भेषजमेव भैषज्यं देवतांता
त्तादर्थ्ये यत् तदर्थ एव तादर्थ्यं स्वार्थे ष्यञ् अग्निदेवतायै इदमग्निदेवत्यं पितृदेवत्यं पादार्घाभ्यां
च यत् पादार्थमुदकं पाद्यं अर्घ्यं नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः नूत्नं नूतनं
नवीनं नश्च पुराणे प्रात् पुराणे वर्त्तमानात्प्रशब्दान्नो वक्तव्यः चात्पूर्वोक्ताः प्रणं प्रत्नं प्रतनं प्रीणंच
भागरूपनामभ्यो धेयः भागधेयं रूपधेयं नामधेयं आग्नीध्रसाधारणादञ् आग्नीध्रं साधारणं
स्त्रियां ङीप् आग्नीध्री साधारणी अतिथेर्ञ्यः तादर्थ्य इत्येव अतिथये इदमातिथ्यं देवात्तल् देव

एवदेवता अवेकः अविरेवअविकः यावादिभ्यः कन् यावएवयावकः मणिकः लोहितान्मणौ लोहितएवमणिर्लोहितकः वर्णेचानित्ये लोहितकः कोपेन लोहितात्लिंगबाधनंवा लोहितिका लोहिनिका कोपेन रक्ते लाक्षादिनारक्ते योलोहितशब्दस्तस्मात् कन् स्यात् लिंगबाधनंवेत्येव लोहितिका लोहिनिका शाटी कालाच्च कन् वर्णेचानित्येरक्तेइति द्वयमप्यनुवर्त्तते कालकंमुखंवैलक्ष्येण कालकः पटः कालिकाशाटी विनयादिभ्यष्ठक् विनयएववैनयिकः सामयिकः उपायाद्ध्रस्वत्वंच औपयिकः वाचोव्याहृतार्थायां संदिष्टार्थायांवाचिविद्यमानाद्वाक्शब्दात्स्वार्थेठक् संदेशवाग्वाचिकं स्यात् तद्युक्तात्कर्मणोण् कर्मैवकार्मणं वाचिकंश्रुत्वाक्रियमाणंकर्मेत्यर्थः ओषधेरजातौ स्वार्थेऽण् औषधंपिबति अजातौकिं ओषधयः क्षेत्रेरूढाः प्रज्ञादिभ्यश्च अण् प्रज्ञएवप्राज्ञः प्राज्ञीस्त्री दैवतः बांधवः मृदस्तिकन् मृदेवमृत्तिका सस्नौप्रशंसायां रूपपोऽपवादः प्रशस्ता मृत् मृत्सा मृत्स्ना उत्तरत्रान्यतरस्यां ग्रहणान्नित्योऽयं बह्वल्पार्थाच्छस्कारकादन्यतरस्यां बहूनिददातिबहुशः अल्पानि अल्पशः बह्वल्पार्थान्मंगलामंगलवचनं नेह बहुददात्यनिष्टेषु अल्पमाभ्युदयिकेषु संख्यैकवचनाच्चवीप्सायां द्वौद्वौ ददातिद्विशः माषंमाषंमाषशः प्रस्थशः परिमाणशब्दावृत्त्यावेकार्था एव संख्यैकवचनात्किं घटंघटंददाति वीप्सा यांकिं द्वौददातिकारकादित्येव द्वयोर्द्वयोः स्वामी प्रतियोगे पंचम्यास्तसिः प्रतिनाकर्मप्रवचनीयेन योगेयापंचमीविहितातदंतात्तसिः स्यात् प्रद्युम्नः कृष्णतः प्रति आद्यादिभ्यउपसंख्यानं आदौ आदितः मध्यतः अंततः पृष्ठतः पार्श्वतः आकृतिगणोऽयम् स्वरे

णस्वरतः वर्णतः अपादानेचाहीयरुहोः अपादाने यापंचमी तदंतात्तसिः ग्रामादायाति ग्रामतः अहीय
रुहोः किं स्वर्गाद्धीयते पर्वतादवरोहति अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयाः अकर्त्तरि तृतीयांताद्वा
तसिः अतिक्रम्यग्रहोऽतिग्रहः चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते चारित्रेणान्याननतिक्रम्य वर्त्तत
इत्यर्थः अव्यथनमचलनं वृत्तेननव्यथते वृत्ततोनव्यथते वृत्तेननचलतीत्यर्थः क्षेपे वृत्तेनक्षिप्तः वृत्ततः
क्षिप्तः वृत्तेननिंदित इत्यर्थः अकर्त्तरि किं देवदत्तेनक्षिप्तः हीयमानपापयोगाच्च हीयमानपापयुक्ताद
कर्त्तरि तृतीयांताद्वा तसिः वृत्तेनहीयते वृत्ततोहीयते वृत्तेनपापः वृत्ततःपापः क्षेपस्याविवक्षायामिदम्
क्षेपेतु पूर्वेणसिद्धं अकर्त्तरि किं देवदत्तेनहीयते षष्ठ्याव्याश्रये षष्ठ्यंताद्वा तसिर्नानापक्षसमाश्रये
देवाअर्जुनतोऽभवन् आदित्याः कर्णतोभवन् अर्जुनस्यपक्षे इत्यर्थः व्याश्रये किं वृक्षस्यशाखा रोगा
च्चापनयने रोगवाचिनः षष्ठ्यंताद्वा तसिश्चिकित्सायां प्रवाहिकातः कुरुप्रतीकारमस्याः कुर्वित्यर्थः
अपनयने किं प्रवाहिकायाः प्रकोपनं करोति कृभ्वस्तियोगेसंपद्यकर्त्तरिच्विः अभूततद्भावइतिवाच्यं
विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद्विकारशब्दात्स्वार्थेच्विर्वास्यात्करोत्यादिभिर्योगे अस्यच्वौ
अवर्णस्यईस्यात् च्वौ वेर्लोपः च्व्यंतत्वादव्ययत्वं अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति ब्रह्मीभवति गंगीस्यात्
अव्ययस्यच्वावीत्वंनेति वाच्यं दोषाभूतमहः दिवाभूतारात्रिः एतच्चाव्ययीभावश्चेति सूत्रेभाष्येउक्तं
क्यच्व्योश्च हलःपरस्यापत्ययकारस्यलोपःस्यात् क्ये च्वौ चपरतः गार्गीभवति च्वौच च्वौचपरेपूर्व
स्यदीर्घःस्यात् शुचीभवति पटूस्यात् अव्ययदीर्घत्वंनेति केचित् तन्निर्मूलं स्वस्तिस्यादिति तुमहावि

भाषयाच्वेरभावेसिद्धं स्वस्ती स्यादित्यपिपक्षेस्यादितिचेदस्तु यदिनेष्यतेतर्ह्यनभिधानात् च्विरेव
नोत्पद्यत इत्यस्तु रीङृतः मात्रीकरोति अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च एषां लोपः स्यात् च्वि
श्च अरूकरोति उन्मनीकरोति उच्चक्षूकरोति विचेतीकरोति विरहीकरोति विरजीकरोति विभाषासा
तिकार्त्स्न्ये च्विविषयेसातिर्वास्यात् साकल्ये सात्पदाद्योः सस्यषत्वंनस्यात् दधिसिंचति कृत्स्नंव
स्तुअग्निःसंपद्यते अग्निसाद्भवति अग्नीभवति महाविभाषया वाक्यमपि कार्त्स्न्ये किं एकदेशेनशुक्ली
भवतिपटः अभिविधौसंपदाच संपदाकृभ्वस्तिभिश्चयोगे सातिर्वास्यात् व्याप्तौ पक्षे कृभ्वस्तियोगे
च्विः संपदातु वाक्यमेव अग्निसात् संपद्यते अग्निसात्भवतिशस्त्रं अग्नीभवति जलसात्संपद्यतेज
लीभवति लवणं एकस्याव्यक्तेः सर्वावयवावच्छेदे नान्यथाभावः कार्त्स्न्यं बहूनांव्यक्तीनांकिंचिदवयवा
वच्छेदे नान्यथात्वंत्वभिविधिः तदधीनवचने सातिः स्यात् कृभ्वस्तिभिः संपदाचयोगे राजसात्करो
ति राजसात्संपद्यते राजाधीनमित्यर्थः देयेत्राच तदधीनेदेयेत्रास्यात्सातिश्च कृञादियोगे विप्राधीनं
देयंकरोति विप्रत्राकरोति विप्रत्रासंपद्यते पक्षेविप्रसात्करोति देयेकिं राजसाद्भवतिराष्ट्रं देवमनुष्यपुरु
षपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलं एभ्योद्वितीयांतेभ्यः सप्तम्यंतेभ्यश्चत्रास्यात् देवत्रावंदे रमेवा
बहुलोक्तेरन्यत्रापि बहुत्राजीवतोमनः अव्यक्तानुकरणात् व्यजवरार्द्धादनितौडाच् व्यच् अवरंन्यूनंनतु
ततोन्यूनं अनेकाजिति यावत् तादृशमर्द्धं यस्यतस्मात् डाच्स्यात् कृभ्वस्तिभिर्योगे डाचिविवक्षितेद्वेब
हुलं नित्यमाम्रेडितेडाचि इतिवक्तव्यं डाच्परंयदाम्रेडितंतस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपंस्यात् इतित

कारपकारयोः पकारः पटपटाकरोति अव्यक्तानुकरणात्किं दृषत्करोति व्यजवराद्धौ किं श्रत्करोति अ
वरेतिकिं खरट खरटाकरोति त्रपटत्रपटाकरोति अनेकाच्इत्येवसूत्रयितुं युक्तं एवं हि डाचीतिपरसप्तम्ये
वद्धित्वे स्रुवच्चेत्यवधेयं अनितौ किं पटिति करोति कृञो द्वितीयतृतीयशंबबीजात्कृषौ द्वितीयादिभ्यो
डाच्स्यात् कृञएवयोगे कर्षणेऽर्थे बहुलोक्तेरव्यक्तानुकरणादन्यस्यडाचिनद्वित्वं द्वितीयं तृतीयं कर्षणं करो
ति द्वितीयाकरोति तृतीयाकरोति शंबशब्दः प्रातिलोम्ये अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतिशंबा
करोति बीजेन सह कर्षति बीजाकरोति संख्यायाश्चगुणांतायाः कृञोयोगे कृषौडाच्स्यात् द्विगुणा
करोति क्षेत्रं क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः समयाच्चयापनायां कृषावितिनिवृत्तं कृञो योगे
डाच् समयाकरोति कालं यापयतीत्यर्थः सपत्रनिष्पत्रादतिव्यथने सपत्राकरोति मृगं सपुंखशरप्र
वेशनेनमृगंसपत्रंकरोतीत्यर्थः निष्पत्राकरोति सपुंखस्यशरस्यापरपार्श्वेनिर्गमनान्निष्पत्रं करोतीत्य
र्थः अतिव्यथने किं सपत्रंनिष्पत्रंवा करोतिभूतलं निष्कुलान्निष्कोषणे निष्कुलाकरोति दाडिमं निर्ग
तंकुलं अंतरवयवानांसमूहो यस्मादिति बहुव्रीहेर्डाच् सुखप्रियादानुलोम्ये सुखाकरोति प्रियाकरो
तिगुरुं अनुकूलाचरणेनानंदयतीत्यर्थः दुःखात्प्रातिलोम्ये दुःखाकरोतिस्वामिनं पीडयतीत्यर्थः
शूलात्पाके शूलाकरोतिमांसंशूलेनपचतीत्यर्थः सत्यादशपथे सत्याकरोतिभांडं वणिक् क्रेतव्यमि
तितथ्यंकरोतीत्यर्थः शपथेतुसत्यंकरोतिविप्रः मद्रात्परिवापणे मद्रशब्दोमंगलार्थः मद्राकरोतिकुमा
रं मांगल्यमुंडनेनसंस्करोतीत्यर्थः भद्राच्चेति वक्तव्यं भद्राकरोति अर्थः प्राग्वत् परिवापणेकिं मद्रंकरो

ति भद्रंकरोति इतितद्धितं सर्वस्यद्वे इत्यधिकृत्य नीत्यवीप्सयोः आभीक्ष्ण्येवीप्सायांचद्योत्येपदस्य
द्विर्वचनंस्यात् आभीक्ष्ण्यंतिङंतेष्वव्ययसंज्ञककृदंतेषुच पचतिपचति भुक्त्वाभुक्त्वा वीप्सायांवृक्षंवृ
क्षंसिंचति ग्रामोग्रामोरमणीयः परेर्वर्जने परिपरि वंगेभ्योवृष्टोदेवः वंगान्परिहृत्येत्यर्थः परेर्वर्जने
वावचनं परिवंगेभ्यः उपर्यध्यधसः सामीप्ये उपर्युपरिग्रामं ग्रामस्योपरिष्टात्समीपदेशइत्यर्थः अ
ध्यधिसुखं सुखस्योपरिष्टात्समीपकालेदुःखमित्यर्थः अधोऽधोलोकं लोकस्याधस्तात्समीपदेश
इत्यर्थः वाक्यादेरामंत्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु असूयायां सुंदरसुंदर वृथातेसौंदर्यं
संमतौ देवदेववंद्योऽसि कोपे दुर्विनीतदुर्विनीतइदानींज्ञास्यसि कुत्सने धानुष्कधानुष्कवृथातेधनुः
भर्त्सने चोरचोर घातयिष्यामित्वां एकंबहुव्रीहिवत् द्विरुक्तएकशब्दो बहुव्रीहिवत्स्यात् तेनसुब्लो
पपुंवद्भावौ एकैकमक्षरं इहद्वयोरपिसुपोर्लुकि सतिबहुव्रीहिवद्भावादेवप्रातिपदिकत्वात्समुदायात्सु
प् एकैकयाहुत्या इहपूर्वभागेपुंवद्भावादवग्रहेविशेषः नबहुव्रीहावित्यत्र पुनर्बहुव्रीहिग्रहणंमुख्यब
हुव्रीहिलाभार्थं तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेतिप्राञ्चः वस्तुतस्तुभाष्यमतेमत्याख्यात
मेवतत् सूत्रमतेऽपिबहुव्रीह्यर्थेऽलौकिकविग्रहेनिषेधकं नतुबहुव्रीहावितीहातिदेशशंकैवनास्ति
एकैकस्मैदेहि आबाधेच पीडायांद्योत्यायांद्वेस्तो बहुव्रीहिवच्च गतगतः विरहात्पीड्यमानस्येयमु
क्तिः बहुव्रीहिवद्भावात्सुब्लुक् गतगता इहपुंवद्भावः कर्मधारयवदुत्तरेषु इतउत्तरेषुद्विर्वचनेषुक
र्मधारयवत्कार्यं प्रयोजनंसुब्लोपपुंवद्भावांतोदात्तत्वानि प्रकारेगुणवचनस्य सादृश्येद्योत्येगुणव

चनस्यद्वे स्तस्तच्च कर्मधारयवत् कर्मधारयवदुत्तरेष्वित्यधिकारात् तेन पूर्वभागस्य पुंवद्भावः समासस्ये
त्यंतोदात्तत्वंच पटुपट्वी पटुपटुः पटुसदृशः ईषत्पटुरिति यावत् गुणोपसर्जनद्रव्यवाचिनः केवलगुण
वाचिनश्चेह गृह्यंते शुक्लशुक्लंरूपं शुक्लशुक्लः पटः आनुपूर्व्ये द्वे वाच्ये मूले मूले स्थूलः संभ्रमेणप्रवृ
त्तौ यथेष्टमनेकधाप्रयोगोन्यायसिद्धः सर्पः सर्पः बुध्यस्व २ सर्पसर्प बुध्यस्व ३ क्रियासमभिहारे
च लुनीहि लुनीहि इत्येवायं लुनाति नित्यवीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदं पौनःपुन्येऽपिलो
टासह ससुब्विस्त्य द्योतकतां लब्धुंवा कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलं बहुलग्रहणा
दन्यपरयोर्नसमासवत् इतरशब्दस्यतु नित्यं असमासवद्भावे पूर्वपदस्य रूपः स्वर्वक्तव्यः अन्यो-
न्यंविप्रानमंति अन्योन्यौ अन्योन्यान् अन्योन्येन कृतं अन्योन्यस्मै दत्तमित्यादि अन्योन्येषांपुष्करे
रामृशंत इति माघः एवंपरस्परं अत्र कस्कादित्वाद्विसर्जनीयस्यसः इतरेतरं इतरेणेत्यादि स्त्रीन
पुंसकयोरुत्तरपदस्थायाविभक्तेरामूभावोवावाच्यः अन्योन्यामन्योन्यं परस्परां परस्परं इतरे
तरामितरेतरं वा इमेब्राह्मण्यौ कुलेवाभोजयतः अत्र केचित् आमादेशो द्वितीयाया एव भाष्यादौत
थैवोदाहृतत्वात् तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः अन्येतु उदाहरणस्य
दिङ्मात्रत्वात्सर्वविभक्तीनामामादेशमाहुः दलद्वये टाबभावः क्लीबेचाद्विरहः स्वमोः समासेसो
रलुक्चेति सिद्धं बाहुलकात्त्रयं तथाहि अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि टाप्प्राप्तः नचसर्वना
म्नो वृत्तिमात्रे इति पुंवद्भावः अन्यपरयोरसमासवद्भावात् नचाद्विर्वचनमेववृत्तिः यांयांप्रियः प्रेक्ष

तसासेत्यादावतिप्रसंगात् अन्योन्यमितरेतरं इत्यत्र चाड्डुनरादिष्यङ्ग इत्यद्दुप्राप्तः अन्योन्य संसक्तमह
स्त्रियामं अन्योन्याश्रयः परस्पराक्षि सादृश्यं अदृष्टपरस्परैरित्यादौ सोऽलुकू च मासः सर्वं बाहुलकबलेन स
माधेयं प्रकृतवार्त्तिकं भाष्योदाहरणं स्त्रियामिति सूत्रे अन्योन्यसंश्रयत्वे तदिति भाष्यं चात्र प्रमाणमिति
अकृच्छ्रे प्रियसुखयोरन्यतरस्यां प्रियप्रियेण ददाति प्रियेण वा सुखसुखेन सुखेन वा द्विर्वचने कर्मधा
रयवद्भावात्सुप्लुकि पुनस्तदेव वचनं अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः यथास्वे यथायथं यथा
स्वमिति वीप्सायामव्ययीभावः यो ऽ यमात्मा यच्चात्मीयं तद्यथास्वं तस्मिन्यथाशब्दस्य द्वित्वं क्लीब
त्वं च निपात्यते यथायथं ज्ञाता यथास्वभावमित्यर्थः द्वंद्वं रहस्य मर्यादा वचन व्युत्क्रमण यज्ञपात्रप्रयोगा
भिव्यक्तिषु द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावो ऽ त्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु तत्र रहस्यं
द्वंद्वशब्दस्य वाच्यं इतरे विषयभूताः द्वंद्वं मंत्रयते रहस्यमित्यर्थः मर्यादा स्थित्यनतिक्रमः आचतुरं ह्येमे प
शवो द्वंद्वं मिथुनायंते माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापीति मर्यादार्थः व्युत्क्रमणं पृथगवस्था
नं द्वंद्वं व्युत्क्रांताः द्विवर्गसंबंधेन पृथगवस्थिताः द्वंद्वं यज्ञपात्राणि प्रयुनक्ति द्वंद्वं संकर्षणवासुदेवौ अभि
व्यक्तौ साहचर्येणेत्यर्थः योगविभागादन्यत्रापि द्वंद्वमिष्यते इति द्विरुक्तप्रक्रिया इति भट्टो
जिदीक्षितविरचितायां सिद्धांतकौमुद्यां पूर्वार्द्धं समाप्तं ॥ ७॥ ॥७॥

श्रीगणेशायनमः श्रीत्राईतीचरणैर्गुणैर्येर्महर्षिभिरहर्दिवं तोष्टूयमानोऽप्यगुणोविभुर्विजयतेतरां १ पूर्वार्धेकथितास्तद्धितपंचमाध्यायगोचराः प्रत्ययाअथकथ्यंतेतृतीयाध्यायवर्तिनः तत्रादौदशलकाराःप्रदर्श्यंते लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् एषुपंचमोलकारश्छंदोमात्रगोचरः वर्तमाने लट् वर्तमानेक्रियावृत्तेर्धातोर्लट् स्यात् अटावितौ लः कर्मणिचभावेचाकर्मकेभ्यः लकाराःसकर्मकेभ्यःकर्तरिकर्मणिचस्युरकर्मकेभ्योभावेकर्तरिच लस्य अधिकारोऽयं तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् एतेऽष्टादशलादेशाःस्युः लःपरस्मैपदं लादेशाःपरस्मैपदसंज्ञाःस्युः तङानावात्मनेपदं तङ्प्रत्याहारःशानच्कानचौचैतत्संज्ञाःस्युः पूर्वसंज्ञापवादः अनुदात्तङित आत्मनेपदं अनुदात्तेतउपदेशेयोङित्तदंताच्चधातोर्लस्यस्थानेआत्मनेपदंस्यात् स्वरितञितःकर्त्रभिप्राये क्रियाफले स्वरितेतोञितश्चधातोरात्मनेपदंस्यात्कर्तृगामिनिक्रियाफले शेषात्कर्तरिपरस्मैपदं आत्मनेपदनिमित्तहीनाद्धातोःकर्तरिपरस्मैपदंस्यात् तिङस्त्रीणित्रीणिप्रथममध्यमोत्तमाः तिङउभयोःपदयोस्त्रयस्त्रिकाःक्रमादेतत्संज्ञाःस्युः तान्येकवचनद्विवचनबहुवचनान्येकशः लब्धप्रथमादिसंज्ञानितिङस्त्रीणित्रीणिवचनानिप्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञानिस्युः युष्मद्युपपदेसमानाधिकरणेस्थानिन्यपिमध्यमः तिङ्वाच्यकारकवाचिनियुष्मदिप्रयुज्यमानेअप्रयुज्यमानेचमध्यमःस्यात् प्रहासेचमन्योपपदेमन्यतेरुत्तमएकवच्च मन्यधातुरुपपदंयस्यधातोस्तस्मिन्प्रकृतिभूतेसतिमध्यमःस्यात्परिहासेगम्यमानेमन्यतेस्तूत्तमःस्यात्सचैका

र्थस्यवाचकःस्यात् अस्मद्युत्तमः तथाभूतेअस्मदिउत्तमःस्यात् शेषेप्रथमः मध्यमोत्तमयोरविषयेप्रथ-
मःस्यात् भूसत्तायां कर्तृविवक्षायांभूतिइतिस्थिते तिङ्शित्सार्वधातुकं तिङःशितश्चधात्वधिकारोक्ता
एतत्संज्ञाःस्युः कर्तरिशप् कर्त्रर्थेसार्वधातुकेपरेधातोःशप्स्यात् शपावितौ सार्वधातुकार्धधातुकयोः
अनयोःपरयोरिगंतांगस्यगुणःस्यात् अवादेशःभवति भवतः झोऽन्तः प्रत्ययावयवस्यझस्यांतादेशःस्यात्
अतोगुणे भवंति भवसि भवथः भवथ अतोदीर्घोयञि अतोऽगस्यदीर्घःस्याद्यञादौसार्वधातुकेपरे भ
वामि भवावः भवामः सभवति तौभवतः तेभवंति त्वंभवसि युवांभवथः यूयंभवथ अहंभवामि आवांभ
वावः वयंभवामः एहिमन्येओदनंभोक्ष्यसेभुक्तःसोऽतिथिभिः एतंएतवामन्येओदमंभोक्ष्येथे भोक्ष्यध्वे ओ
दनंभोक्ष्येभोक्ष्यावहेभोक्ष्यामहइत्यादि मन्यसे मन्येथे मन्यध्वे इत्यादिरर्थः युष्मद्युपपदइत्याद्यनुवर्तते
तेनेहन एतुभवान् मन्यतेओदनंभोक्ष्येइति प्रहासेकिं यथार्थकथनेमाभूत् एहिमन्यसेओदनंभोक्ष्यइ
त्यादि परोक्षेलिट् भूतानद्यतनपरोऽक्षार्थवृत्तेर्धातोर्लिट्स्यात् लस्यतिबादयःलिट्च लिडादेशस्ति
ङार्धधातुकसंज्ञएवस्यान्नतुसार्वधातुकसंज्ञः तेनशबादयोन परस्मैपदानांणलतुसुस्थलथुस
णल्वमाः लिटस्तिबादीनांनवानांक्रमात्णलादयोनवस्युः भूअइतिस्थिते भुवोवुग्लुङ्लिटोः
भुवोवुगागमःस्याल्लुङ्लिटोरचि नित्यत्वाद्वुग्गुणवृद्धीबाधते एकाचोद्वेप्रथमस्य अजादेर्द्वितीय
स्येत्यधिकृत्य लिटिधातोरनभ्यासस्य लिटिपरेअनभ्यासधात्ववयवस्यैकाचः प्रथमस्यद्वेस्तःआ
दिभूतादचःपरस्यतुद्वितीयस्य भूव्भूव्अइतिस्थिते पूर्वोऽभ्यासः अत्रयेद्वेविहितेतयोःपूर्वोऽभ्यास

संज्ञस्यात् हलादिःशेषः अभ्यासस्यादिर्हल्शिष्यते अन्येहलोलुप्यंते इतिवलोपः ह्रस्वः अभ्यासस्या
चोह्रस्वःस्यात् भवतेरः भवतेरभ्यासोऽकारस्यअःस्याल्लिटि अभ्यासेचर्च अभ्यासेझलांचरःस्यु
र्जशश्च झशांजशःखयांतुचरस्तत्रापिप्रकृतिजशांप्रकृतिजशः प्रकृतिचरांप्रकृतिचरइतिविवे-
कआंतरतस्यात् असिद्धवदत्राभात् इतऊर्ध्वमापादपरिसमाप्तेराभीयं समानाश्रयेतस्मिन्कर्त
व्येतदसिद्धंस्यात् इतिवुकोऽसिद्धत्वादुवङिप्राप्ते वुग्युटावुवङ्यणोःसिद्धौवक्तव्यो बभूव बभूवतुः ब
भूवुः आर्धधातुकस्येड्वलादेः वलादेरार्धधातुकस्येडागमःस्यात् बभूविथ बभूवथुः बभूव बभू
व बभूविव बभूविम अनद्यतनेलुट् भविष्यत्यनद्यतनेधातोर्लुट्स्यात् स्यतासीलृलुटोः लृइति
लृङ्लृटोर्ग्रहणं धातोःस्यतासीएतौप्रत्ययौस्तोलृलुटोःपरतःशबाद्यपवादः आर्धधातुकंशेषः
तिङ्शिद्भ्योऽन्योधातोरितिविहितःप्रत्ययएतत्संज्ञःस्यात् इट् लुटःप्रथमस्यडारौरसः डारौरस्एते
क्रमात्स्युः डित्वसामर्थ्यादभस्यापिटेर्लोपः पुगंतलघूपधस्यच पुगंतस्यलघूपधस्यचांगस्येकोगु
णःस्यात्सार्वधातुकार्धधातुकयोः येननाव्यवधानंतेनव्यवहितेऽपिवचनप्रामाण्यात् तेनभिनत्ती
त्यादावनेकव्यवहितस्येकोनगुणः भवित्आइ त्यत्रेकोगुणेप्राप्ते दीधीवेवीटां दीधीवेव्योरिटश्चगु
णवृद्धीनस्तः भविता तासस्त्योर्लोपः तासेरस्तेश्चलोपःस्यात्सादौप्रत्ययेपरे रिच रादौप्रत्ययेपरेप्राग्व
त् भवितारौ भवितारः भवितासि भवितास्थः भवितास्थ भवितास्मि भवितास्वः भवितास्मः लृट्शे
षेच भविष्यदर्थाद्धातोर्लृट्स्यात् क्रियार्थायांक्रियायामसत्यांसत्यांच स्यःइट् भविष्यति भविष्यतः

भविष्यंति भविष्यसि भविष्यथः भविष्यथ भविष्यामि भविष्यावः भविष्यामः लोट् च विध्यादिष्वर्थेषु धातोर्लो
ट् स्यात् आशिषि लिङ् लोटौ एरुः लोट् इकारस्य उः स्यात् भवतु तुह्योस्तातङाशिष्यन्यतरस्यां आशि
षि तुह्योस्तातङ् वा स्यात् अनेकाल्त्वात्सर्वादेशः यद्यपि ङित्त्वेत्ययमपवादस्तथाप्यनन्यार्थे ङित्त्वे घन-
ङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थं तया संभवत्प्रयोजन ङकारे तातङि मंथरं प्रव
त्तः परेण बाध्यते इहोत्सर्गापवादयोरपि समबलत्वात् भवतात् लोटो लङ्वत् लोटो लङ इव कार्यं
स्यात् तेन तामादयः सलोपश्च तथाहि तस्थस्थमिपां तांतंताम ङितश्च तु वर्गो क्रमात्तामादयः स्युः
नित्यं ङितः सकारांतस्य ङि उत्तमस्य नित्यं लोपः स्यात् अलोंत्यस्येति सस्य लोपः भवतां भवतु सेर्ह्य
पिच्च लोटः सेर्हिः स्यात्सोऽपिच्च अतो हेः अतः परस्य हेर्लुक् स्यात् भव भवतात् भवतं भवत मेर्निः
लोटो मेर्निः स्यात् आडुत्तमस्य पिच्च लोडुत्तमस्याडागमः स्यात्स पिच्च हिन्योरुत्वं न इकारोच्चारणसाम
र्थ्यात् भवानि भवाव भवाम अनद्यतने लङ् अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् लुङ्लङ्
लृङ्क्ष्वडुदात्तः एषु परेष्वंगस्याडागमः स्यात्स चोदात्तः इतश्च ङितो लस्य परस्मैपदमिकारांतं यत्तस्य
लोपः स्यात् अभवत् अभवतां अभवन् अभवः अभवतं अभवत अभवं अभवाव अभवाम विधि
निमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् विधिः प्रेरणं
भृत्यादेर्निकृष्टस्य प्रवर्तनं निमंत्रणं नियोगकरणं आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनं आमं
त्रणं कामचारानुज्ञा अधीष्टः सत्कारपूर्वको व्यापारः प्रवर्त्तनायां लिङित्येव सूक्ष्मवचं चतुर्णां पृथगुपाद

नंप्रपंचार्थं यासुट्परस्मैपदेषूदात्तोङिच्च लिङःपरस्मैपदानांयासुडागमःस्यात्सचोदात्तोङिच्च ङित्वोक्तेर्ज्ञायतेक्वचिदनुबंधकार्येऽप्यनल्विधाविति प्रतिषेधइति श्यादेशस्यशानचःशित्वमपीहलिंगं सुट्तिथोः लिङस्तकारथकारयोःसुट्स्यात् सुटायासुटनबाध्यते लिङेयासुट्तकारथकारयोःसु डितिविषयभेदात् लिङःसलोपोनंत्यस्य सार्वधातुकलिंङोऽनंत्यस्यसस्यलोपःस्यात् इतिसकारद्व यस्यापिनिवृत्तिः सुटःश्रवणंत्वाशीर्लिङि स्फुटतरंतुतत्रात्मनेपदे अतोयेयः अतःपरस्यसार्वधातु कावयवस्ययाइत्यस्यइय्स्यात् गुणः यलोपः भवेत् सार्वधातुकेकिंचिकीर्ष्यात् मध्येऽपवादन्यायेनातो लोपएवबाध्येत भवेदित्यादौतुपरत्वाद्दीर्घःस्यात् भवेतां झेर्जुस् लिङोझेर्जुस्स्यात् जइत् उस्यप दांतात् अपदांतादवर्णादुसिपररूपमेकादेशःस्यात् इतिप्राप्ते परत्वान्नित्यत्वाच्चातोयेयइतिप्राञ्च्ः यद्यप्यंतरंगत्वात्पररूपंन्याय्यं तथापियासइत्येतस्यइय्इतिव्याख्येयं एवंचसलोपस्यापवादइय् अ तोयेयइत्यत्रतुसंधिरार्षः भवेयुः भवेः भवेतं भवेत भवेयं भवेव भवेम लिङाशिषि आशिषिलिङस्ति ङार्धधातुकसंज्ञःस्यात् किदाशिषि आशिषिलिङोयासुट्कित्स्यात् स्कोरितिसलोपः क्ङितिच गि त्कित्ङिन्निमित्तेइग्लक्षणेगुणवृद्धीनस्तः भूयात् भूयास्तां भूयासुः भूयाः भूयास्तं भूयास्त भूयासं भूयास्व भूयास्म लुङ् भूतार्थेधातोर्लुङ्स्यात् माङिलुङ् सर्वलकारापवादः स्मोत्तरेलङ्च स्मोत्तरे माङिलङ्स्याल्लुङ्च च्लिलुङि शबाद्यपवादः च्लेःसिच् इचावितौ गातिस्थाघुपाभूभ्यःसिचःपर स्मैपदेषु एभ्यःसिचोलुक्स्यात गापाविहेणादेशापिबतीगृह्येते भूसुवोस्तिङि भूसुवोरेतयोःसार्व

धातुकेतिङिगुणोनस्यात् अस्तिसिचोऽपृक्ते सिच्च अस्‌चेतिसमाहारद्वंद्वः सिच्छब्दस्यसौत्रंभत्वं अस्ती
त्यव्ययेन कर्मधारयः ततःपंचम्याःसौत्रोलुक् विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्यहलईडागमःस्यात् इ
तीण्नेह सिचोलुप्तत्वात् अभूत् हलःकिं ऐधिषि अभूतां सिजभ्यस्तविदिभ्यश्च सिचोऽभ्यस्ताद्विदेश्चपर
स्यङिःसंबंधिनोझेर्जुस्‌स्यात् इतिप्राप्ते आतः सिज्लुकिआदंतादेवझेर्जुस्‌स्यात् अभूवन् अभूः अभू
तं अभूत अभूवं अभूव अभूम नमाङ्‌योगे अडाटौनस्तः माभवानभूत् मास्मभूत् भवद्वा लिङ्
निमित्तेलिङ्‌क्रियातिपत्तौ हेतुहेतुमद्भावादिर्लिङ्‌निमित्तंतत्रभविष्यत्यर्थेलृङ्‌स्यात्क्रियायाअनि
ष्पत्तौगम्यमानायां अभविष्यत् अभविष्यतां अभविष्यन् अभविष्यः अभविष्यतं अभविष्यत अभ
विष्यं अभविष्याव अभविष्याम तेप्राग्धातोः तेगत्युपसर्गसंज्ञकाः धातोःप्रागेवप्रयोक्तव्याः आनि
लोट् उपसर्गस्थान्निमित्तात्परस्यलोडादेशस्यानीत्यस्यनस्यणःस्यात् प्रभवाणि दुरःषत्वणत्वयोरुप
सर्गत्वप्रतिषेधोवक्तव्यः दुःस्थितिः दुर्भवानि अंतःशब्दस्याङ्‌किविधिणत्वेषूपसर्गत्वंवाच्यं अंतर्द्धा अंत
र्द्धिः अंतर्भवाणि शेषेविभाषा कखादावषांतउपदेशे उपदेशेकादिरखादिषांतवर्जेगदनदादेरन्य-
स्मिन् धातौपरेउपसर्गस्थान्निमित्तात्परस्य नेर्णत्वंवास्यात् प्रणिभवति प्रनिभवति इहोपसर्गाणाम
समस्तत्वेऽपिसंहितानित्या तदुक्तं संहितैकपदेनित्यानित्याधातूपसर्गयोः नित्यासमासेवाक्येतुसावि
वक्षामपेक्षतेइति १ सत्ताद्यर्थनिर्देशश्चोपलक्षणं यागात्स्वर्गोभवतीत्यादावुत्पद्यतइत्याद्यर्थनिर्देशा
त् उपसर्गास्त्वर्थविशेषद्योतकाः प्रभवतिपराभवतिसंभवतिअनुभवतिउद्भवतिपरिभवतीत्यत्रविलक्ष

णार्थावगतेः उक्तंच उपसर्गेणधात्वर्थोबलादन्यत्रनीयते प्रहाराहारसंहारविहारपरिहारवदिति एध
वृद्धौ अथक त्थंताः षट्त्रिंशदनुदात्तेतः टितआत्मनेपदानांटेरे टितोलस्यात्मनेपदानांटेरेत्वंस्यात्
एधते सार्वधातुकमपित् अपित्सार्वधातुकंङिद्वत्स्यात् आतोङितः अतःपरस्यङितामाकारस्यइय्
स्यात् एधेते एधंते थासःसे टितोलस्यथासःसेस्यात् एधसे एधेथे एधध्वे अतोगुणे एधे एधावहे एधाम
हे इजादेश्चगुरुमतोनृच्छः इजादिर्योधातुर्गुरुमाननृच्छत्यन्यस्ततआम्स्याल्लिटि आमोमकारस्यने-
त्वं आस्कासोराम्विधानात्ज्ञापकात् आमः आमःपरस्यलुक्स्यात् कृञ्चानुप्रयुज्यतेलिटि आमंता
ल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यंते आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येतिसूत्रे कृञ्ग्रहणसामर्थ्यादनुप्र
योगोऽन्यस्यापीतिज्ञायते तेनकृभ्वस्तियोगइत्यतः कृञोद्वितीयेतिअकारेणप्रत्याहाराश्रयणात्कृभ्वस्ति
लाभः तेषांक्रियासामान्यवाचित्वादाम्प्रकृतीनांविशेषवाचित्वात्तदर्थयोरभेदान्वयः संपदिस्तुप्रत्याहा
रेंऽतर्भूतोऽप्यनन्वितार्थत्वान्नप्रयुज्यते कृञस्तुक्रियाफलेपरगामिनिपरस्मैपदेप्राप्ते आम्प्रत्ययव
त्कृञोऽनुप्रयोगस्य आम्प्रत्ययोयस्मादित्यतद्गुणसंविज्ञानोबहुव्रीहिः आम्प्रकृत्यातुल्यमनुप्रयु-
ज्यमानात्कृञोऽप्यात्मनेपदंस्यात् इहपूर्ववदित्यनुवर्त्यवाक्यभेदेनसंबध्यते पूर्ववदेवात्मनेपदं नतुत
द्विपरीतमिति तेनकर्तृगेऽपिक्रियाफले ईहांचकारेत्यादौनतङ् लिटस्तझयोरेशिरेच् लिडादेशयोस्तझ
योरेशिरेच्स्युः एतौस्तः एकारोच्चारणंज्ञापकंतङादेशानांटेरेत्वंनेति तेनडारौरसांन एधांकृएइतिस्थिते अ
संयोगाल्लिट्कित् असंयोगात्परोऽपिल्लिट्कित्स्यात् क्ङिति चेतिनिषेधात्सार्वधातुकार्धधातुकयो

रितिगुणोन द्वित्वात्परत्वाद्यणिप्राप्ते द्विर्वचनेऽचि द्वित्वनिमित्तेचिपरेअचआदेशोनस्यात्द्वित्वे कर्त्तव्ये उ
रत् अभ्यासऋवर्णस्यअत्स्यात्प्रत्ययेपरे रपरत्वं प्रत्ययेकिं वव्रश्च हलादिःशेषः कुहोश्चुः अभ्यासकव
र्गहकारयोश्चवर्गादेशःस्यात् एधांचक्रे एधांचक्राते एधांचक्रिरे एकाचउपदेशेऽनुदात्तात् उपदेशेयो-
धातुरेकाजनुदात्तश्चततः परस्यार्धधातुकस्येण्नस्यात् उपदेशेइत्युभयान्वयि एकाचइतिकिं यङ्लुग्व्या
वृत्तिर्यथास्यात् स्मरंतिहि श्तिपाशपानुबंधेनातिर्दिष्टं यद्ग्रहणेनच यत्रैकाज्ग्रहणंचैवपंचैतानिनयङ्लुकि
इति १ एतेनचेहैवैकाज्ग्रहणेन ज्ञाप्यते अचइत्येवैकत्वविवक्षयातद्धतोग्रहणेनचसिद्धेएकग्रहणसामर्थ्या
दनेकाच्कोपदेशोव्यावर्त्यते तेनवधेर्हन्त्युपदेशेएकाचोऽपिननिषेधः आदेशोपदेशेअनेकाच्त्वात् अनुदा
त्ताश्चानुपदमेवसंग्रहीष्यंते एधांचकृषे एधांचक्राथे इणःषीध्वंलुङ्लिटांधोऽगात् इणंतादंगात्परेषां
षीध्वंलुङ्लिटांधस्यमूर्धन्यादेशःस्यात् एधांचकृढ्वे एधांचक्रे एधांचकृवहे एधांबभूव अनुप्रयोगसा
मर्थ्यादस्तेर्भूभावोन अन्यथाहिकृञ्चानुप्रयुज्यतइतिकृञ्चितिवाब्रूयात् अतआदेः अभ्यासस्यादेर
तोदीर्घःस्यात्पररूपापवादः एधामास एधामासतुः एधामासुरित्यादि एधिता एधितारौ एधितारः एधि
तासे एधितासाथे धिच धातौप्रत्ययेपरेसलोपः एधिताध्वे हएति तासस्त्योःसहस्यः स्यादेतिपरे एधिता
हे एधितास्वहे एधितास्महे एधिष्यते एधिष्येसे एधिष्यंते एधिष्यते एधिष्येथे एधिष्यध्वे एधिष्ये एधिष्या
वहे एधिष्यामहे आमेतः लोटएकारस्यआम्स्यात् एधतां एधेतां एधंतां सवाभ्यांवामौ सवाभ्यांपरस्य
लोडेतः क्रमाद्वअम्एतौस्तः एधस्व एधेथां एधध्वं एतऐ लोडुत्तमस्यएतऐस्यादामोऽपवादः एधै एधावहै

एधामहे आडजादीनां अजादीनामाट् स्याल्लुङादिषु अटोऽपवादः आटश्च ऐधत ऐधेतां ऐधंत ऐधथाः ऐधेथां ऐधध्वं ऐधे ऐधावहि ऐधामहि लिङः सीयुट् सलोपः एधेत एधेयातां झस्यरन् लिङो झस्य रन् स्यात् एधेरन् एधेथाः एधेयाथां एधेध्वं इटोऽत् लिङादेशस्य इटोऽत्स्यात् एधेय एधेवहि एधेमहि आशीर्लिङि आर्धधातुकत्वाल्लिङः सलोपो न सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वं एधिषीष्ट एधिषीयास्तां एधिषीरन् एधिषीष्ठाः एधिषीयास्थां एधिषीध्वं एधिषीय एधिषीवहि एधिषीमहि ऐधिष्ट ऐधिषातां आत्मनेपदेष्वनतः अनकारात् परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् ऐधिषत ऐधिष्ठाः ऐधिषाथां इणः षीध्वंलुङ्लिटां धोऽङ्गात् ऐधिढ्वं इड्भिन्न एव इणिह गृह्यत इति मते तु ऐधिध्वं दधपोर्वस्य मस्य च द्वित्वविकल्पात् षोडश रूपाणि ऐधिषि ऐधिष्वहि ऐधिष्महि ऐधिष्यत ऐधिष्येतां ऐधिष्यंत ऐधिष्यथाः ऐधिष्येथां ऐधिष्यध्वं ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि उदात्तत्वाद्धलादेरिट् प्रसंगादनुदात्ताः संगृह्यंते ऊदृदंतैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः वृङ्वृञ्भ्यां च विनैकाचोऽजंतेषु निहताः स्मृताः १ शक्लृपच्मुच्रिच्वच्विच्सिच्प्रच्छ्त्यज्निजिर्भजः भंज्भुज्भ्रस्जिमस्जियज्युज्रुज्रंज्विजिर्स्वंजिसंज्सृजः २ अद्क्षुद्खिद्-च्छित्तुदिनुदः पद्यतिर्भिद्यतिर्विनद् शद्सदी स्विद्यतिः स्कंदिहदी क्रुध्क्षुधिबुध्यती ३ बंधिर्युधिरुधी राधिव्यध्शुधः साधिसिध्यती मन्यहन्नाप्क्षिप्छुपितप्तिपस्तृप्यतिदृप्यती ४ लिप्लुप्वप्शप्स्वप्सृपियम्रभ्लभ्गम्नम्यमो रमिः क्रुशिर्दंशिदिशी दृश्मृश्रिश्रुश्लिश्विश्स्पृशः कृषिः ५ त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्यतयो घसिः वसतिर्दहदिहिदुहो नह्मिहरुहलिह्वहिस्तथा ६ अनु

दात्ताहलंतेषुधातवोद्व्यधिकंशतं तुदादौमतभेदेनस्थितोयोचुरादिषु ७ तृपृदृपीतोवारयितुंश्यनानिर्देश
आदृतः किंच ष्णिहपयोसिध्यबुध्योमन्यपुष्यश्लिषःश्यना ८ वसिःशपालुकायौतिर्निर्दिष्टोऽन्यनिवृत्तयेति
जिघ्नविजिर्शकू इतिसानुबंधा अमीतथा ९ विंदतिश्चांद्रदोर्गादेरिष्टोभाष्येऽपिदृश्यते व्याघ्रभूत्यादयस्त्वेनंने
हपेठुरितिस्थितं १० रंजिमस्ज्जीअति पदीतुद्रक्षद्युश्रुषिपुषीशिषिः भाष्याऽनुक्तानवेहोक्ताव्याघ्रभूत्यादि
संमते ११ स्पर्धसंघर्षे संघर्षःपराभिभवेच्छा धात्वर्थेनोपसंग्रहादकर्मकःस्पर्धते शर्पूर्वाःखयः अ
भ्यासस्यशर्पूर्वाःखयःशिष्यंते हलादिःशेषइत्यस्यापवादः पस्पर्धे स्पर्धिता स्पर्धिष्यते स्पर्धतां अस्पर्धत स्प
र्धेत स्पर्धिषीष्ट अस्पर्धिष्यत गाधृप्रतिष्ठालिप्सयोर्ग्रंथेच गाधते जगाधे बाधृलोडने लोडनंप्रतिघातः
बाधते बबाधे नाथृनाधृयाच्ञोपतापैश्वर्याशीःषु आशिषिनाथइतिवाच्यं अस्याशिष्येवात्मनेपदं
स्यात् नाथते अन्यत्रनाथति नाधते दधधारणे दधते अतएकहल्मध्येऽनादेशादेर्लिटि लिण्निमित्तादेशा
दिकंनभवति यदंगंतदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यएकारःस्यादभ्यासलोपश्चकितिलिटि
थलिचसेटि प्रागुक्तंस्यात् आदेशश्चेहवैरूप्यसंपादकएवाश्रीयते शसिदद्योःप्रतिषेधवचनात्ज्ञाप
कात् तेनप्रकृतिजश्चरांतेषुसत्स्वपिएत्वाभ्यासलोपौस्तएव देधे देधाते देधिरे अतःकिं दिदिवतुः तप
रःकिं रराखे एकेत्यादिकिं ततसरतुः अनादेशादेःकिं चकणतु लिटाआदेशविशेषणादिहस्यादेव नेमि
थ सेहे स्कुदिआप्रवणे आप्रवण मुत्प्लवनमुद्धरणंच इदितोनुम्धातोः स्कुंदते चुस्कुंदे श्विदिश्वै
त्ये अकर्मकःश्विंदते शिश्विंदे वदिअभिवादनस्तुत्योः वंदते ववंदे भदिकल्याणेसुखेच भंदते बभंदे

मदिस्तुतिमोदमदस्वप्नकांतिगतिषु मंदते ममंदे स्पदि किंचिच्चलने स्पंदते पस्पंदे क्लिदि परिदेवने शोके इत्य
र्थः सकर्मकः क्लिंदते चैत्रं चिक्लिंदे मुद हर्षे मोदते मुमुदे दद दाने ददते न शसददवादिगुणानां शसेर्ददेर्व
कारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न दददे दददाते दददिरे ष्वद स्वर्द आ
स्वादने अयमनुभवे सकर्मकः रुचावकर्मकः धात्वादेः षः सः धातोरादेः षस्य सः स्यात् सात्पदाद्योरि
ति षत्वनिषेधः अनुस्वदते स्वर्दते सस्वर्दे उर्द माने क्रीडायां च उपधायां च धातोरुपधाभूतयो रेफवका
योर्हल्परयोः परत इको दीर्घः स्यात् ऊर्दते ऊर्दांचक्रे कुर्द खुर्द गुर्द कुद क्रीडायामेव कूर्दते चुकूर्दे खूर्दते
गूर्दते गोदते जुगुदे षूद क्षरणे सूदते सुषूदे सेकसृप्सृस्तृसृज्स्तृस्त्यान्ये दंत्याजंतसादयः एकाचः
षोपदेशाः ष्वष्कस्विद्स्वद्स्वंजस्वप्स्मिङः दंत्यः केवलदंत्यः न तु दंतोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणा-
त् ह्राद अव्यक्ते शब्दे ह्रादते जह्रादे ह्लादी सुखे च चाद् अव्यक्ते शब्दे ह्लादते स्वाद आस्वादने स्वादते प
र्द कुत्सिते शब्दे गुदरवे इत्यर्थः पर्दते यती प्रयत्ने यतते येते युतृ जुतृ भासने योतते युयुते जोतते जुजु
ते विथृ वेथृ याचने विविथे विवेथे श्रथि शैथिल्ये श्रंथते ग्रथि कौटिल्ये ग्रंथते कत्थ श्लाघायां कत्थ-
ते एधादयोऽनुदात्तेतो गताः अथाष्टात्रिंशत्तवर्गीयांताः परस्मैपदिनः अत सातत्यगमने अत
ति अत आदेः आत आततुः आतुः लुङि आतिस् ईद् इति स्थिते इट ईटि इटः परस्य सस्य लोपः स्या
दीटि परे सिज्लोपे एकादेशे सिद्धो वाच्यः आतीत् आतिष्टां आतिषुः वदव्रजहलंतस्याचः वदेर्व्रजेर्ह
लंतस्य चांगस्याचः स्थाने वृद्धिः स्यात् सिचि च परस्मैपदेषु इति प्राप्ते नेटि इडागमेऽसिचि प्रागुक्तं न

स्यात् माभवानतीत् अतिष्ठां अतिषुः चितीसंज्ञाने चेतति चिचेत अचेतीत् अचेतिष्टां अचेतिषुः च्युतिर् आसेच
ने सेचनमार्द्रीकरणं आङीषदर्थेऽभिव्याप्तौच इर् इत्संज्ञावाच्या च्योतति चुच्योत इरितोवा इरितोधातो
श्च्लेरङ्वास्यात्परस्मैपदेपरे अच्युतत् अच्योतीत् श्च्युतिर्क्षरणे श्च्योतति चुश्च्योत अचुश्चुतत् अश्च्योती
त् यकाररहितोऽप्ययं श्चोतति मंथविलोडने यासुट्ः किदाशिषीतिकित्वादनिदितामितिनलोपः मथ्यात् कु
थिपुथिलुथिमथिहिंसासंक्लेशनयोः इदित्वान्नलोपोन कुंथ्यात् मंथ्यात् षिधगत्यां सेधति सिषेध सेधि
ता असेधीत् सात्पदाद्योरितिषत्वनिषेधेप्राप्ते उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासे
नयसेधसिचसंजस्वंजां उपसर्गस्थान्निमित्तादेषां सस्यषःस्यात् सदिरप्रतेः प्रतिभिन्नादुपसर्गात्सदेः
सस्यषःस्यात् स्तन्भेः स्तन्भेः सौत्रस्यसस्यषःस्यात् योगविभागउत्तरार्थः किंच अप्रतेरितिनानुवर्त्तते बाहुप्र
तिष्टंभविवृद्धमन्युः अवाच्चालंबनाविदूर्ययोः अवात्स्तन्भेरेतयोरर्थयोःषत्वंस्यात् वेश्चस्वनोभोजने
अवाभ्यांस्वनतेःसस्यषःस्याद्भोजने परिनिविभ्यःसेवसितसयसिवुसहसुट्स्तुस्वंजां परिनिविभ्यःप
रेषामेषांसस्यषःस्यात् निषेधति प्राक्सितादड्व्यवायेऽपि सेवसितेत्यत्रसितशब्दात्प्राग्येसुनोत्याद
यस्तेषामड्व्यवायेऽपिषत्वंस्यात् न्यषेधत् न्यषेधीत् न्यषेधिष्यत स्थादिष्वभ्यासेनचाभ्यासस्य प्राक्
सितात् स्थादिष्वभ्यासेनव्यवायेऽपिषत्वंस्यादेषामेवाभ्यासस्य नतुसुनोत्यादीनां निषिषेध निषिषिधतुः से
धतेर्गतौ गत्यर्थस्यसेधतेःषत्वंनस्यात् गंगांविसेधति षिधूशास्त्रेमांगल्येच शास्त्रंशासनं स्वरतिसूति
सूयतिधूञूदितोवा स्वरत्यादेरूदितश्चपरस्यवलादेरार्धधातुकस्येड्वास्यात् झषस्तथोर्धोऽधः झषः

परयोस्तथयोर्धः स्यन्नतु दधातेः जश्त्वं सिषेद्ध सिषेधिथ सेद्धा सेधिता सेत्स्यति सेधिष्यति असैत्सीत् झलो
झलि झलः परस्य सस्य लोपः स्यात् झलि असैद्धां असैत्सुः असैत्सीः असैद्धं असैद्ध असैत्सं असैत्स्व असै
त्स्म पक्षे असेधीत् असेधिष्टां इत्यादि खादृ भक्षणे ऋकार इत् खादति चखाद खद स्थैर्ये हिंसायां च चाद्भ
क्षणे स्थैर्ये अकर्मकः खदति अत उपधायाः उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे चखाद
णलुत्तमो वा उत्तमो णल् वा णित् स्यात् चखाद चखद अतो हलादेर्लघोः हलादेर्लघोरकारस्य इडादौ
परस्मैपदपरे सिचि वृद्धिर्वा स्यात् अखादीत् अखदीत् बद स्थैर्ये पवर्गीयादि बबाद बेदतुः बेदिप गद व्य
क्तायां वाचि गदति जगाद नेर्गदनदपतपद घुमास्यति हन्ति याति वाति द्राति प्साति वपति वहति
शाम्यति चिनोति देग्धिषु च उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णः स्यात् गदादिषु परेषु प्रणिगदति
जगाद रद विलेखने विलेखनं भेदनं रदति रराद णद अव्यक्ते शब्दे णो नः धातोरादेर्णस्य नः स्यात्
णोपदेशास्त्वनर्दनाटिनाथ्नाधनन्दनक्कनॄनृतः नाटेर्दीर्घाद्धस्वस्य पर्युदासात् घटादिर्णोपदेश एव तवर्गचतुर्था
तस्य नाथतेर्नृनंदेश्च केचित् णोपदेशतामाहुः उपसर्गादसमासेऽपि णोपदेशस्य उपसर्गस्थान्नि
मित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात् समासे असमासेऽपि प्रणदति प्रणिनदति अर्द गतौ याचने
च अत आदेः तस्मान्नुड् द्विहलः द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् आनर्द आर्दीत् न
र्द गर्द शब्दे णोपदेशत्वाभावान्न णः प्रनर्दति गर्दति जगर्द तर्द हिंसायां तर्दति कर्द कुत्सिते शब्दे कुत्सिने
कौक्षे खर्द दंदश्शूके दंशहिंसादिरूपायां दंदश्शूकक्रियायामित्यर्थः खर्दति चखर्द अति अदि बंधने अंत

ति आनंत अंदति आनंद इदि परमैश्वर्ये इंदति इंदांचकार बिदि अवयवे पवर्गतृतीयादिः बिंदति अव-
यवं करोतीत्यर्थः भिदीति पाठांतरं गडि वदनैकदेशे गंडति अत्यादयः पंचैते न तिङ्विषया इति काश्यपः
अन्ये तु तिङमपीच्छंति णिदि कुत्सायां निंदति प्रणिंदति टुनदि समृद्धौ आदिर्ञिटुडवः उपदेशे धातो
राद्याएते इतः स्युः नंदति इदित्वान्नलोपो न नंद्यात् चदि आल्हादे च चंद त्रदि चेष्टायां तत्रंद कदि क्रदि
क्लदि आव्हाने रोदने च चकंद चक्रंद चक्लंद क्लिदि परिदेवने चिक्लिंद शुंधशब्दे शशुंध नलोपः शुध्यात्
अथ कवर्गीयांता अनुदात्तेतो द्विचत्वारिंशत् शीकृ सेचने तालव्यादिः दंत्यादिरित्येके शीकते शिशीके
लोकृ दर्शने लोकते लोलुके श्लोकृ संघाते संघातो ग्रंथः स चेह ग्रथ्यमानस्य व्यापारो ग्रंथितुर्वा आद्ये अ
कर्मकः द्वितीये सकर्मकः श्लोकते द्रेकृ ध्रेकृ शब्दोत्साहयोः उत्साहो वृद्धिरौद्धत्यं च दिद्रेके दिध्रेके रेकृ शं-
कायां रेकते सेकृ स्रेकृ स्रकि श्रकि श्लकि गतौ त्रयो दंत्यादयः द्वौ तालव्यादी अषोपदेशत्वान्न षः सिसेके
शकि शंकायां शंकते शशंके अकि लक्षणे अंकते आनंके बकि कौटिल्ये वंकते मकि मंडने मंकते ककलौ
ल्ये लौल्यं गर्वश्चापल्यं च ककते चकके कुक वृक आदाने कोकते चुकुके वर्कते ऋदुपदेशेभ्यो लिङः कित्वं
गुणात् पूर्वविप्रतिषेधेन ववृके चकतृप्तौ प्रतिघाते च चकते चेके ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क
वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः कंकते डुढौके तुत्रौके रुष्वात्वनुष्विवुष कृतीनां सत्वप्र
तिषेधो वक्तव्यः ष्वष्कते षष्वष्के अत्र तृतीयो दंत्यादिरित्येके लघि भोजननिवृत्तावपि अघि वघि मघि गन्
त्याक्षेपे आक्षेपो निंदा गतो गत्यारंभे चेत्यन्ये अंघते आनंघे वंघते मंघते मघि कैतवे च राघृ लाघृ द्राघृ

घृसामर्थ्ये रायते श्रायृ इत्यपि केचित् ग्रायृ आयामेच श्लाघृ कत्थने श्लाघते अथपरस्मैपदिनः पंचाशत् फ
क्कनीचैर्गतौ नीचैर्गतिर्मंदगमनमसद्व्यवहारश्च फक्कति तकहसने तकति तकिकृच्छ्रजीवने तंकति बु
क्क भषणे भषणंश्वरवः बुक्कति कखहसने प्रनिकखति ओखृराखृलाखृद्राखृध्राखृशोषणालमर्थ
योः शाखृश्लाखृव्याप्तौ शाखति उखउखिवखवखिमखमखिणखणखिरखरखिलखलखिइखइ
खिईखवल्गगरगिलगिअगिवगिमगितगित्वगिश्रगिश्लगिइगिरिगिलिगिगत्यर्थाः द्वितीयांताः पंचद
श तृतीयांतास्त्रयोदश इहखांतेषुरिखत्रखत्रिखिशिखिइत्यपि चतुरः केचित्पठंति अभ्यासस्यास
वर्णे अभ्यासस्येवर्णावर्णयोरियङुवङौस्तोऽसवर्णेऽचि उवोख सन्निपातपरिभाषया इजादेरित्याम्न
ऊखतुः ऊखुः इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाध्रस्वः प्राप्तोनभवति सकृत्प्रवृत्तत्वात् आंग
त्वाद्विपर्जन्यवल्लक्षणप्रवृत्त्या न्हस्वेकृते ततोदीर्घः वार्णादांगं बलीयइतिन्यायात् परत्वाच्च उंखति व
वखतुः वंखति मेखतुः त्वगिकंपनेच युगिजुगिबुगिवर्जने युंगति घघहसने घघति जघाघम-
घिमंडने मंघति शिघिआघ्राणे शिंघति अथचवर्गीयांतास्तत्रानुदात्तेतएकविंशतिः वर्चदीप्तौ
वर्चते षचसेचनेसेवनेच सचते सेचे सचिता लोचृदर्शने लोचते लुलोचे शचव्यक्तायांवाचि शेचे
श्वचश्वचिगतौ श्वचते श्वंचते कचबंधने कचते चकचे कचिकाचिदीप्तिबंधनयोः चकंचे चकांचे मचमु
चिकल्कने कल्कनंदंभः शाठ्यंच कत्थनमित्यन्ये मेचे मुमुंचे मचिधारणोच्छ्रायपूजनेषु ममंचे पचि
व्यक्तीकरणे पंचते ष्टुचप्रसादे स्तोचते तुष्टुचे ऋजगतिस्थानार्जनोपार्जनेषु आर्जते तुड्विधोक्रका

रेकदेशोरेफोहल्त्वेनगृह्यते तेनद्विहल्त्वान्नुट् आनृजे ऋजिभृजीभर्जने उपसर्गादृतीतिवृद्धिः प्रार्जतेऋं
जांचक्रे आर्जिष्ट भर्जते बभृजे अभर्जिष्ट एजृभ्रेजृभ्राजृदीप्तौ एजांचक्रे ईजगतिकुत्सनयोः ईजांचक्रे अ
थद्विसप्ततिर्वर्ज्यं ताःपरस्मैपदिनः शुचशोके शोचति कुचशब्देतारे कोचति कुंचक्रुंच कौटिल्याल्पीभाव
योः अनिदितामितिनलोपः कुच्यात् क्रुच्यात् लुंच अपनयने अंचुगतिपूजनयोः अच्यात् गतौनलोपः
पूजायांतु अंच्यात् वंचुचंचुतंचुत्वंचुम्रुचुम्लुचुम्रुंचुम्लुंचुगत्यर्थाः वच्यात् चच्यात् तच्यात् त्वच्यात् अ
म्रुंचीत् जृस्तंभुम्रुचुम्लुचुग्लुचुग्रुचुग्लुंचुश्विभ्यश्च एभ्यश्च्लेरङ्वास्यात् अम्रुचत् अम्रोचीत् अ
म्लुचत् अम्लोचीत् ग्रुचुग्लुचुकुजुखुजुस्तेयकरणे जुग्रोच अग्रुचत् अग्रोचीत् जुग्लोच अग्लुचत् अ
ग्लोचीत् अकोजीत् अखोजीत् ग्लुंचुषस्जगतौ अङ् अग्लुचत् अग्लुंचीत् सस्यश्चुत्वेनशः जश्त्वेनजः
सज्जति ससज्ज अयमात्मनेपद्यपि सज्जते गुजिअव्यक्तेशब्दे गुंजति गुंज्यात् अर्चपूजायां आनर्च
म्लेच्छअव्यक्तेशब्दे अस्फुटे अपशब्देचेत्यर्थः म्लेच्छति मिम्लेच्छ लच्छलाछिलक्षणे ललच्छ ललांछ
वाछि इच्छायां वांछति आछिआयामे आंछति अतआदेरित्यत्रतपरकरणंस्वाभाविकह्रस्वपरिग्रहा
र्थं तेन दीर्घाभावान्ननुट् आंछ तपरकरणंस्पष्टसुखार्थमितिमतेतुनुट् आनांछ ह्रीच्छलज्जायां जि
ह्रीच्छ हुर्छाकौटिल्ये कौटिल्यमपसरणमितिमैत्रेयः उपधायांचेतिदीर्घः हूर्छति मुर्च्छामोहसमुच्छ्रा
ययोः मूर्च्छति स्फुर्च्छाविस्तृतौ स्फूर्च्छति युच्छप्रमादे युच्छति उछिउंछे उंछः कणशआदानंकणिशा
द्यर्जनंशिलमितियादवः उंछति उंछांचकार उच्छीविवासे विवासः समाप्तिःप्रायेणायं विपूर्वः व्युच्छ

ति भ्रजभ्रजिधृजधृजिध्वजध्वजिगतौ भ्रजति भ्रंजति धर्जति धृंजति ध्वजति ध्वंजति कूज अव्यक्ते शब्दे कूजति चुकूज अर्जषर्जअर्जने अर्जति आनर्ज सर्जति ससर्ज गर्जशब्दे गर्जति तर्जभर्त्सने तर्जति कर्जव्यथने खर्जपूजनेच चकर्ज चखर्ज अजगतिक्षेपणयोः अजति अजेर्व्यघञपोः अजेर्वीत्ययमादेशः स्यादार्धधातुकविषयेघञमपंचवर्जयित्वा वलादावार्धधातुकेवेष्यते विवाय विव्यतुः विव्युः अत्रवकारस्य हल्परत्वादुपधायांचेतिदीर्घेप्राप्ते अचःपरस्मिन्नितिस्थानिवद्भावेनाच्परत्वं नचनपदांतेतिनिषेधः स्वरदीर्घयलोपेषुलोपाजादेशएवनस्थानिवदित्युक्तेः थलिएकाजितीण्निषेधेप्राप्ते कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि एभ्योलिटइण्नस्यात् क्रादीनांचतुर्णांग्रहणंनियमार्थं प्रकृत्याश्रयःप्रत्ययाश्रयोवायावानिण्निषेधःसलिटिचेत्तर्हिक्रादिभ्यएवनान्येभ्यइति ततश्चतुर्णांथलिभारद्वाजनियमप्रापितस्यवमादिषुक्रादिनियमप्रापितस्यचेटोनिषेधार्थं अचस्तास्वत्थल्यनिटोनित्यं उपदेशेअजंतोयोधातुस्तासौनित्यानिट्ततःपरस्यथलइण्नस्यात् उपदेशेऽत्वतः उपदेशेअकारवतस्तासौनित्यानिटःपरस्यथलइण्ननस्यात् ऋतोभारद्वाजस्य तासौनित्यानिटः ऋदंतादेवथलोनेट्भारद्वाजस्यमतेन तेनान्यस्यस्यादेव अयमत्रसंग्रहः अजंतोऽकारवान्वायस्तास्यनिट्थलिवेडयं ऋदंतईदृङ्नित्यानिट्क्राद्यन्योलिटिसेड्भवेत् १ नचस्तुद्रुवादीनामपिथलिविकल्पःशंक्यः अतस्तास्वदितिउपदेशेऽत्वतइतिचयोगद्वयप्रापितस्यैवहिप्रतिषेधस्यभारद्वाजनियमोनिवर्त्तकः अनंतरस्येतिन्यायात् विवयिथ विवेथ आजिथ विव्यथुः विव्य विवाय विवय विव्यिव विव्यिम वेता अजिता वेष्यति अजिष्यति अजतु आजत् अजेत् वीयात् सिचिवृद्धिः

परस्मैपदेषु इगंतांगस्य वृद्धिः स्यात् परस्मैपदपरे सिचि अवैषीत् आजीत् अवेष्यत् आजिष्यत् तेजपाल
ने तेजति खज मंथने खजति खजि गतिवैकल्ये खंजति एजृ कंपने एजति एजांचकार टुओस्फूर्जा वज्रनिर्घो
षे स्फूर्जति पुस्फूर्जे क्षि क्षये अकर्मकः अंतर्भावितण्यर्थस्तु सकर्मकः क्षयति चिक्षाय चिक्षियतुः चिक्षियुः
चिक्षयिथ चिक्षेथ चिक्षियिव चिक्षियिम क्षेता अकृत्सार्वधातुकयोर्दीर्घः अजंतांगस्य दीर्घः स्याद्या
दौ प्रत्यये परे न तु कृत्सार्वधातुकयोः क्षीयात् अक्षैषीत् क्षीज अव्यक्ते शब्दे कूजिना सहायं पठितुं युक्तः चि
क्षीज लज लजि भर्जने लाज लाजि भर्त्सने च जज जजि युद्धे तुज हिंसायां तोजति तुतोज तुजि पालने गज ग
जि गृज गृजि मुज मुजि शब्दार्थाः गज मदे च वज व्रज गतौ वदव्रजेति वृद्धिः अव्राजीत् अथ टवर्गीयांताः शा
ड्यंता अनुदात्तेतः षट्त्रिंशत् अट्ट अतिक्रमहिंसनयोः दोपधोऽयं तोपध इत्येके अट्टते आनट्टे वेष्ट वेष्टने
विवेष्टे चेष्ट चेष्टायां अचेष्टिष्ट गोष्ट लोष्ट संघाते जुगोष्टे लुलोष्टे घट्ट चलने जघट्टे स्फुट विकसने स्फोटते
पुस्फुटे अटि गतौ अंटते आनंटे वठि एकचर्यायां ववंठे मठि कठि शोके शोक इह आध्यानं मंठते कंठते मु
ठि पालने मुंठते हेठ विबाधायां जिहेठे एठ च एठांचक्रे हिडि गत्यनादरयोः हिंडते जिहिंडे हुडि संघाते जुहुंडे
कुडि दाहे चुकुंडे वडि विभाजने मडि च भडि परिभाषणे परिहासः सनिंदोपालंभश्च परिभाषणं पिडि सं
घाते मुडि मार्जने मार्जनं शुद्धिर्न्यग्भावश्च मुंडते तुडि तोडने तोडनं दारणं हिंसनं च तुंडते हुडि वरणे
हरण इत्येके चडि कोपे शडि रुजायां संघाते च तडि ताडने पडि गतौ कडि मदे खडि मंथे हेडृ होडृ अना
दरे जिहेडे जुहोडे बाडृ आप्लाव्ये बशादिः आप्लाव्यमाप्लवः बाडते द्राडृ ध्राडृ विशरणे शाडृ-

श्लाघायां अथआटवर्गीयांतसमाप्तेः परस्मैपदिनः शौटृ गर्वे शौटति यौटृ बंधने यौटति म्लेटृ म्रेडृ
उन्मादे द्वितीयोडांतः टांतमध्येपाठस्त्वर्थसाम्यान्नाथतिवत् म्रेटति म्रेडति कटेवर्षावरणयोः चटेइत्येके च
काट सिचि अतोहलादेर्लघोरिति वृद्धौप्राप्तायां ह्म्यंतक्षणश्वसजागृणिश्व्येदितां हमयांतस्यक्षणा
दे र्ण्यंतस्यश्वयतेरेदितश्च वृद्धिर्नस्यादिडादौसिचि अकटीत् अटपटगतौ आट आटतुः आटुः पपाट पेटतुः
पेटुः रटपरिभाषणे लटबाल्ये शटरुजाविशरणगत्यवसादनेषु वटवेष्टने ववाट ववटतुः ववटिथ किटखि
ट त्रासे शिटषिटअनादरे शेटति शिशेट सेटति सिषेटजटझटसंघाते भटभृतौ तटउच्छ्राये खटकांक्षायां
नटनृत्तौ पिटशब्दसंघातयोः हठदीप्तौ षटअवयवे लुटविलोडने डांतोऽयमित्येके चिटपरप्रेष्ये विटशब्दे
बिटआक्रोशे वशादिः हिठेत्येके इटकिटकटीगतौ एटति केटति कटति ईकारःश्वीदितोनिष्ठायामितीण्
निषेधार्थः केचित्तुइदितंमत्वा नुमिकृते कंटतीत्यादि वदंति अंतेचइईइतिप्रश्लिष्यअयति इयाय ईयतुः
ईयुः इययिथ इयेथ इयाय इयय दीर्घस्यत्विजादेरित्यामिअयांचकारेत्याद्युदाहरंति मडिभूषायां कुडिवैक
ल्ये कुंडति कुंडतइति तुदाहेगतं मुडप्रुडमर्दने चुडिअल्पीभावे मुडिखंडने मुंडति पुडिचेत्येके पुंडति
रुटिलुटिस्तेये रुंटति लुंटति रुठिलुठिइत्येके रुडिलुडीत्यपरे स्फुटिर्विशरणे इरित्वादङ्वा अस्फुटत् अस्फो
टीत् स्फुटिइत्यपिकेचित् इदित्वान्नुम् स्फुंटति पठव्यक्तायांवाचि पेठतुः पेठुः पेठिथ अपाठीत् अपठीत्
वठस्थौल्ये ववठतुः ववठिथ मठमदनिवासयोः कठकृच्छ्रजीवने रठपरिभाषणे हठप्लुतिशठत्वयोः ब
लात्कारे इत्येके हठति जहाठ रुठ लुठ उठ उपघाते ओठति ऊठेत्येके ऊठति ऊठांचकार पिठहिंसासंक्लेशन

योः शठ कैतवे च शुठ प्रतिघाते शोठति शुठतीति स्वामी शुंठति कुठि च कुंठति लुठि आलस्ये प्रतीघाते च शुठि
शोषणे रुठि लुठि गतौ चुड्ड भावकरणे भावकरणमभिप्रायसूचनं चुड्डति चुचुड्ड अड्ड अभियोगे
अड्डति आनड्ड कड्ड कार्कश्ये कड्डति चुड्डादयस्त्रयो दोपधाः तेन क्विपि चुत् अत् कत् क्रीडृ विहारे
क्रीडति चिक्रीड तुडृ तोडने तोडति तुतोड तूडृ इत्येके हुडृ हूडृ होडृ गतौ हूड्यात् हुड्यात् होड्यात्
रौडृ अनादरे रौडृ लोडृ उन्मादे अड उद्यमने अडति आड आडतुः आडुः लड विलासे लडति रलयोर्ड
लयोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः कड मदे कडति कडि इत्येके कंडति गडि वदनैकदेशे गंडति
इति टवर्गीयान्ताः अथ पवर्गीयान्तास्तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत् तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः
आद्योऽनुदात्तः क्षीरस्वामी त्वयं सेडिति बभ्राम तेपते तितिपे क्रादिनियमादिट् तितिपिषे तेप्ता तेप्स्यते
लिङ्सिचावात्मनेपदेषु इकःसमीपाद्धलः परो झलादी लिङ् आत्मनेपदपरः सिच्चेत्येतौ कितावुक्तः कि
त्त्वान्न गुणः तिप्सीष्ट तिप्सीयास्तां तिप्सीरन् अतिप्त अतिप्सातां अतिप्सत तितेपे तिष्टिपे तिष्टिपाते तिष्टि
पिरे तिष्टेपे तिष्टेपाते तिष्टिपिरे तेपृ कंपने च ग्लेपृ दैन्ये ग्लेपते टुवेपृ कंपने वेपते केपृ गेपृ ग्लेपृ च चा
लकंपने गतौ च केपते सूत्रविभागादिति स्वामी मैत्रेयस्तु चकारमन्तरेण पठित्वा कंपन इत्यपेक्षते इत्याह ग्लेपे
रर्थभेदात्पुनः पाठः मेपृ रेपृ लेपृ गतौ त्रपूष् लज्जायां त्रपते तॄफलभजत्रपश्च एषामत एकारोऽभ्यासलोपश्च
स्यात्किति लिटि सेटि थलि च त्रेपे त्रेपाते त्रेपिरे ऊदित्वादिड्वा त्रपिता त्रप्ता त्रपिषीष्ट त्रप्सीष्ट कपि चलने कं
पते चकंपे रबि लबि अबि शब्दे ररंबे ललंबे आनंबे लबि अवस्रंसने च कबृ वर्णे चकबे क्लीबृ आधार्ष्ट्ये चि

क्लीबे क्षीबृमदे क्षीबते शीभृकत्थने शीभते चीभृच रेभृशब्दे रिरेभे अभिरभीक्वचित्पठ्यते अंभते रंभते ष्टभि स्कभि प्रतिबंधे स्तंभते उत्तंभते उदःस्थास्तंभोरिति पूर्वसवर्णः विस्तंभते स्तन्भेरिति षत्वंतु न भवति श्नुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् तद्वीजं तु स्थास्तंभोरिति पवर्गीयोपधपाठः स्तन्भेरिति तवर्गीयोपधपाठ श्चेति माधवः केचिदस्य टकारओपदेशिकइत्याहुः तन्मते ष्टंभते टष्टंभे जभिजृभीगात्रविनामे रधिजभोर चि एतयोर्नुमागमः स्यादचि जंभते जजंभे जंभिता अजंभिष्ट जृंभते जजृंभे शल्भ कत्थने शशल्भे वल्भभो जने दंतोष्ठ्यादिः ववल्भे गल्भधार्ष्ट्ये गल्भते श्रंभुप्रमादे तालव्यादिर्दंत्यादिश्च श्रंभते स्रंभते ष्टुभुस्तंभे स्तोभते विष्टोभते तुष्टुभे व्यष्टोभिष्ट अथ परस्मैपदिनः गुपूरक्षणे गुपूधूपविच्छिपणिपनिभ्यआयः एभ्य आय प्रत्ययः स्यात्स्वार्थे पुगंतेति गुणः सनाद्यंता धातवः सनादयः कमेर्णिङंताः प्रत्यया अंते येषां ते धातुसंज्ञाःस्युः धातुत्वाल्लडादयः गोपायति आयादय आर्धधातुके वा आर्धधातुकविवक्षायां आया दयो वा स्युः कास्प्रत्ययादाममंत्रेलिटि कास्धातोः प्रत्ययांतेभ्यश्चाम् स्याल्लिटि न तु मंत्रे कास्यनेकाज्ग्रहणं कर्तव्यं सूत्रे प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाच इति वाच्यमित्यर्थः अतोलोपः आर्धधातुकोप देशकाले यदकरांतं तस्याकारस्य लोपः स्यादार्धधातुके परे गोपायांचकार गोपायांबभूव गोपायामास जु गोप जुगुपतुः ऊदित्वाद्वेट् जुगोपिथ जगोप्थ गोपायिता गोपिता गोप्ता गोपाय्यात् गुप्यात् अगोपायीत् अगोपीत् अगोप्सीत् धूपसंतापे धूपायति धूपायांचकार दुधूप धूपायितासि धूपितासि जप जल्प व्यक्तायां वाचि जपमानसे च जपसांत्वने षपसमवाये समवायः संबंधः सम्यगवबोधो वा सपति रपलपव्यक्तायां वाचि

तुपमंदायांगतौ चोपति त्तुचोप चोपिता तुपतुंपत्तुपत्रुंपतुफतुंफत्तुफत्रुंफहिंसार्थाः तोपति तुतोप तुंपति तुतुं
प तुतुंपतुः संयोगात्परस्य लिटः कित्त्वाभावान्न लोपोन किदाशिषीति कित्त्वान्नलोपः तुप्यात् प्रात्तुंपतोग
विकर्त्तरीतिपारस्कराद्गणेपाठात्सुट् प्रस्तुंपतिगोःऽस्तिपानिर्देशाद्युङ्लुकिन प्रतोतुंपीति त्रोपति त्रुंपति
तोफति तुंफति त्रोफति त्रुंफति इहाद्यौ द्वौपंचमषष्ठौ चत्नीरेफाः अन्येसरेफाः आद्याश्चत्वारःप्रथमांताः ततो
द्वितीयांताः अष्टावप्युकारवंतः पर्परफरफिअर्बपर्बलर्बबर्बमर्बकर्बखर्बगर्बशर्ब षर्बचर्बगतौ आद्यःप्रथमां
त स्ततो द्वौ द्वितीयांतौ ततएकादशतृतीयांताः द्वितीयतृतीयौसुष्कासवेरोपधाः पर्पति पपर्प रफति रंफति
अर्बति आनर्ब पर्बति लर्बति बर्बति पवर्गादिरयं मर्बति कर्बति खर्बति गर्बति शर्बति सर्बति चर्बति कुबि
आच्छादने कुंबति लुबितुबिअर्दने लुंबति तुंबति चुबिवक्त्रसंयोगे चुंबति सृभुसृंभुहिंसार्थौ सर्भति ससा
र्भ सर्भिता सृंभति ससृंभ सृभ्यात् षिभुषिंभुइत्येके सेभति सिंभति शुभशुंभभाषणे भासन इत्येके हिं
सायामित्यन्ये अथानुनासिकांतास्तत्रक्रम्यंताअनुदात्तेतोदश घिणिघुणिघृणिग्रहणे नुम्स्थुत्वं घिण्ण
ते जिघिण्णे घुण्णते जुघुण्णे घृण्णते जघृण्णे घुणघूर्णभ्रमणे घोणते घूर्णते इमौतुदादौपरस्मैपदिनौ
पणव्यवहारेस्तुतौच पनचस्तुतावित्येवसंबध्यते पृथङ्निर्देशात् पनिसाहचर्यात्पणेरपिस्तुतावे
वायप्रत्ययः व्यवहारेतु पणते पेणे पणायितासि पणितासे पणाय्यात् पणिषीष्ट पनायति पनायांचका
र पेने भामक्रोधे भामते बभामे क्षमूष्सहने क्षमते चक्षमे चक्षमिषे चक्षंसे चक्षमिध्वे चक्षंध्वे चक्षमि
वहे म्वोश्च मांतस्यधातोर्नकारादेशःस्यान्मकारे वकारेचपरे णत्वं चक्षण्वहे चक्षमिमहे चक्षण्महे क्षा

क्षमिष्यते क्षंस्यते क्षमेत आशिषि क्षमिषीष्ट क्षंसीष्ट अक्षमिष्ट अक्षंस्त कमु कांतौ कांतिरिच्छा **कमेर्णिङ्॰** स्वार्थे ङित्वात्तङ् कामयते **अयामंतात्ल्वाय्येत्निष्णुषु** अम् आंत आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् व क्ष्यमाणणिलोपापवादः कामयांचक्रे **आयादय आर्धधातुके वा** चकमे कामयिता कमिता कामयिष्य ते कमिष्यते **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्॰** ण्यंतात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे काम् इ अ त इति स्थिते **णेरनिटि** अनिडादावार्धधातुके परे णेर्लोपः स्यात् परत्वादेरनेकाचइति यणि प्राप्ते णयल्लोपा वियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति वार्तिकं णिलोपस्य तु पाचयतेः पाक्तिरित्यादिः क्तिजंत मवकाश इति भावः वस्तुतस्तु अनिटीति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः तथा च इयङादेरप वाद एवायं इयङ् अ तनक्षत् यण् आदिदत् गुणः कारणः वृद्धिः कारकः दीर्घः कार्यते **णौ चङ्युपधा या ह्रस्वः** चङ्परे णौ यदंगं तस्योपधाया ह्रस्वः स्यात् **चङि॰** चङि परे अनभ्यासधात्ववयवस्यैकाचः प्रथ मस्य द्वे स्तः अजादेस्तु द्वितीयस्य **सन्वल्लघुनि चङ्परेऽनग्लोपे** चङ्पर इति बहुव्रीहिः सन्वांगस्ये ति च द्वयमप्यावर्तते अंगसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योंऽगस्याभ्यासस्त स्य सनीव कार्यं स्यात् णावग्लोपेऽसति अथवा अंगस्येति नावर्तते चङ्परे णौ यदंगं तस्य योऽभ्यासो लघु परस्तस्येत्यादि प्राग्वत् सन्यतः अभ्यासस्यात इकारः स्यात् सनि **दीर्घो लघोः** लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये अचीकमत णिङभावपक्षे कमेश्च्लेश्चङ् वक्तव्यः णेरभावान्न दीर्घसन्वद्भावौ अच कमत संज्ञायाः कार्यकालत्वादंगं यत्र द्विरुच्यते तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः १ चका-

स्त्यर्थापयत्यूर्णोत्यादौ नांगांद्विरुच्यते किंतस्यावयवः कश्चित्तस्मादेकाश्विदं द्वयं २ वस्तुतोऽगस्यावयवो
योऽभ्यासइतिवर्णनात् उर्णोर्दीर्घोऽर्थापयतौद्वयंस्यादितिमन्महे ३ चकारस्तोतूभयसिद्धंनस्यात्तस्यात्र व्य
वस्थया णेर्विशेष्यंसन्निहितंलघुनीत्यंगमेववा ४ इतिव्याख्याविकल्पस्यकैयटेनैववर्णनात् ५ णेरग्लो
पेऽपिसंबंधस्त्वगितामपिसिद्धये अथकम्यंतास्त्रिंशत्परस्मैपदिनः अणरणवणभणमणकणक्कणव्र
णभ्रणध्वणशब्दार्थाः अणति रणति वणति वादित्वादेत्वाभ्यासलोपौन ववणतुः ववणिथ धणिरपिकै
श्चित्पठ्यते धणति ओणृअपनयने ओणति ओणांचकार शोणृवर्णगत्योः शोणति शुशोण श्रोणृसंघा
ते श्रोणति श्लोणृच शोणादयस्त्रयोऽमीतालव्योष्मादयः पैणृगतिप्रेरणश्लेषणेषु पिपैण ध्रणशब्दे उपदे
शेनांतोऽयं रेफात्परत्वाण्णत्वं ध्रणति नोपदेशफलंतुयङ्लुकिदध्रंति बणेत्यपिकेचित् बेणतुः बेणिथ
कनीदीप्तिकांतिगतिषु चकान ष्टनवनशब्दे स्तनति वनति वनषणसंभक्तौ वनेरर्थभेदात्पुनःपाठःसनति
ससान सेनतुः येविभाषा जनसनखनामात्वंवास्याद्यादौक्ङितिइति सायात् सन्यात् अमगत्यादिषु
कनीदीप्तिगतीत्यत्रगतेः परयोःशब्दसंभक्त्योरादिशब्देनसंग्रहः अमति आमद्रमहम्ममीमृगतौ द्रमति
दद्राम हम्यंतेतिनवृद्धिः अद्रमीत् हम्मति जहम्म मीमति मिमीम अयंशब्देच चमुछमुजमुझमुअदने छिवु
क्लमुच मांशिति एषामचोदीर्घःस्याच्छिति आङिच मइतिवक्तव्यं आचामति आङिकिं चमति विचमति
अचमीत् जिमिंकेचित्पठंति जेमति क्रमुपादविक्षेपे वाभ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः
एभ्यःश्यन्वास्यात् कर्त्रर्थेसार्वधातुकेपरे क्रमःपरस्मैपदेषु क्रमेर्दीर्घःस्यात् परस्मैपदपरेशितिक्राम्यति

क्रामति चक्राम क्राम्यतु क्रामतु **स्नुक्रमोरनात्मनेपदनिमित्ते** अत्रैवेट् क्रमिता अक्रमीत् अथवेवल्ग्यं ताअनुदात्तेतः अयवयपयमयचयतयणयगतौ अयते **दयायासश्च** दय्अय्आस्एभ्यआम्स्याल्लिटि अयांचक्रे अयेत अयिषीष्ट **विभाषेटः** इणःपरोयइट् ततःपरेषांषीध्वंलुङ्लिटां धस्य वामूर्द्धन्यःस्यात् अयिषीढ्वं अयिषीध्वं आयिष्ट आयिढ्वं आयिध्वं **उपसर्गस्यायतौ** अयतिपरस्योपसर्गस्ययोरेफस्तस्यलत्वंस्यात् प्लायते पलायते निस्दुसोरुत्वस्यासिद्धत्वान्नलत्वं निरयते दुरयते निर्दुरोस्तु निलयते दुलयते प्रत्यय इतित्विणोरूपं अथकथमुदयतिविततोर्ध्वरश्मिरज्जाविति माघः इदकिटकदीत्यत्रप्रश्लिष्टस्यभविष्यति यद्वा अनुदात्तेत्वलक्षणमात्मनेपदमनित्यं चक्षिङोङित्करणात्ज्ञापकात् शादित्वात् ववये पेये मेये चेये तेये प्रणयते नेये दयदानगतिरक्षणहिंसादानेषु आदानंग्रहणं दयांचक्रे रयगतौ ऊयीतंतुसंताने ऊयांचक्रे पूयीविशरणेदुर्गंधेच पूयते पुपूये क्नूयीशब्देउंदेच चुक्नूये क्ष्मायीविधूनने चक्ष्माये स्फायीओप्यायीवृद्धौ स्फायते पस्फाये प्यायते **लिड्यङोश्च** लिटियङिच प्यायःपीभावःस्यात् पुनःप्रसंगविज्ञानात्पीशब्दस्यद्वित्वं एरनेकाचइतियण् पिप्ये पिप्याते पिप्यिरे **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्यां** एभ्यःच्लेश्चिण्वास्यात् एकवचनेतशब्देपरे **चिणोलुक्** चिणःपरस्यलुक्स्यात् अप्यायि अप्यायिष्ट तायृसंतानपालनयोः संतानःप्रबंधः तायते तताये अतायि अतायिष्ट शलचलनसंवरणयोः शेले वलवल्लसंवरणेसंचरणेच ववले ववल्ले मलमल्लधारणे मेले ममल्ले भलभल्लपरिभाषणहिंसादानेषु बभले बभल्ले कलशब्दसंख्यानयोः कलते चकले कल्लअव्यक्तेशब्दे कल्लते अशब्देइतिस्वामी

अशब्दस्तूष्णींभावइतिच तेवृदेवृदेवने तितेवे दिदेवे षेवृगेवृग्लेवृपेवृमेवृम्लेवृसेवने परिनिविभ्यइति-
षत्वं परिषेवते सिषेवे अयंसोपदेशः पीतिन्यासकारादयः तद्भाष्यविरुद्धं गेवते जिगेवे जिग्लेवे पिपेवे मेव
ते म्लेवते शेवृखेवृक्लेवृइत्येके रेवृप्लवगतौ प्लवगतिः प्लुतगतिः रेवते अथावत्यंताः परस्मैपदिनः मव्य
बंधने ममव्य सूर्क्ष्यईर्क्ष्यईर्ष्यईर्ष्यार्थाः हयगतौ अहयीत् यांतत्वान्नवृद्धिः शुच्यअभिषवे अवयवानांशि
थिलीकरणं सुरायाःसंधानंवाअभिषवःस्नानंच शुशुच्य चुच्यइत्येके हर्यगतिकांत्योः जहर्य अलभूष-
णपर्याप्तिवारणेषु अलति आल अतोलरांतस्य लेतिलुप्तषष्ठीकंपदं अतःसमीपोयोल्लोत दंतांगस्या
तोवृद्धिःस्यात्परस्मैपदपरेसिचि नेटीतिनिषेधस्यातो हलादेरितिविकल्पस्यचापवादः माभवानालीत्
अयंस्वरितेदित्येके तन्मतेअलते इत्याद्यपि ञिफलाविशरणे तृफलेत्येवं फेलतुः फेलुः अफालीत् मील
श्मीलस्मीलक्ष्मीलनिमेषणे निमेषणंसंकोचः द्वितीयस्तालव्यादिः तृतीयोदंत्यादिः पीलप्रतिष्टंभे प्र-
तिष्टंभोरोधनं नीलवर्णे निनील शीलसमाधौ शीलति कीलबंधने कूलआवरणे शूलरुजायां संघोषेच
तूलनिष्कर्षे निष्कर्षोनिष्कोषणं तन्त्रांतर्गतस्यबहिर्निःसारणं तुतूल पूलसंघाते मूलप्रतिष्ठायां फलनि
ष्पत्तौ फेलतुः फेलुः क्षुल्लभावकरणे भावकरणंअभिप्रायाविष्कारः फुल्लविकसने चिल्लशैथिल्येभावकर
णेच तिलगतौ तेलति तिल्लइत्येके तिल्लति वेल्लचेलकेलखेलक्ष्वेल्लवेल्लचलने पंचम्यादितः षष्ठोलोपधः
पेल्लफेल्लशेल्लगतौ षेलइत्येके स्खलसंचलने चस्खाल अस्खालीत् खलसंचये गलअदने गलति अगा
लीत् षलगतौ सलति दलविशरणे श्वलश्वल्लआशुगमने शश्वाल अश्वालीत् शश्वल्ल अश्वल्लीत् खोल

खोर्ऋ गतिप्रतिघाते खोलति खोरति धोर्ऋ गतिचातुर्ये धोरति त्सर छद्मगतौ तत्सार अत्सारीत् क्मर हूर्छने
चक्मार अभ्र वभ्र मभ्र चर गत्यर्थाः चरतिर्भक्षणेऽपि अभ्रति आनभ्र माभ वानभ्रीत् अंगात्परे फस्या
तः समीपत्वाभावान्न वृद्धिः ष्ठिवु निरसने ष्ठिवुक्लम्वितिदीर्घः ष्ठीवति अस्य द्वितीयस्थकारः ष्ठकारो वेति वृत्तिः
तिष्ठेव तिष्ठिवतुः तिष्ठिवुः टिष्ठेव टिष्ठिवतुः हलिचेति दीर्घः ष्ठीव्यात् जि जये अयमजंतेषु पठितुं युक्तः जय
उत्कर्षप्राप्तिः अकर्मकोऽयं जयति सन्लिटोर्जेः जयतेः सन्लिणिनमित्तयोरभ्यासात्तः परस्य कुत्वं-
स्यात् जिगाय जिग्यतुः जिग्युः जिगयिथ जिगेथ जिगाय जिगय जिग्यिव जिग्यिम जेता जीयात् अजै-
षीत् जीव प्राणधारणे जिजीव पीव मीव तीव नीव स्थौल्ये पिपीव मिमीव तितीव निनीव क्षिवु क्षेवु नि-
रसने उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः ऊर्वांचकार उपधायांच तूर्वति तुतूर्व गुर्वी उद्यमने गूर्वति मुर्वी
बंधने पुर्व पर्व मर्व पूरणे चर्व अदने भर्व हिंसायां कर्व खर्व गर्व दर्पे अर्व शर्व षर्व हिंसायां आनर्व शर्वति म-
र्वति इवि व्याप्तौ इन्वति इन्वांचकार पिवि मिवि णिवि सेचने तृतीयो मूर्धन्योष्मादिरित्येके सेवनइतितरं
गिण्यां पिन्वति पिपिन्व हिवि दिवि धिवि जिवि प्रीणनार्थाः हिन्वति दिन्वति धिन्विकृण्व्योरच अनयो
रकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये अतोलोपः तस्य स्थानिवद्भावाल्लघूपधगुणो न उप्रत्यय
स्यपित्त्वगुणः धिनोति धिनुतः धिन्वंति लोपश्चास्यान्यतरस्यांम्वोः असंयोग पूर्वोयः प्रत्ययोकारस्तदं
तस्यांगस्य लोपो वा स्यात् म्वोः परयोः धिन्वः धिनुवः धिन्मः धिनुमः मिपि तु परत्वाद्गुणः धिनोमि उतश्च
प्रत्ययादसंयोगपूर्वात् असंयोगपूर्वो यः प्रत्ययोकारस्तदंतादंगात्परस्य हेर्लुक् स्यात् धिनु नित्यत्वा

इकारलोपात्पूर्वमाट् धिनवानि धिनवाव धिनवाम जिन्वतीत्यादि रिविरविधविगत्यर्थाः रिण्वति रण्वति धन्वति कृविहिंसाकरणयोश्च चकाराद्गतौ कृणोतीत्यादिधिनोतिवत् अयंस्वादौच मवबंधने मेवतुः मेवुः अमवीत् अमावीत् अवरक्षणगतिकांतिप्रीतितृप्तिअवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिंगनहिंसादानभागवृद्धिषु अवति आव माभवानवीत् धावुगतिशुद्ध्योः स्वरितेत् धावति धावते दधाव दधावे अथोष्मांताआत्मनेपदिनः धुक्षधिक्षसंदीपनक्लेशनजीवनेषु धुक्षते दुधुक्षे धिक्षते दिधिक्षे वृक्षवरणे वृक्षते ववृक्षे शिक्षविद्योपादाने शिक्षते भिक्षभिक्षायामलाभेलाभे च भिक्षते क्लेशअव्यक्तायांवाचि बाधनेइतिदुर्गः क्लेशते चिक्लेशे दक्षवृद्धौशीघ्रार्थेच दक्षते ददक्षे दीक्षमौंड्येज्योपनयननियमव्रतादेशेषु दीक्षते दिदीक्षे ईक्षदर्शने ईक्षांचक्रे ईषगतिहिंसादर्शनेषु ईषांचक्रे भाषव्यक्तायांवाचि भाषते बभाषे वर्षस्नेहने दंतोष्ठ्यादिः ववर्षे गेषृअन्विच्छायां अन्विच्छा अन्वेषणं जिगेषे येषृप्रयत्ने जेषृणेषृएषृप्रेषृगतौ जेषते नेषते एषांचक्रे पिप्रेषे रेषृहेषृ हेषृ अव्यक्ते शब्दे आद्योवृकशब्दे ततोह्यश्वशब्दे रेषते हेषते ह्रेषते कासृशब्दकुत्सायां कासांचक्रे भासृदीप्तौ बभासे णासृरासृशब्दे नासते प्रणासते णसकौटिल्ये नसते भ्यसभये भ्यसते बभ्यसे आङःशासि इच्छायां आशंसते आशशंसे ग्रसुग्लसुअदने जग्रसे जग्लसे ईहचेष्टायां ईहांचक्रे बहिमहिवृद्धौ बंहते बबंहे मंहते अहिगतौ अंहते आनंहे गर्हगल्हकुत्सायां गर्हते जगर्हे जगल्हे बर्हबल्हप्राधान्ये ओष्ठ्यादी वर्हवल्हपरिभाषणहिंसाच्छादनेषु दंतोष्ठ्यादी केचित्तुपूर्वयोर्दंतोष्ठ्यादितामनयोरोष्ठ्यादि

तान्बाहुः भ्रूहगतौ पिस्पिहे बेहृजेहृबाहृप्रयत्ने आद्योदंत्योष्ठ्यादिः अंत्यः केवलोष्ठ्यादिः उभावप्योष्ठ्या-
दीत्येके दंत्योष्ठ्यादी इत्यपरे जेहतिर्गत्यर्थोऽपि बबाहे द्राहृनिद्राक्षये निक्षेपेइत्येके काशृदीप्तौ चकाशे
ऊहवितर्के ऊहांचक्रे गाहूविलोडने गाहते जगाहे जगाहिषे जघाक्षे जगाहिढ्वे जगाहिध्वे गाहिता ढो
ढेलोपः ढस्यलोपःस्यात्ढ्रेपरे गाढा गाहिष्यते घाक्ष्यते गाहिषीष्ट घाक्षीष्ट अगाढ अगाहिष्ट अगा
ढ अघाक्षातां अघाक्षत अगाढाः अगाढ्वं अघाक्षि गृहूग्रहणे गर्हते जगृहे जगृहिषे जघृक्षे जघृ
ढ्वे गर्हिता गर्ढा गर्हिष्यते घर्क्ष्यते गर्हिषीष्ट पक्षे घृक्षीष्ट लुङि अगर्हिष्ट इडभावे शलइगुपधादनि
टः क्सः इगुपधोयः शलंतस्तस्मादनिटश्च्लेः क्सादेशःस्यात् अघृक्षत क्सस्याचि अजादौतङि क्स
स्यलोपःस्यात् अलोऽन्त्यस्य अघृक्षातां ग्लहच ग्लहते घुषिकांतिकरणे घुंषते जुघुंषे केचित् घषेत्य
दुपधंपठंति अथार्हत्यंताःपरस्मैपदिनः घुषिरविशब्दने विशब्दनंप्रतिज्ञानं ततोऽन्यस्मिन्नर्थेइत्ये
के शब्देइत्यन्येपेठुः घोषति जुघोष घोषिता इरित्वादङ्वा अघुषत् अघोषीत् अक्षूव्याप्तौ अक्षोऽन्य-
तरस्यां अक्षोवाश्नुप्रत्ययःस्यात्कर्त्रर्थेसार्वधातुकेपरे पक्षेशप् अक्ष्णोति अक्ष्णुतः उप्रत्ययांतत्वादु
वङ् अक्ष्णुवंति अक्षति अक्षतः अक्षंति आनक्ष आनक्षिथ आनष्ठ अक्षिता अष्टा अक्षिष्यति स्कोःसं
ति कलोपः षढोःकःसि अक्ष्यति अक्ष्णोतु अक्ष्णुहि अक्ष्णवानि आक्ष्णोत् आक्ष्णवं अक्ष्णुयात् अ
क्ष्णुयुः अक्ष्यात् ऊदित्वाद्वेट् नेटि माभवानक्षीत् अक्षिष्टां अक्षिषुः इडभावेतु माभवानक्षीत् आष्टां आ
क्षुः तक्षूत्वक्षूतनूकरणे तनूकरणेतक्षःश्नुःस्याद्वाशब्विषये तक्ष्णोति तक्षति वा काष्ठं ततक्षिथ

ततक्ष अतक्षीत् अतक्षिष्टां अतक्षिषुः अताक्षीत् अताष्टां अताक्षुः तनूकरणे किं वाग्भिः संतक्षति भर्त्स
यतीत्यर्थः उक्ष सेचने उक्षांचकार रक्ष पालने णिक्ष चुंबने प्रणिक्षति तृक्ष स्तृक्ष णक्ष गतौ तृक्षति स्तृक्ष
ति नक्षति वक्ष रोषे संघात इत्येके मृक्ष संघाते मक्ष इत्येके तक्ष त्वचने त्वचनं संवरणं त्वचो ग्रहणं च प
क्ष परिग्रह इत्येके सूर्क्ष आदरे सुसूर्क्ष अनादर इति तु क्वाचित्कोऽपपाठः अवज्ञावहेलनमसूर्क्षणमित्य
मरः काक्षि वाक्षि माक्षि कांक्षायां द्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते च चूष पाने चुचूष तूष तुष्टौ पूष वृद्धौ
मूष स्तेये लूष रूष भूषायां शूष प्रसवे प्रसवोऽभ्यनुज्ञानं तालव्योष्मादिः यूष हिंसायां जूष च भूष अलंकारे
भूषति ऊष रुजायां ऊषांचकार ईष उंछे कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः तृतीय
षष्ठौ तालव्योष्मादी सस्मोदंत्योष्म्यादिः चकाष चखाष शिशेष शिशेषिथ शेष्टास्कः अशिक्षत् अशे
क्ष्यत् जेषतुः जझषतुः शेषतुः ववषतुः मेषतुः तीषसहलुभरुषरिषः इच्छत्यादेः परस्य तादे आर्धधा
तुकस्येड्वा स्यात् रोषिता रोष्टा रोषिष्यति रेषिता रेष्टा रेषिष्यति भष भर्त्सने इह भर्त्सनं श्वरवः भषति
बभाष उष दाहे ओषति उषविदजागृभ्योऽन्यतरस्यां एभ्यो लिट्याम्वा स्यात् ओषांचकार उवोष ऊ
षतुः ऊषुः उवोषिथ जिषु विषु मिषु सेचने जिजेष क्रादिनियमादिट् विवेषिथ विविषिव वेष्टा वेक्ष्यति
अविक्षत् पुष पुष्टौ पोषति पोषिता पोषिष्यति अपोषीत् अनिट्केषु पुष्येति श्यना निर्देशादयं सेट् अतो
न क्सः अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् श्रिषु श्लिषु प्रुषु प्लुषु दाहे श्रेषति शिश्रेष श्रेषिता श्लेषति शि
श्लेष श्लेषिता अयमपि सेट् अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः यत्त्वनिट्कारिकान्यासे

इयोर्ग्रहणमित्युक्तं तत्स्वोक्तिविरोधात् ग्रंथांतरविरोधाच्चोपेक्ष्यं पुप्रोष पुप्लोष पृषुवृषुमृषुसेचने मृषुस
हनेच इतरौहिंसासंक्लेशनयोश्च पर्षति पपर्ष पृष्यात् घृषुसंघर्षे हृषुअलीके तुसन्हसल्हसरसशब्दे
तुतोस जन्हास जल्हास ररास लसश्लेषणक्रीडनयोः घस्लृअदने अयंनसार्वत्रिकः लिट्यन्यतरस्यामि
त्यदेर्घस्लादेशविधानात् ततश्च यत्रलिंगंवचनंचास्तितत्रैवास्यप्रयोगः अत्रैवपाठः शपिपरस्मैपदेलिंगं
लृदित्करणमङि अनिट्कारिकास्वपाठोवलाद्यार्धधातुके क्वचिद्विशेष्योपादानं घसति घस्ता सःस्यार्ध
धातुके सस्यतः स्यात्सादावार्धधातुकेपरे घत्स्यति घसतु अघसत् घसेत् लिंगाद्यभावादाशिष्यस्याप्रयो
गः पुषादिद्युतादिलृदितः परस्मैपदेषु श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्पर-
स्मैपदेषु अघसत् जर्जचर्चझर्झपरिभाषणहिंसनतर्जनेषु पिसृपेसृगतौ पिपिसतुः पिपेसतुः हसेहसने
एदित्वान्नवृद्धिः अहसीत् णिशसमाधौ तालव्योष्मांतः प्रणेशति मिशमशशब्देरोषकृतेच तालव्योष्मांतौ
शवगतौ दंत्योष्म्यांतः तालव्योष्मादिः शवति अशावीत् अशवीत् शशप्लुतगतौ तालव्योष्माद्यंतः शशाश
शेशतुः शेशुः शेशिथ शसुहिंसायां दंत्योष्मांतः नशसददेत्येत्वंन शशसतुः शशसिथ शंसुस्तुतौ अयंदु
र्गतावपीतिदुर्गः नृशंसोघातुकः क्रूरइत्यमरः शशंस आशिषिनलोपः शस्यात् चहपरिकल्कने कल्कनंशा
ठ्यं अचहीत् महपूजायां अमहीत् रहत्यागे रहिगतौ रंह्यात् रंह्यात् दृहदृहिवृहवृहिवृद्धौ दर्हति ददर्ह ददृ
हतुः दृंहति ददृंह वर्हति वृंहति वृहिशब्देच वृंहितंकरिगर्जितं बृहिर् इत्येके अवृहत् अबर्हीत् तुहिर्दुहिर्
उहिर् अर्दने तोहति तुतोह अतुहत् अतोहीत् दोहति अदुहत् अदोहीत् अनिट्कारिकास्वस्यदुहेर्ग्रहणं

नेच्छंति ओहति उवोह ऊहतुः ओहिता माभवानुहत् औहीत् अर्ह पूजायां आनर्ह अथ कृपूपर्यंता अनुदात्तेतः
द्युत दीप्तौ द्योतते द्युतिस्वाप्योः संप्रसारणं अनयोरभ्यासस्य संप्रसारणं स्यात् दिद्युते दिद्युताते दिद्युतिरे
द्योतिता द्युद्भ्यो लुङि द्युतादिभ्यो लुङि परस्मैपदं वा स्यात् पुषादीति सूत्रेण परस्मैपदे अङ् अद्युतत् अ
द्योतिष्ट श्विता वर्णे श्वेतते शिश्विते अश्वितत् अश्वेतिष्ट ञिमिदा स्नेहने मेदते मिदेर्गुणः मिदेरिको गुणः
स्यादित्संज्ञक शकारादौ एशआदिशित्वाभावान्नानेन गुणः मिमिदे अमिदत् अमेदिष्ट ञिष्विदा स्नेहनमो
चनयोः मोहनयोरित्येके स्वेदते सिष्विदे अस्विदत् अस्वेदिष्ट ञिक्ष्विदा चेत्येके अक्ष्विदत् अक्ष्वेदिष्ट रुच दी-
प्तावभिप्रीतौ च रोचते सूर्यः हरये रोचते भक्तिः अरुचत् अरोचिष्ट घुट परिवर्त्तने घोटते जुघुटे अघुटत् अ
घोटिष्ट रुट लुट लुठ प्रतिघाते अरुटत् अरोटिष्ट शुभ दीप्तौ क्षुभ संचलने णभ तुभ हिंसायां आद्यो अभावे
पि नभंतामन्यके समे माभूवन्नन्यके सर्वे इति निरुक्तं अनभत् अनभिष्ट अतुभत् अतोभिष्ट इमौ दिवादौ
क्र्यादौ च स्रंसु ध्वंसु भ्रंसु अवस्रंसने ध्वंसु गतौ च अङि नलोपः अस्रसत् अस्रंसिष्ट नास्रसत्करिणां ग्रैव
मिति रघुकाव्ये भ्रंशु इत्यपि केचित् पेठुः अत्र तृतीय एव तालव्यांत इत्यन्ये भ्रशु भ्रंशु अधःपतने इति दि-
वादौ स्रंभु विश्वासे अस्रभत् अस्रंभिष्ट दंत्यादिरयं तालव्यादिस्तु प्रमादे गतः वृतु वर्तने वर्त्तते ववृते वृ
द्भ्यः स्यसनोः वृतादिभ्यः परस्मैपदं वा स्यात् स्ये सनि च न वृद्भ्यश्चतुर्भ्यः एभ्यः सकारादेरार्धधातुकस्येण्
न स्यात्तङानयोरभावे वर्त्स्यति वर्तिष्यते अवृतत् अवर्तिष्ट अवर्त्स्यत् अवर्तिष्यत वृधु वृद्धौ शृधु शब्दकु
त्सायां इमौ वृतुवत् स्यंदू प्रस्रवणे स्यंदते सस्यंदे सस्यंदिषे सस्यन्त्से सस्यंदिध्वे सस्यंध्वे स्यंदिता स्यंता वृद्

भ्यः स्यसनोरिति परस्मैपदे कृते ऊदिल्लक्षणमंतरंगमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्नवृद्भ्य इति
निषेधः स्यंत्स्यति स्यंदिष्यते स्यंत्स्यते स्यंदिषीष्ट स्यंत्सीष्ट द्युद्भ्यो लुङीति परस्मैपदपक्षे अङ् नलोपः अस्यद
त् अस्यंदिष्ट अस्यंत अस्यंत्साताम् अस्यंत्सत अस्यंत्स्यत् अस्यंदिष्यत अस्यंत्स्यत **अनुविपर्यभिनिभ्यः
स्यदतेरप्राणिषु** एभ्यः परस्याप्राणिकर्तृकस्य स्यंदतेः सस्य षो वा स्यात् अनुष्यंदते अनुस्यंदते वा जलं
अप्राणिषु किं अनुस्यंदते हस्ती अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यंदते इत्यत्रापि पक्षे षत्वं भवत्येव
प्राणिषु नेत्युक्तौ तु न स्यात् कृपू सामर्थ्ये **कृपो रो लः** कृप उः इतिच्छेदः कृपेति लुप्तषष्ठीकं पदं तत्रावर्त्तते कृ
पो यो रेफस्तस्य लः स्यात् कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लृकारसदृशः स्यात् कल्पते चक्लृपे चक्लृ
पिषे चक्लृप्से इत्यादि स्यंदिवत् **लुटि च क्लृपः** लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् तासि च क्लृपः क्लृपेः पर
स्य तासेः सकारादेरार्धधातुकस्य चेण् न स्यात्तङानयोरभावे कल्प्तासि कल्प्तास्थः कल्पितासे कल्प्तासे
कल्प्स्यति कल्पिष्यते कल्प्स्यते कल्पिषीष्ट क्लृप्सीष्ट अक्लृपत् अकल्पिष्ट अक्लृप्त अकल्प्स्यत् अकल्पिष्य
त अकल्प्स्यत वृत् वृत्तः संपूर्णो द्युतादिर्ऋतादिश्चेत्यर्थः अथ त्वरत्यंतास्त्रयोदशानुदात्तेतः षितश्च घट
चेष्टायां घटते जघटे घटादयो मित इति वक्ष्यमाणेन मित्संज्ञा तत्फलं तु णौ मितां ह्रस्व इति चिण्णमुलो
र्दीर्घोऽन्यतरस्यामिति च वक्ष्यते घटयति विघटयति कथं तर्हि कमलवनोद्घाटनं कुर्वते ये प्रविघाटयि
तारस्समुत्पतन्हरिदश्वः कमलाकरानिवेत्यादि शृणु घट संघात इति चौरादिकस्येदं न च तस्यैवार्थविशेषे मि
त्वार्थमनुवादोऽयमिति वाच्यं नान्ये मितोऽहेताविति वक्ष्यमाणनिषेधात् अहेतौ स्वार्थे णिचि ज्ञपादिपंचक

व्यतिरिक्ताश्वुरादयोमितोनेत्यर्थः व्यथभयसंचलनयोः व्यथते व्यथोलिटि व्यथोऽभ्यासस्यसंप्रसारणंस्या
ल्लिटि हलादिःशेषापवादः थस्यहलादिशेषेणानिवृत्तिः विव्यथे प्रथप्रख्याने प्रथते पप्रथे प्रसविस्तारे पप्र
से म्रदमर्दने स्खदस्खदने स्खदनंविद्रावणं क्षजिगतिदानयोः मित्वसामर्थ्यादनुपधात्वेऽपिचिण्णमुलो
र्वितिदीर्घविकल्पः अक्षज्जि अक्षाञ्जि क्षञ्जंक्षञ्जं क्षाञ्जंक्षाञ्जं दक्षगतिहिंसनयोः योऽयंवृद्धि
शेघ्र्ययोरनुदात्तेत्सुपठितस्तस्येहार्थविशेषेमित्वार्थोऽनुवादः रूपरूपायांगतोच कदिक्रदिक्लदिवैक्लव्ये वै
कल्यइत्येके त्रयोऽप्यनिदितइतिनंदी इदितइतिस्वामी कंदिक्रंदीइदितौ क्रंदक्लंदेतिचानिदिताविति मैत्रे
यः कदिक्रदिक्लदीनामाह्वानरोदनयोःपरस्मैपदेषूक्तानांपुनरिहपाठोमित्वार्थः आत्मनेपदार्थश्च जित्व
रासंभ्रमे घटादयःषितःषित्वादङ् कृत्सु वक्ष्यते अथफणांताःपरस्मैपदिनः ज्वररोगे ज्वरतिजज्वार गड
सेचने गडतिजगाड हेडवेष्टने हेडृ अनादरइत्यात्मनेपदिषुगतः सएवोत्सृष्टानुबंधोऽनूद्यतेअर्थ
विशेषेमित्वार्थं परस्मैपदिभ्योज्वरादिभ्यः प्रागेवानुवादेकर्तव्यएतन्मध्येऽनुवादसामर्थ्यात्परस्मैपदं हे
डति जिहेड हिडयति अहिडि अहीडि अनादरेतु हेडयति वटभटपरिभाषणे वटवेष्टने भटभृताविति प
ठितयोः परिभाषणेमित्वार्थोऽनुवादः नटनृत्तो इत्थमेवपूर्वमपिपठितः तत्राऽयंविवेकः पूर्वपठितस्यना
ट्यमर्थः यत्कारिषुनटव्यपदेशः वाक्यार्थाभिनयोनाट्यं घटादौतुनृत्यंनृत्तंचार्थः यत्कारिषुनर्तकव्य
पदेशः पदार्थाभिनयोनृत्यं गात्रविक्षेपमात्रंनृत्तं केचित्तुघटादौनटनृताविति पठंति गतावित्यन्ये णोपदे
शपर्युदासवाक्येभाष्यकृतानाटीतिदीर्घपाठाद्घटादिर्णोपदेशएव ष्टकप्रतिघाते स्तकति चकतृसो द

त्तिप्रतिघातयोः पूर्वपठितस्यतृप्तिमात्रेमित्यार्थोऽनुवादः आत्मनेपदेषुपठितस्यपरस्मैपदिष्वनुवादात्परस्मैप
दं करवेहसने एदित्वान्नवृद्धिः अकखीत् रगेशंकायां लगेसंगे ह्रगेल्हगेषगेष्ठगेसंवरणे कगेनोच्यते अस्या
यमर्थइतिविशिष्येनोच्यते क्रियासामान्यार्थत्वात् अनेकार्थत्वादित्यन्ये अकअगकुटिलायांगतौ कणर
णगतौ चकाण स्राण चणशणश्रणदानेच शणगतावित्यन्ये श्रथश्नथक्रथक्नथक्लथहिंसार्थाः जासिनि
प्रहणेतिसूत्रेक्राथेतिमित्वेऽपिवृद्धिर्निपात्यते क्राथयति मित्त्वंतुनिपातनात्परत्वाण्णिणमुल्लोरितिदीर्घेच
रितार्थं अक्राथि अक्रथि क्रथंक्रथं क्राथंक्राथं वनच हिंसायामितिशेषः वनुचनोच्यते वनुरत्यपूर्वएवायंधा
तुर्ननुतानादिकस्यानुवादः उदित्करणसामर्थ्यात् तेनक्रियासामान्येवनतीत्यादि प्रवनयति अनुपसृष्टस्य
तुमित्त्वविकल्पोवक्ष्यते ज्वलदीप्तौ णप्रत्ययार्थेपठिष्यमाणएवायंमित्वार्थमनूद्यते प्रज्वलयति ह्वलह्मल
चलने प्रह्वलयति प्रह्मलयति स्मृआध्याने चिंतायांपठिष्यमाणस्याध्यानेमित्वार्थोऽनुवादः आध्यानमुत्
कंठापूर्वकंस्मरणं दृभये दृविदारणेइतिक्र्यादेरयमनुवादः दृणंतंप्रेरयति दरयति भयादन्यत्रदारयति
धात्वंतरमेवेदमितिमतेतुदरतीत्यादि केचिद्घटादौअत्स्म दृत्वरइतिसूत्रेचदृइतिदीर्घस्थानेह्रस्वंपठंति
तन्नेतिमाधवः नॄनये क्र्यादिषुपठिष्यमाणस्यानुवादः नयादन्यत्रनारयति श्रापाके श्रैइतिकृतात्वस्य
श्राइत्यदादिकस्यचसामान्येनानुकरणं लुग्विकरणालुग्विकरणयोर लुग्विकरणस्यलक्षणप्रतिपदोक्त
योः प्रतिपदोक्तस्येतिपरिभाषाभ्यां श्रपयति विक्लेदयतीत्यर्थः पाकादन्यत्रश्रापयति स्वेदयतीत्यर्थः
मारणतोषणनिशामनेषुज्ञा निशामनंचाक्षुषंज्ञानमितिमाधवः ज्ञापनमात्रमित्यन्ये निशानेष्विति

पाठांतरं निशानंतीक्ष्णीकरणं एष्वेवार्थेषुजानातिर्मित् ज्ञपमिच्चेतिचुरादौ ज्ञापनंमारणादिकंचतस्यार्थः कथंवि
ज्ञापनाभर्त्सुसिद्धिमेतीति तज्ज्ञापयत्याचार्यइतिच शृणु माधवमतेऽचाक्षुषज्ञानेमित्वाभावात् ज्ञापनमा
त्रेमित्वमितिमतेतु ज्ञानियोगइतिचौरादिकस्य धातूनामनेकार्थत्वात् निशानेष्विति पठतां हरदत्तादीनाम
तेतुनकाप्यनुपपत्तिः कंपनेचलिः चलकंपनेज्वलादिः चलयतिशारवां कंपनादन्यत्रतुशीलंचालयति अन्य-
थाकरोतीत्यर्थः हरतीत्यर्थइतिस्वामी सूत्रंचालयति क्षिपतीत्यर्थः छदिरूर्जने छदअपवारणेइतियोजादि
कस्यस्वार्थेणिजभावेमित्वार्थोऽनुवादः अनेकार्थत्वादूर्जेरर्थेवृत्तिः छदंतंप्रयुंक्तेछदयति बलवंतंमाणवंतंवा
करोतीत्यर्थः अन्यत्रछादयति अपवारयंतंप्रयुंक्तेइत्यर्थः स्वार्थेणिचितु छादयति बलीभवतिप्राणीभवति
अपवारयतिवेत्यर्थः जिव्होन्मथनेलडिः लडविलासेतिपठितस्यमित्वार्थोऽनुवादः उन्मथनंज्ञापनं जिव्हाश
ब्देनषष्ठीतत्पुरुषः लडयतिजिव्हां तृतीयातत्पुरुषोवा लडयतिजिव्हया अन्येतुजिव्हाशब्देनतद्व्यापारोलक्ष्य
ते समाहारद्वंद्वोऽयं लडयतिशत्रुं लडयतिदधि अन्यत्रलाडयतिपुत्रं मदीहर्षग्लेपनयोः ग्लेपनंदैन्यंदैवादिक
स्यमित्वार्थोऽनुवादः मदयति हर्षयति ग्लेपयतिवेत्यर्थः अन्यत्रमादयतिचित्तविकारमुत्पादयतीत्यर्थः ध्वनश
ब्दे भाव्ययंमित्वार्थमनूद्यते ध्वनयतिघंटां अन्यत्रध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः अत्रभोजः दलि
बलिस्खलिरणिध्वनित्रपिक्षपयश्चेतिपपाठ तत्रध्वनिरणीउदाहृतौ दलविदारणे वलसंवरणे स्खलसंचल
ने त्रपूषलज्जायामितिगतास्तेषांणौ दलयति वलयति स्खलयति त्रपयति क्षैक्षयेइति वक्ष्यमाणस्यकृतात्व
स्यपुकानिर्देशः क्षपयति स्वनअवतंसने शब्देइतिपठिष्यमाणस्यानुवादः स्वनयति अन्यत्रस्वानयति घटाद

योमितः मित्संज्ञाइत्यर्थः जनीजॄष्क्नसुरंजोमंताश्च मितइत्यनुवर्त्तते जॄषितिषिन्निर्देशाज्जीर्यतेर्ग्रहणं जॄणाने
त्क्जारयति केचित्तुजनीजॄष्णसुइतिपठित्वाष्णसुनिरसनेइतिदैवादिकमुदाहरंति ज्वलह्वलह्मलनमामनु
पसर्गाद्वा एषांमित्वंषाप्राप्तविभाषेयं ज्वलयति ज्वालयति उपसृष्टेतुनित्यंमित्वं प्रज्वलयति कथंतर्हिप्रज्वालय
ति उन्नामयतीति घञंतात्तत्करोतीतिणौ कथंसंक्रामयतीति मितांह्रस्वइतिसूत्रेवाचित्तविरागइत्यतोवेत्यनु
वर्त्यव्यवस्थितविभाषाश्रयणादितिवृत्तिकृत् एतेनरजोविश्रामयन् राज्ञांधुर्यान्विश्रामयेतिसइतिव्याख्यातं
ग्लास्नावनुवमांच अनुपसर्गादेषांमित्वंवास्यात् आद्ययोरप्राप्तेइतरयोःप्राप्तेविभाषा नकम्यमिचमां अमंत
त्वात्प्राप्तंमित्वमेषांनस्यात् कामयते कामयति आमयति चामयति शमोऽदर्शने शाम्यतिर्दर्शनेमिन्नस्यात्
निशामयतिरूपं अन्यत्रतु प्रणयिनोनिशमय्यवधूःकथाः कथंतर्हि निशामयतद्युत्सर्त्तिविस्तराकूदतोममेति
शमआलोचनेइतिचौरादिकस्य धातूनामनेकार्थत्वाच्छ्रवणेवृत्तिःशाम्यतिवत् यमोऽपरिवेषणे यच्छतिर्मो
जनतोऽन्यत्र मिन्नस्यात् आयामयति ह्राययति व्यापारयतिवेत्यर्थः परिवेषणेतुयमयतीब्राह्मणान् भोज
यतीत्यर्थः पर्यवसितंनियमयन्नित्यादितुनियमवच्छब्दात्तत्करोतीतिणौबोध्यं स्खदिरवपरिभ्यांच मिन्नेत्ये
व अवस्खादयति परिस्खादयति अपावपरिभ्यइतिन्यासकारः स्वामीतुनकम्यमीति नञसुत्तरत्रिसूत्र्यामनु
वर्त्यशमअदर्शनेइतिविच्छेदय मस्त्वपरिवेषणेमित्वमाह तन्मतेपर्यवसितंनियमयन्नित्यादिसम्यगेव उपस्स
ष्टस्यस्खदेश्चेदवादिपूर्वस्येतिनियमात् प्रस्खादयतीत्याह तस्मात्सूत्रद्वयेउदाहरणप्रत्युदाहरणयोर्व्यत्यासः
फलितः इदंचमतंवृत्तिन्यासादिविरोधादुपेक्ष्यं फणगतौ नेतिनिवृत्तमसंभवात् निषेधात्पूर्वमसोनपठितः

फणादिकार्यानुरोधात् फणांचस्सप्तानां एषांवाएत्वाभ्यासलोपौस्तः किति लिटि सेटि थलि च फेणतुः फेणुः फेणिथ पफणतुः पफणुः पफणिथ फणयति वृत् घटादिः समाप्तः फणेःप्रागेव वृदित्येके तन्मतेतु फाणयतीत्येव राजृदीप्तौ स्वरितेत् राजति राजते रराजतुः रेजतुः रेजुः रेजे रराजे अतइत्यनुवृत्तावपिविधानसामर्थ्यादात एत्वं टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ अनुदात्तेतः भ्राजतेरिहपाठःफणादिकार्यार्थः पूर्वपाठस्तु व्रश्चादिषत्वाभावार्थः तत्राहिराजिसाहचर्यात्फणादेरेवग्रहणं भ्रेजे बभ्राजे वाभ्राशेतिश्यन्वा भ्राश्यते भ्राशते भ्रेशे बभ्राशे भ्लाश्यते भ्लाशते भ्लेशे बभ्लाशे द्वावपीमौतालव्यांतौ स्यमुस्वनध्वनशब्दे स्यमादयःक्षरस्यंतः परस्मैपदिनः स्येमतुः सस्यमतुः अस्यमीत् स्वेनतुः सस्वनतुः अस्वानीत् अस्वनीत् विष्वणति अवष्वणति सशब्दंभुंक्तइत्यर्थः वेश्चस्वनइतिषत्वं फणादयोगताः दध्वनतुः षमष्टमअवैक्लव्ये सषाम तष्टाम ज्वलदीप्तौ अतोलरांतस्य अज्वालीत् चलकंपने जलघातने घातनंतैक्ष्ण्यं जलति टलट्वलवैक्लव्ये ष्ठलस्थाने हलविलेखने णलगंधे बंधनइत्येके पलगतौ पलति बलप्राणनेधान्यावरोधेच बेलतुः बेलुः पुलमहत्वे पोलति कुलसंस्त्यानेबंधुषु संस्त्यानंसंघातः बंधुशब्देनतद्व्यापारोगृह्यते कोलति चुकोल शलहुलपत्लृगतौ शशाल जुहोल पपात पेततुः पतिता पतस्पुम् अङिपरे अतत्तत् नेर्गदेतिणत्वं प्रण्यपसत् क्वथेनिष्पाके क्वथति चक्वाथ अक्वथीत् पथेगतौ अपथीत् मथेविलोडने मेथतुः अमथीत् टुवमउद्गिरणे अत्रेघनिपातनाद्वृत्तइत्वमितिसुधाकरः ववाम ववमतुः वादित्वादेत्वाभ्यासलोपौन भागवृत्तौसेवतुरित्याद्यप्युदाहृतं तद्भाष्यादौनदृष्टं भ्रमुचलने वाभ्राशेतिश्यन्वा भ्रम्यति भ्रमति भ्राम्यतीतितुदिवादर्वं

क्ष्यते वाज्रृभ्रमुभ्रसां एषामेत्वाभ्यासलोपौवाक्तः किटिलिटिसेटिथलिच भ्रेमतुः बभ्रमतुः अभ्रमीत् क्षरसं
चलने अक्षारीत् अथद्वावनुदात्तेतौ षहमर्षणे परिनिविभ्यइतिषत्वं परिहषते सेहे सहिता तीषसहेति
वेट् इडभावेढत्वधत्वष्टुत्वढलोपाः सहिवहोरोदवर्णस्य अनयोरवर्णस्यऔत्स्यात्ढलोपे सोढः सोढ्रूप
स्यसहेःसस्यषत्वंनस्यात् परिसोढा सिवादीनांवाड्व्यवायेऽपि परिनिविभ्यः परेषांसिवादीनांसस्यषोवा
स्यादड्व्यवायेऽपिपर्यषहत पर्यसहत रमक्रीडायां रमे रेमिषे रंता रंस्यते रंसीष्ट अरंस्त अथकसंताःपरस्मै
पदिनः षद्लृविशरणगत्यवसादनेषु पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदांपिबजिघ्रधमति
ष्ठमनयच्छपश्यर्च्छधौशीयसीदाः पादीनांपिबादयःस्फुरित्संज्ञकशकारादौप्रत्ययेपरे सीदति ससाद
सेदतुः सेदिथ ससत्थ सत्ता सत्स्यति लृदित्वादङ् असदत् सदिरप्रतेः निषीदति न्यषीदत् सदेःपरस्यलिटि
सदेरभ्यासात्परस्य षत्वंनस्याल्लिटि निषसाद निषेदतुः शद्लृशातने विशीर्णतायामयं शातनंतुविषयतया
निर्दिश्यते शदेःशितः शिद्भाविनोऽस्मादात्मनेपदंस्यात् शीयते शशाद शेदतुः शेदिथ शशत्थ शत्ता अशद
त् क्रुशआह्वानेरोदनेच क्रोशति क्रोष्टा श्लेःक्सः अक्रुक्षत् कुचसंपर्चनकौटिल्यप्रतिष्टंभविलेखनेषु कोचति
चुकोच बुधअवगमने बोधति बोधिता बोधिष्यति रुहबीजजन्मनि प्रादुर्भावेच रोहति रुरोह रुरोहिथ
रोढा रोक्ष्यति अरुक्षत् कसगतौ अकसीत् अकासीत् वृत् ज्वलादिगणःसमाप्तः अथगूहत्यंताः स्वरि
तेतः हिक्कअव्यक्तेशब्दे हिक्कति हिक्कते अंचुगतौयाचनेच अंचति अंचते अचुइत्येके अचिइत्यपरे टुया
चृयाच्ञायां याचति याचते रेटृपरिभाषणे रेटति रेटते चतेचदेयाचने चचात चेते अचतीत् चचा

द च्वेदे अच्वदीत् श्रोथृपर्याप्तौ पुश्रोथ पुश्रोथे मिदृमेदृमेधाहिंसनयोः मिमेद मिमिदे मिमेदे थांताविमाविति
स्वामी नमामिमेथ धांताविति न्यासः मेधृसंगमेच्च मेधति मिमेधे णिदृणेदृकुत्सासन्निकर्षणयोः निनेद नि
निदतुः निनिदे निनेदे श्रृधुमृधुउंदने उंदनं क्लेदनं शर्धति शर्धते शर्धिता मर्धति मर्धते मर्द्धिता बुधिबोधने
बोधति बोधते इरित्वादङ्वा अबुधत् अबोधीत् अबोधिष्ट दीपजनेतिच्चिण्तुनभवति पूर्वोत्तरसाहचर्
र्येणदेवादिकस्यैव तत्रग्रहणात् उबुंदिर्निशामने निशामनंज्ञानं बुबुंद बुबुंदे अबुदर् अबुंदीत् वेणृगति
ज्ञानचिंतानिशामनवादित्रग्रहणेषु वेणति वेणते नांतोऽप्ययं खनुअवदारणे खनति खनते गमहनजन
खनघसांलोपः क्डिःत्यनङि एषामुपधायालोपः स्यादजादौ क्ङितिनत्वङिच्चखनतुः येविभाषा खायात् ख
न्यात् चीवृआदानसंवरणयोः चिचीव चिचीवे चायृपूजा निशामनयोः व्ययगतौ अव्ययीत् दाशृदाने ददाश
ददाशे भेषृभये गतावित्येके भेषति भेषते भ्रेषृभ्लेषृगतौ असगतिदीप्त्यादानेषु असति असते आस आसे
अयंषांतोऽपि स्पशबाधनस्पर्शनयोः स्पर्शनंग्रथनं स्पशति स्पशते लषकांतौ वाभ्राशेतिश्यन्वा लष्यति
लषति लेषे चषभक्षणे छषहिंसायां चच्छषतुः चच्छषे झषआदानसंवरणयोः भ्रक्षभ्लक्षअदने दाशृ दाने
मान्दृमाने गुहूसंवरणे ऊदुपधायागोहः गुहउपाधायाऊत्स्यात् गुणहेतावजादौ प्रत्ययेपरे गूहति गूहते ऊदि
त्वादिड्वा गूहिता गोढा गूहिष्यति घोक्ष्यति गूहेत् गुह्यात् अगूहीत् इडभावेक्सः अघुक्षत् लुग्वादुहदिह
लिहगुहामात्मनेपदेदंत्ये एषांक्सस्यलुग्वास्यादंत्येतङि दत्वधत्वष्टुत्वढलोपदीर्घाः अगूढ अघुक्षत स्क-
स्याचीत्यंतलोपः अघुक्षातां अघुक्षत अगुड्वहि अघुक्षावहि अघुक्षामहि अथाजंताउभयपदिनः श्रि

ञ्सेवायां श्रयति श्रयते शिश्राय शिश्रियतुः श्रयिता णिश्रीतिचङ् अशिश्रियत् भृञ्भरणे भरति बभार बभ्र-
तुः बभर्थ बभृव बभृषे भर्त्ता ऋद्धनोःस्ये ऋतोहंतेश्चस्यस्यइट्स्यात् भरिष्यति रिङ्शयग्लिंक्षु शेयकियादा
वार्धधातुकेलिङिचऋतोरिङादेशःस्यात् रीङिम्रुते रिङ्विधिसामर्थ्याद्दीर्घोनभ्रियात् उश्च ऋवर्णात्परो
झलादीलिङ्तङ्परःसिच्चेत्येतौकितौस्तः भृषीष्ट भृषीयास्तां अभार्षीत् अभार्ष्टां अभार्षुः ह्रस्वादंगात्
सिचोलोपःस्याज्झलि अभृत अभृषातां अभृथाः अभरिष्यत हृञ्हरणे हरणंप्रापणंस्वीकारःस्तेयंनाशनं
च जहर्थ जह्रिषे हर्त्ता हरिष्यति धृञ्धारणे धरति अधार्षीत् अधृत णीञ्प्रापणे निनयिथ निनेथ निन्यिषे

अथाजंताःपरस्मैपदिनः धेट्पाने धयति आदेचउपदेशेऽशिति उपदेशेएजंतस्यधातोरात्वंस्यान्नतुशिति
आतऔणलः आदंताद्धातोर्णलऔकारादेशःस्यात् दधौ आतोलोपइटिच अजाद्योरार्धधातुकयोःक्ङि-
दिटोःपरयोरातोलोपःस्यात् द्वित्वात्परत्वाल्लोपेप्राप्ते द्विर्वचनेऽचीतिनिषेधः द्वित्वेकृतेआतोलोपः दधतुः दधुः
दधिथ दधाथ दधिव धाता दाधाघ्वदाप् दारूपाधारूपाश्चधातवोघुसंज्ञाःस्युःदाप्दैपौविना एर्लिङि घुसं
ज्ञानांमास्थादीनांचएत्वंस्यादार्धधातुकेकितिलिङि धेयात् धेयास्तां धेयासुः विभाषाधेट्श्व्योः आभ्यांश्च्
लेश्चङ्वास्यात्कर्तृवाचिनिलुङिपरे चङीतिद्वित्वं अदधत् अदधतां विभाषाघ्राधेट्शाच्छासः एभ्यःसि
चोलुग्वास्यात्परस्मैपदेपरेअधात् अधातां अधुः यमरमनमातांसक्च एषांसक्स्यात्एभ्यःसिचइट्स्यात्
परस्मैपदेषु अधासीत् अधासिष्टां अधासिषुः ग्लैम्लैहर्षक्षये हर्षक्षयोधातुक्षयः ग्लायति जग्लौ जग्लिथ
जग्लाथ वान्यस्यसंयोगादेः घुमास्थादेरन्यस्यसंयोगादेर्धातोरातएत्वंवास्यादार्धधातुकेकितिलिङि ग्लाया

त् ग्लेयात् अग्लासीत् म्लायति धैन्यक्करणे न्यक्करणंतिरस्कारः द्रैस्वप्ने ध्रैतृप्तौ ध्यैचिंतायां रैशब्दे ष्टैस्त्येशब्द
संघातयोः स्त्यायति षोपदेशस्यापिसत्वेकृतेरूपंतुल्यं षोपदेशफलंतुतिष्ट्यासति अनिष्ट्यपदित्यत्रषत्वं खैखन
दने क्षैजैषैक्षये क्षायति जायति जजौ सायति ससौ साता घुमास्थेत्यत्रविभाषाघ्राधेडित्यत्रचस्यतेरेवग्रहणं
नत्वस्य तेनैत्वसिज्लुकौन सायात् असासीत् कैगैशब्दे शैश्रैपाके पैओवैशोषणे पायात् अपासीत् घुमास्थे
तीत्वंतदपवादएर्लिङीत्येत्वंगातिस्थेतिसिज्लुक्चन पारूपस्यलाक्षणिकत्वात् ष्टैवेष्टने स्तायति ष्णैवेष्टने
शोभायांचेत्येके स्नायति दैपृशोधने दायति अघुत्वादेत्वसिज्लुकौन दायात् अदासीत् पापाने पाघ्रेतिपि
बादेशः तस्यादंतत्वान्नोपधागुणः पिबति पेयात् अपात् घ्रागंधोपादाने जिघ्रति घ्रेयात् घ्रायात् अघ्रासी
त् अघ्रात् ध्माशब्दाग्निसंयोगयोः धमति ष्ठागतिनिवृत्तौ तिष्ठति स्थादिष्वभ्यासेतिषत्वं अधितष्ठौ उपसर्गा
दितिषत्वं अधिष्ठाता स्थेयात् म्नाअभ्यासे मनति दाण्दाने प्रणियच्छति देयात् अदात् ह्वृकौटिल्ये ह्वरति ऋ
तश्चसंयोगादेर्गुणः ऋदंतस्यसंयोगादेरंगस्यगुणः स्याल्लिटि किदर्थमपीदंपरत्वाण्णल्यपिभवति रपरत्वं उ
पधावृद्धिः जह्वार जह्वरतुः जह्वरुः जह्वर्त ह्वर्ता ऋद्धनोः स्ये ह्वरिष्यति गुणोऽर्तिसंयोगाद्योः अर्तेःसंयो
गादेर्ऋदंतस्यचगुणःस्याद्यक्यादावार्धधातुकेलिङिच ह्वर्यात् अह्वार्षीत् अह्वार्ष्टां स्वृशब्दोपतापयोः स्व
रतिस्वृतीतिवेट् सस्वरिथ सस्वर्थ वमयोस्तु श्र्युकःकिति श्रिञएकाचउगंताच्चपरयोर्गित्किताेरिण्नस्या
त् परमपिस्वरत्यादिविकल्पंबाधित्वापुरस्तात्प्रतिषेधकांडारंभसामर्थ्यादनेननिषेधेप्राप्ते क्रादिनियमा
न्नित्यमिट् सस्वरिव सस्वरिम परत्वादृद्धनोरितिनित्यमिट् स्वरिष्यति स्वर्यात् अस्वारीत् अस्वारिष्टां अस्वा

र्षीत् अस्वार्ष्टां स्मृ चिंतायां दृ संवरणे सृ गतौ ऋदित्वान्नेट् ससर्थ ससृव रिङ् स्रियात् असार्षीत् असार्ष्टां सर्त्ति
शास्त्यर्त्तिभ्यश्च एभ्यश्च्लेरङ् स्यात्कर्त्रर्थे लुङि इह लुसशपा शासिना साहचर्यात्सर्त्यर्त्ती जौहोत्यादिकावेव
गृह्येते तेन भ्वादिधोर्नाङ् शीघ्रगतौ तु पाघ्राध्मेति शीति धौरादेशः धावति ऋ गतिप्रापणयोः ऋच्छति ऋच्छत्यृतां
तौदादिक ऋच्छ ऋ धातोर्ॠतां च गुणः स्याल्लिटि णलि प्राग्वदुपधावृद्धिः आर आरतुः आरुः इडत्यर्त्तिव्य
यतीनां अदऋव्येञ् एभ्यस्थलो नित्यमिट् स्यात् आरिथ अर्त्ता अरिष्यति अर्यात् आर्षीत् आर्ष्टां गृ घृ सेच
ने गरति जगार जगर्थ जग्रिव रिङ् ग्रियात् अगार्षीत् ध्वृ हूर्छने स्रु गतौ सुस्रोथ सुस्रुव स्रूयात् णिश्रीति च
ङ् लघूपधगुणादंतरंगत्वादुवङ् असुस्रुवत् षु प्रसवैश्वर्ययोः प्रसवोऽभ्यनुज्ञानं सुषविथ सुषोथ सुषुवि
व सोता स्तुसुधूञ्भ्यः परस्मैपदेषु एभ्यः सिच इट् स्यात्परस्मैपदेषु असावीत् पूर्वोत्तराभ्यां जिज्यां साह
चर्यात्सुनोतेर्ग्रहणमिति पक्षे असौषीत् श्रु श्रवणे श्रुवः शृ च श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शपोऽ
पवादः श्नोर्ङित्वाद्धातोर्गुणो न शृणोति शृणुतः हुश्नुवोः सार्वधातुके जुहोतेः श्नुप्रत्ययांतस्यानेकाचोऽ ग
स्य च संयोगपूर्वो वर्णस्तस्य यण् स्यादजादौ सार्वधातुके परे उवङोऽपवादः शृण्वंति शृणोमि शृण्वः शृ
णुवः शृण्मः शृणुमः शुश्रोथ शुश्रुव शृणु शृणवानि शृणुयात् श्रूयात् अश्रौषीत् ध्रु स्थैर्ये ध्रवति अयं
कुटादौ गत्यर्थोऽपि द्रु गतौ दुद्रोथ दुद्रविथ दुद्रोथ दुद्रुव णिश्रीति चङ् अदुद्रुवत् जि ज्रि अभिभवे अ
भिभवो न्यूनीकरणं न्यूनीभवनं च आद्ये सकर्मकः शत्रून्जयति द्वितीये त्वकर्मकः अध्ययनात्पराजय
ते अध्येतुं ग्लायतीत्यर्थः विपराभ्यां जेरिति तङ् पराजेरसोढ इत्यपादानत्वं अथ ङांताङिंतः ष्मिङ्

ईषद्धसने स्मयते सिष्मिये सिष्मियिद्वे सिष्मियिध्वे गुङ् अव्यक्तेशब्दे गवते जुगुवे गाङ् गतौ गाते गाते गाते इटएत्वेकृते धृङ्ङि गे लङ् इटि अगे गेत गे याताम् गेरन् गासीष्ट गाङ्कुटेतिसूत्रे इङादेशस्येव गाङोग्रहणान्न त्वस्य तेनाङित्वात् घुमास्थेतीत्वं न अगास्त अदादिकोऽयमिति हरदत्तादयः फलेतुनभेदः कुङ् घुङ् उङ् ङुङ् शब्दे अन्येतु उङ् कुङ् खुङ् गुङ् घुङ् ङुङ् इत्याहुः कवते चुकुवे घवते अवते ऊवे वार्णादांगंबलीय इत्युवङ् ततः सवर्णदीर्घः ओता ओष्यते ओषीष्ट औष्ट ङवते शुङुवे ङोता च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ क्रुङ् इत्येके रुङ् गतिरेषणयोः रेषणं हिंसा रुरुवे रुविताप्से धृङ् अवध्वंसने धरते दध्रे मेङ् प्रणिदाने प्रणिदानं विनिमयः प्रत्यर्पणं च प्रणिमयते नेर्गदेतिणत्वं तत्र घुप्रकृतिमाङिन्ति पठित्वाङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात् देङ् रक्षणे दयते दयतेर्दिगि लिटि दिग्यादेशेन द्वित्व बाधनमिष्यतइति वृत्तिः दिग्ये दिग्याते दिग्यिरे स्थाघ्वोरिच्च अनयोरिदादेशः स्यात् सिच्चकित्स्यात् अदित अदिथाः अदिषि श्येङ् गतौ श्यायते शश्ये प्येङ् वृद्धौ प्यायते पप्ये प्याता त्रैङ् पालने त्रायते तत्रे पूङ् पवने पवते पुपुवे पविता मूङ् बंधने मवते मविता डीङ् विहायसागतौ डयते डिड्ये डयिता तॄ प्लवनतरणयोः ऋत इद्धातोः ऋदंतस्य धातोरंगस्येत्स्यात् इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन तरति ऋच्छत्यॄतामिति गुणः तॄफलेत्येवं तेरतुः तेरुः वॄतोवा वृङ् वृञ्भ्यामॄदंताच्चेटोदीर्घोवा स्यान्नतु लिटि तरिता तरीता अलिटीति किं तेरिथ हलिचेति दीर्घः तीर्यात् सिचिच परस्मैपदेषु अत्रवॄतइटोदीर्घोन अतारिष्टां अथात्मनेपदिनोदात्तेतः गुप गोपने तिज निशाने मान पूजायां बध बंधने गुप्तिज्किद्भ्यः सन् मान्बधदान्शान्

भ्योदीर्घश्चाभ्यासस्य सूत्रद्वयोक्तेभ्यः सन् स्यात् मानादीनामभ्यासस्ये कारस्य दीर्घश्च गुपेः निंदायां
तिजेः क्षमायां कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च मानेर्जिज्ञासायां बधेश्चित्तविकारे
दानेरार्जवे शानेर्निशाने सनाद्यंता इति धातुत्वं सन्यङोः सन्नंतस्य यङंतस्य च प्रथमस्यैकाचो द्वे स्तोऽ
जादेस्तु द्वितीयस्य अभ्यासकार्यं गुपिप्रभृतयः कित् भिन्नानिंदाद्यर्थका एवानुदात्तेतो दानशानौ च
स्वरितेतौ एते नित्यसन्नंताः अर्थांतरे त्वननुबंधकाः क्षुरादयः अनुबंधस्य केवलेऽचरितार्थत्वात्सन्नं
तात्तङ् धातोरित्यविहितत्वात्सनोऽनार्धधातुकत्वं तेनेट्गुणौ न जुगुप्सते जुगुप्सांचक्रे तितिक्ष
ते मीमांसते भष्भावः चर्त्वं बीभत्सते रभ राभस्ये आरभते आरेभे रब्धा रप्स्यते डुलभष् प्राप्तौ लभ
ते षंज परिष्वंगे दंशसंजस्वंजां शपि रंजेश्च एषां शपि नलोपः स्वजते परिष्वजते श्रंथिग्रंथिदंभिस्वंजी
नां लिटः कित्त्वं वेति व्याकरणांतरं देभतुः सस्वजे इत्यादि भाष्योदाहरणात् एकादेशानुमत्या इहाप्या
श्रीयते सदेः परस्य लिटीति सूत्रे स्वंजेरुपसंख्यानं अतोऽभ्यासात्परस्य षत्वं न परिषस्वजे परिषस्वंजे
सस्वजिषे सस्वंजिषे स्वङ्क्ता स्वङ्क्ष्यते स्वजेत स्वङ्क्षीष्ट प्रत्यषङ्क्त प्राक्सितादिति षत्वं परिनि
विभ्यस्तु सिवादीनां वेति विकल्पः एतदर्थमेवोपसर्गात्सुनोतीत्येव सिद्धे स्तु स्वंजोः परिनिविभ्य इत्य
त्र पुनरुपादानं पर्यषङ्क्त पर्यस्वङ्क्त हद पुरीषोत्सर्गे हदते जहदे हत्ता हत्स्यते हदेत हत्सीष्ट अहत्त
अथ परस्मैपदिनः ञिक्ष्विदा अव्यक्ते शब्दे स्कंदिर् गतिशोषणयोः चस्कंदिथ चस्कंत्थ स्कंत्ता स्कन्-
त्स्यति नलोपः स्कद्यात् इरित्वादङ् वा अस्कदत् अस्कान्त्सीत् अस्कांतां अस्कान्त्सुः वेः स्कंदेरनिष्ठा-

यां षत्वंवास्यात् कृत्येवेदं अनिष्ठायामितिपर्युदासात् विष्कंता विस्कंता निष्ठायांतुविस्कन्नः परे
श्च अस्मात्परस्यस्कंदेःसस्यषोवास्यात् योगविभागादनिष्ठायामितिनसंबध्यते परिष्कंदति परिस्कं
दति परिष्कण्णः परिस्कन्नः षत्वपक्षेणत्वं नचपदद्वयाश्रयतयाबहिरंगत्वात्षत्वस्यासिद्धत्वं धातू
पसर्गयोःकार्यमंतरंगमित्यभ्युपगमात् पूर्वंधातुरुपसर्गेणयुज्यते ततःसाधनेनेतिभाष्यं पूर्वंसाध
नेनेतिमतांतरेतु नणत्वं यभमैथुने येभिथ ययब्ध यब्धा यप्स्यति अयाप्सीत् णमप्रह्वत्वेशब्देच ने
मिथ ननंथ नंता अनंसीत् अनंसिष्टां गम्लृसृप्लृगतौ इषुगमियमांछः एषांछःस्याच्छितिपरे गच्छ
ति जगाम जग्मतुः जगमिथ जगंथ गंता गमेरिट्परस्मैपदेषु गमेःपरस्यसकारादेरार्धधातुकस्येट्
स्यात् गमिष्यति लृदित्वादङ् अनङीतिपर्युदासान्नोपधालोपः अगमत् सर्पति ससर्प अनुदात्तस्य
चर्दुपधस्यान्यतरस्यां उपदेशेअनुदात्तोयऋदुपधस्तस्याम्वास्याज्झलादावकितिपरे स्रप्ता सर्प्ता
स्रप्स्यति सर्प्स्यति असृपत् यमउपरमे यच्छति येमिथ ययंथ यंता अयंसीत् अयंसिष्टां तपसंतापे
तप्ता अताप्सीत् निसस्तपतावनासेवने षःस्यात् आसेवनंपौनःपुन्यंततोऽन्यस्मिन्विषये निष्ट
पति त्यजहानौ तत्याजिथ तत्यक्थ त्यक्ता अत्याक्षीत् षंजसंगे दंशसंजस्वंजांशपि सजति संक्ता
दृशिर्प्रेक्षणे पश्यति विभाषासृजिदृशोः अस्यांथलइड्वास्यात् सृजिदृशोर्झल्यमकिति अन
योरमागमःस्याज्झलादावकिति ददृष्ठ ददर्शिथ द्रष्टा द्रक्ष्यति दृश्यात् इरित्वादङ्वा ऋदृशोऽङिगु
णः ऋवर्णांतानांदृशेश्चगुणःस्यादङि अदर्शत् अङभावे नदृशः दृशेश्च्लेःक्सोन अद्राक्षीत् दंश

दशने दशनं दंष्ट्राव्यापारः पृषोदरादित्वादनुनासिकलोपः अतएव निपातनादित्येके तस्याप्यत्रैव तात्प
र्यं अर्थनिर्देशस्याधुनिकत्वात् दंशसंजेति नलोपः दशति ददंशिथ ददंष्ठ दंष्टा दङ्क्ष्यति दशेत् दश्या
त् अदाङ्क्षीत् कृषविलेखने विलेखनमाकर्षणं क्रष्टा कर्ष्टा क्रक्ष्यति कर्क्ष्यति स्पृशमृशकृषतृपदृ
पां च्लेः सिज्वा वक्तव्यः अक्राक्षीत् अक्राष्टां अकार्क्षीत् अकार्ष्टां अकार्क्षुः पक्षे क्सः अकृक्षत् अकृक्षा
तां अकृक्षन् दहभस्मीकरणे देहिथ ददग्ध दग्धा धक्ष्यति अधाक्षीत् अदाग्धां अधाक्षुः मिहसेचने
मिमेह मिमेहिथ मेढा मेक्ष्यति अमिक्षत् कितनिवासे रोगापनयने च चिकित्सति संशये प्रायेणावि
पूर्वः विचिकित्सा तु संशय इत्यमरः अस्यानुदात्तेत्वमाश्रित्य विचिकित्सत इति कश्चिदुदाजहार निवासे नुके
तयति दानखंडने शानतेजने इतो वहत्यंताः स्वरितेतः दीदांसति दीदांसते शीशांसति शीशांसते अ
र्थविशेषे सन् अन्यत्र दानयति शानयति डुपचष्पाके पचति पचते पेचिथ पपक्थ पेचे पक्ता प
क्षीष्ट षच समवाये सचति सचते भजसेवायां भेजथुः भेजिथ बभक्थ भक्ता अभाक्षीत् अभक्त रं
जरागे नलोपः रजति रजते अराङ्क्षीत् अरङ्क्त शपआक्रोशे आक्रोशो विरुद्धानुध्यानं शशाप शे
पे शप्ता अशाप्सीत् अशप्त त्विषदीप्तौ त्वेषति तित्वेष तित्विषे त्वेष्टा त्वेक्ष्यति त्विष्यात् त्विक्षीष्ट अ
त्विक्षत् अत्विक्षत अत्विक्षातां यजदेवपूजासंगतिकरणदानेषु यजति यजते लिट्यभ्यासस्यो
भयेषां वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि इयाज वचिस्वपियजादीनां
किति वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति पुनःप्रसंगविज्ञानाद्द्वित्वं ईजतुः ईजुः इय

जिथ इयष्ठ ईजे यष्टा यक्ष्यति इज्यात् यक्षीष्ट अयाक्षीत् अयष्ट टुवप् बीजसंताने बीजसंतानंक्षेत्रेविकरणंगर्भाधानंच अयंछेदनेऽपि केशान्वपति उवापऊपेवप्ता उप्यात् वप्सीष्ट प्रणयवाप्सीत् अवप्त वह प्रापणे उवाह उवहिथ **सहिवहोरोदवर्णस्य** उवोढ वोढा वक्ष्यति अवाक्षीत् अवोढां अवाक्षुः अवोढ अवक्षातां अवक्षत अवोढाः अवोढ्वं वसनिवासे परस्मैपदी वसति उवास **शासिवसिघसीनांच** इण्कुभ्यांपरस्यैषां सस्यषः स्यात् ऊषतुः ऊषुः उवसिथ उवस्थ वस्ता **सस्यार्धधातुके** वत्स्यति उष्यात् अवात्सीत् अवात्तां वेञ्तंतुसंताने वयति वयते **वेञोवयिः** वास्याल्लिटि इकारउच्चारणार्थः उवाय ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनांङितिच एषांकितिङितिचसंप्रसारणंस्यात् इतियकारस्यप्राप्ते **लिटिवयोयः** वयोयस्यसंप्रसारणंनस्याल्लिटि ऊयतुः ऊयुः **वश्चास्यान्यतरस्यांकिति** वयोयस्यवोवास्यात्किति लिटि ऊवतुः ऊवुः वयस्तासावभावात्थलिनित्यमिट् उवयिथ स्थानिवद्भावेनञित्वात्तङ् ऊये ऊवे वयादेशाभावे वेञः **वेञोनसंप्रसारणंस्याल्लिटि** ववौ ववतुः ववुः वविथ ववाथ ववे वाता ऊयात् वासीष्ट अवासीत् व्येञ्संवरणे व्ययति **नव्योलिटि** व्येञआत्वंनस्याल्लिटि वृद्धिः परमपि हलादिः शेषंबाधित्वायस्य संप्रसारणं उभयेषांग्रहणसामर्थ्यात् अन्यथावच्यादीनांग्रहयादीनांचानुवृत्त्यैवसिद्धेर्किंतेन विव्याय विव्यतुः विव्युः इडत्यर्तीतिनित्यमिट् विव्ययिथ विव्ये व्याता वीयात् व्यासीष्ट अव्यासीत् अव्यास्त ह्वेञ्स्पर्धायांशब्देच **अभ्यस्तस्यच** अभ्यस्तीभविष्यतोह्वेञः संप्रसारणंस्यात् ततोद्वित्वं जुहाव जुहुवतुः जुहुवुः जुहविथ जुहोथ जुहुवे ह्वाता हूयात् ह्वासीष्ट **लिपिसिचिह्वश्च** एभ्यश्च्लेरङ् **आत्मनेपदेष्वन्य-**

तरस्यां अतोल्लोपः अब्हत् अब्हतां अब्हासुः अथह्लोपरस्मैपदिनो वदव्यक्तायांवाचि अब्हवदति उवाद
ऊदतुः उवादिथ वदिता उद्यात् वदव्रजेतिवृद्धिः अवादीत् टुओश्विगतिवृद्ध्योः श्वयति विभाषाश्वेः श्वयतेः
संप्रसारणंवास्याल्लिटियङिच्च शुशाव शुशुवतुः श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः तेनलिट्यभ्यासस्ये
तिसंप्रसारणंन शिश्वाय शिश्वियतुः श्वयिता श्वयेत् शूयात् जॄस्तंभित्यङ्वा श्वयतेरः श्वयतेरिकारस्या
कारःस्यादङि॰ पररूपं अश्वत् अश्वतां अश्वन् विभाषाधेट्श्व्योरितिचङ्॰ इयङ॰ अशिश्वियत् ह्म्यंतेतिन
वृद्धिः अश्वयीत् इत् यजादयोवृत्ताः भ्वादिस्त्वाकृतिगणः ते नचुलुंपतीत्यादि संग्रहः इतिभ्वादयः ऋ
तेरीयङ्॰ ऋतिः सौत्रस्तस्मादीयङ् स्यात्स्वार्थे जुगुप्सायामयंधातुरितिबहवः रूपायांचेत्येके सनाद्यंता
इतिधातुत्वं ऋतीयते ऋतीयांचक्रे आयादयआर्धधातुकेवेतीयङ्भावेशेषात्करीतिपरस्मैपदं आनर्त
अर्तिष्यति आर्तीदित्यादि अदभक्षणे ह्लोपरस्मैपदिनो **अदिप्रभृतिभ्यःशपः** लुक्स्यात् अत्ति अत्तः लि
ट्यन्यतरस्यां अदोघस्लृवास्याल्लिटि जघास गमहनेत्युपधालोपः तस्यचर्विधिंप्रतिस्थानिवद्भावनिषे
धात् घस्यचर्त्वं शासिवसीतिषत्वं जक्षतुः जक्षुः घसस्तासावभावात्थलिनित्यमिट् जघसिथ आद आ
दतुः आदुः इडत्यर्तीतिनित्यमिट् आदिथ अत्ता अत्स्यति हुझल्भ्योहेर्धिः होर्झलंतेभ्यश्च हेर्धिःस्यात्
अद्धि अत्तात् अदानि अदःसर्वेषां अदःपरस्यापृक्तसार्वधातुकस्याडागमःस्यात्सर्वमतेन आदत् आत्तां
आदन् आदः आत्तं आत्त आदं आद्व आद्म अद्यात् अद्यातां अद्युः अद्यास्तां अद्यासुः **लुङ्सनोर्घस्लृ**
अदोघस्लृस्याल्लुङिसनिच लृदित्वादङ् अघसत् हनहिंसागत्योः प्रणिहंति अनुदात्तोपदेशवनतितनो

त्यादीनामनुनासिकलोपोझलिक्ङिति अनुनासिकेतिलुप्तषष्ठीकं वनतीतरेषांविशेषणं अनुनासिकांतानामेषांवनतेश्चलोपःस्याज्झलादौक्ङितिपरे यमिरमिगमिनमिहनिमन्यतयोऽनुदात्तोपदेशाः तनुक्षणुक्षिणुऋणुतृणुघृणुमनुवनुतनोत्यादयः हतःघ्नंति **हमोर्वा** उपसर्गस्थान्निमित्तात्परस्य हंतेर्नस्यणोवास्याद्मयोः परतः प्रहण्मि प्रहन्मि प्रहण्वः प्रहन्वः होर्हंतेरितिकुत्वं जघान जघ्नतुः जघ्नुः **अभ्यासाच्च** अभ्यासात्परस्य हंतेर्हस्यकुत्वंस्यात् जघनिथ जघंथ हंता ऋद्धनोरितीट् हनिष्यति हंतु हतात् हतां घ्नंतु हंतेर्जः हौपरे आभीयतयाजस्यासिद्धत्वाद्धेर्लुङ्न जहि हनानि हनाव हनाम अहन् अहतां अघ्नन् अहनं आर्धधातुकइत्यधिकृत्य **हनोवधलिङि लुङि च** वधादेशोऽदंतः आर्धधातुकइतिविषयसप्तमी तेनार्धधातुकोपदेशेअकारांतत्वादतोलोपः वध्यात् आर्धधातुकेकिं विध्यादौहन्यात् हंतेरितिणत्वं प्रहण्यात् अल्लोपस्यस्थानिवत्त्वादतोहलादेरितिन वृद्धिः अवधीत् अथचत्वारःस्वरितेतः द्विषअप्रीतौ द्वेष्टि द्विष्टे द्वेष्टा द्वेक्ष्यति द्वेक्ष्यते द्वेष्टु द्विष्टात् द्वि द्विड् द्वेषाणि द्वेषै द्वेषावहै अद्वेट् **द्विषश्च** लङोझेर्जुस्वास्यात् अद्विषुः अद्विषन् अद्वेषं द्विषीत द्विक्षीष्ट अद्विक्षत् दुहप्रपूरणे दोग्धि दुग्धः धोक्षि दुग्धे धुक्षे धुग्ध्वे दोग्धु दुग्धि दोहानि धुक्ष्व धुग्ध्वं दोहै अधोक् अदोहं अदुग्ध अधुक्षत् अधुक्षत लुग्वादुहेतिलुक्पक्षे तथासध्वंवहिषुलङ्वदपि दिहउपचये प्रणिदेग्धि दिग्धे लिहआस्वादने लेढि लीढः लिहंति लेक्षि लीढे लीढ्वे लेढु लीढि लेहानि अलेट् अलिक्षत अलीढ अलिक्षावहि अलिह्वहि चक्षिङ्व्यक्तायांवाचि अयंदर्शनेऽपि इकारोनुदात्तोयुजर्थःविचक्षणःप्रथयन् नुमत्तुन अंतोदित इति व्याख्यानात्

ङुकारस्त्वनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः तेनस्फायन्निर्मोकसंधीत्यादिसिद्धं चष्टे च
क्षाते आर्धधातुके **चक्षिङःख्याञ् वालिटि** अत्रभाष्ये ख्शादिरयमादेशः असिद्धकांडेशस्ययोवेति
स्थितं ञित्वात्पदद्वयं चख्यौ चख्ये चक्शौ चक्शे चयोर्द्वितीयाइतितुन चर्त्वस्यासिद्धत्वात् चचक्षे ख्याता
क्शाता ख्यास्यति ख्यास्यते क्शास्यति क्शास्यते अचष्ट चक्षीत ख्यायात् ख्येयात् क्शायात् क्शेयात् **अस्य**
**तिवक्तिख्यातिभ्योङ्** एभ्यश्च्लेरङ् अख्यत् अख्यत अक्शासीत् अक्शास्त वर्जनेक्शाञ्नेष्टः सम
चक्षिष्टेत्यादि अथपृच्छ्यंताअनुदात्तेतः ईरगतौ कंपनेच ईर्त्ते ईरांचक्रे ईर्त्ता ईर्षे ईर्ध्वे ऐरिष्ट ईडस्तुतौ ई
ट्टे ईशःसे **ईडजनोर्ध्वेच** ईशीडजनांसेध्वेशब्दयोःसार्वधातुकयोरिट् स्यात् योगविभागोवैचित्र्यार्थः
ईडिषे ईडिध्वे एकदेशविकृतस्यानन्यत्वात् ईडिष्व ईडिध्वं विकृतिग्रहणेनप्रकृतेरग्रहणात् ऐड्ध्वं ईश
ऐश्वर्ये ईष्टे ईशिषे ईशिध्वे आसउपवेशने आस्ते **दयायासश्च** आसांचक्रे आस्स्व आध्वं आसिष्ट आ
ङःशासइच्छायां आशास्ते आशासाते आङ्पूर्वत्वंप्रायिकं तेननमोवाकंप्रशास्महे इतिसिद्धं वसआच्छा
दने वस्ते वस्से वध्वे ववसे वसिता कसिगतिशासनयोः कंस्ते कंसाते कंसते अयमनिदिदित्येके क
स्ते तालव्यांतोऽप्यनिदित् कष्टे कशाते कक्षे कड्ढ्वे णिसिचुंबने निंस्ते दंत्यांतोऽयं आभरणस्तुताल
व्यांतइतिबभ्राम णिजिशुद्धौ निंक्ते निंक्षे निंजिता शिजिअव्यक्तेशब्दे शिंक्ते पिजिवर्णे संपर्चनइत्ये
के उभयत्रेत्यन्ये अवयवेइत्यपरे अव्यक्तेशब्देइतीतरे पिङ्क्ते पृजीत्येके पृङ्क्ते वृजीवर्जने दंत्योष्ठ्या



दिः ईदित् वृक्ते वृजाते वृक्षे इदिदित्यन्ये वृङ्क्ते पृचीसंपर्चने पृक्ते षूङ्प्राणिगर्भविमोचने सूते

सुषुविषे सोता सविता भूसुवोरिति गुणनिषेधः सूयते सविषीष्ट सोषीष्ट असविष्ट असोष्ट शीङ् स्वप्ने
शीङः सार्वधातुके गुणः क्ङिति चेत्यस्यापवादः शेते शयाते शीङो रुट् शीङः परस्य झादेशस्य तो रुडागमः
स्यात् शेरते शेषे शेध्वे शये शेवहे शिश्ये शयिता अशयिष्ट अथ कौत्यंताः परस्मैपदिनः ऊर्णुस्तूभय
पदी युमिश्रणे अमिश्रणे च उतो वृद्धिर्लुकि हलि लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके
न त्वभ्यस्तस्य यौति युतः युवंति युयाव यविता युयात् इह उतो वृद्धिर्न भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्या
ख्यानाद्विशेषविहितेन ङित्वेन पित्वस्य बाधनात् यूयात् अयावीत् रु शब्दे तुरुस्तुशम्यमः सार्वधा
तुके एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड् वा स्यात् नाभ्यस्तस्येत्यतो ऽनुवृत्तिसंभवे पुनः सार्वधा
तुकग्रहणमपिदर्थं रवीति रौति रुवीतः रुतः हलादेः किं रुवंति तिङः किं शाम्यति सार्वधातुके किं आशिषि
रूयात् विध्यादौ तु रुयात् रुवीयात् अरावीत् अरविष्यत् तु इति सौत्रो धातुः गतिवृद्धिहिंसासु अयं च लुग्वि
करण इति स्मरंति तवीति तौति तुवीतः तुतः तोता तोष्यति णु स्तुतौ नौति नविता टुक्षु शब्दे क्षौति क्षवि-
ता क्ष्णु तेजने क्ष्णौति क्ष्णविता ष्णु प्रस्रवणे स्नौति सुष्णाव स्नविता स्नुयात् स्नूयात् ऊर्णुञ् आच्छादने
ऊर्णोतेर्विभाषा वृद्धिर्वा स्याद्धलादौ पिति सार्वधातुके ऊर्णौति ऊर्णोति ऊर्णुतः ऊर्णुवंति ऊर्णुते ऊर्णु
वाते ऊर्णुवते ऊर्णोतेराम्नेति वाच्यं नंद्राः संयोगादयः अचः पराः संयोगादयो नदरा द्विर्न भवंति नुशब्द
स्य द्वित्वं णत्वस्यासिद्धत्वात् पूर्वत्रासिद्धीयमद्विर्वचन इति त्वनित्यं उभौ साभ्यासस्येति लिंगात् ऊर्णु
नाव ऊर्णुनुवतुः ऊर्णुनुवुः विभाषोर्णोः इडादिप्रत्ययो ङिद्वा स्यात् ऊर्णुनुविथ ऊर्णुनविथ ऊर्णुविता

ऊर्णोतु ऊर्णौतु ऊर्णवानि ऊर्णवै **गुणोऽपृक्ते** ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके वृद्ध्यपवा
दः और्णोत् और्णोः ऊर्णुयात् ऊर्णुयाः इह वृद्धिर्न ङिच्चपिन्नेति भाष्यात् ऊर्णूयात् ऊर्णुविशीष्ट ऊर्णुविषी
ष्ट ओर्णुवीत् और्णुविष्टां **ऊर्णोतेर्विभाषा** इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् पक्षे गुणः और्णा
वीत् और्णाविष्टां और्णाविषुः और्णवीत् और्णविष्टां और्णविषुः द्युअभिगमने द्यौति द्योता षुप्रसवैश्व
र्ययोः प्रसवोऽभ्यनुज्ञानं सोता असौषीत् कुशब्दे कोता ष्टुञ्स्तुतौ स्तौति स्तवीति स्तुतः स्तुवीतः स्तु
ते स्तुवीते स्तुसुधूञ्भ्य इत्यनीट् अस्तावीत् प्राक्सितादिति षत्वं अभ्यष्टौत् सिवादीनांवा पर्यष्टौत् पर्य
स्तौत् ब्रूञ् व्यक्तायांवाचि **ब्रुवः पंचानामादित आहोब्रुवः** ब्रुवो लटः परस्मैपदानामादितः पंचा-
नां णलादयः पंच वास्युर्ब्रुवश्चाहादेशः अकार उच्चारणार्थः आह आहतुः आहुः **आहस्थः** अहोह
स्यथः स्याज्झलिपरे चर्त्वं आत्थ आहथुः **ब्रुव ईट्** ब्रुवः परस्य हलादेः पित ईट् स्यात् आत्थेत्यत्र स्थानिव
द्भावात्प्राप्तोऽयं झलीति थत्वविधानान्न भवति ब्रवीति ब्रूतः ब्रुवंति ब्रूते आर्धधातुकाधिकारे **ब्रुवो
वचिः** उवाच ऊचतुः ऊचुः उवचिथ उवक्थ ऊचे वक्ता ब्रूतात् ङिच्चपिन्नेत्यपित्वादीण्न ब्रवाणि ब्रवै
ब्रूयात् उच्यात् अस्यतिवक्तीत्यङ् **वच उम्** अङि परे अवोचत् अवोचत **अथ शास्यंताः परस्मै-
पदिनः** इङ् त्वात्मनेपदी इण् गतौ एति इतः **इणो यण्** अजादौ प्रत्यये परे इयङोऽपवादः यंति इया
य दीर्घ इणः किति इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि ईयतुः ईयुः इययिथ इयेथ ऐत् ऐतां आ
यन् इयात् ईयात् एतेर्लिङि उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि निरियात्

समियात् उभयत आश्रयेनांतादिवत् अभीयात् अणः किं समेयात् समीयादिति प्रयोगस्तुभौवादिक
स्य इणोगालुङि गातिस्थेतिसिचोलुक् अगात् अगातां अगुः इङ् अध्ययने नित्यमधिपूर्वः अधीते अ
धीयाते अधीयते गाङ्लिटि इङोगाङ् स्याल्लिटि लावस्थायां विवक्षतेवा अधिगजे अधिजगाते अधि
जगिरे अध्येता अध्येष्यते अध्ययै गुणायादेशयोः कृतयोरुपसर्गस्य यण् पूर्वंधातुरुपसर्गेणेतिदर्श
नेऽन्तरंगत्वाद्गुणात्पूर्वंसवर्णदीर्घः प्राप्तः णेरध्ययनेवृत्तमितिनिर्देशान्नभवति अध्यैतपरत्वादियङ्
ततआट् वृद्धिः अध्यैयातां अध्यैयत अध्यैयि अध्यैवहि अधीयीत अधीयीयातां अधीयीध्वं अधी
यीय अध्येषीष्ट विभाषालुङ्लृङोः इङोगाङ् स्यात् गाङ्कुटादिभ्योऽञ्णिन्ङित् गाङादेशात्
कुटादिभ्यश्चपरेऽञ्णितः प्रत्ययोङितः स्युः घुमास्थागापाजहातिसांहलि एषामातईस्याद्धलादौकि
ङित्यार्धधातुके अध्यगीष्ट अध्यैष्ट अध्यगीष्यत अध्यैष्यत इक्स्मरणे अयमप्यधिपूर्वः अधीगर्थद
येषामितिलिंगात् अन्यथाहीगर्थे इत्येवब्रूयात् इणवदिकइतिवक्तव्यं अधियंति अध्यगात् केचित्त्वा
र्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः तन्मतेयण्न तथाचभट्टिः ससीतयोराघवयोरधीयन् वीगति
व्याप्तिप्रजनकांत्यसनखादनेषु प्रजनोगर्भग्रहणं असनंक्षेपणं वेति वीतः वियन्ति वेषि वेमि
वीहि अवेत् अवीतां अवियन् अडागमेसत्यनेकाच्त्वाद्यणितिकेचित् अव्यन् अत्रईकारोऽपि धात्वं
तरंप्रश्लिष्यते एति इतः इयन्ति ईयात् ऐषीत् याप्रापणे प्रापणमिहगतिः प्रणियाति यातः यांति लं
ङः शाकटायनस्यैव आदंतात्परस्यलङोझेर्जुस्वास्यात् अयुः अयान् यायात् यायातां यायास्तां

वागतिगंधनयोः भादीप्तौ ष्णाशौचे श्रापाके द्राकुत्सायांगतौ प्साभक्षणे पारक्षणे पायास्तां अपासीत्
रादाने लाआदाने द्वाववपिदानइतिचंद्रः दाप्लवने प्रणिदाति प्रनिदाति दायास्तां अदासीत् ख्याप्रकथ
ने अयंसार्वधातुकमात्रविषयः सस्थानत्वंनमःख्यात्रेइतिवार्तिकंतद्भाष्यंचेहलिंगं सस्थानोजिह्वा
मूलीयः सनेतिख्याआदेशस्यखशादित्वेप्रयोजनमित्यर्थः संपूर्वस्यख्यातेःप्रयोगोनेतिन्यासकारः
प्राप्रूरणे मामाने अकर्मकः तनौप्रसुस्तत्रउपसर्गवशेनार्थांतरेसकर्मकः उदरंपरिमातिमुष्टिना नेर्गदे
त्यत्रनास्यग्रहणं प्रणिमाति प्रनिमाति वचपरिभाषणे वक्ति वक्तः अयमंतिपरोनप्रयुज्यते बहुवचनपरइ
त्यन्ये झिपरइत्यपरे वच्यिवच्यात् उच्यात् अवोचत् विद्ज्ञाने विदोलटोवा वेत्तेर्लटःपरस्मैपदानांणला
दयोवास्युः वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म पक्षेवेत्ति वित्तःइत्यादि विवेद विविदतुः
उषविदेत्याम्पक्षे विदेत्यकारांतनिपातनान्नलघूपधगुणः विदांचकार वेदिता विदांकुर्वंत्वित्यन्यत
रस्यां वेत्तेर्लोट्याम्गुणाभावोलोटोलुक्लोडंतकरोत्यनुप्रयोगश्चवानिपात्यते पुरुषवचनेनेहविवक्षि
तेइतिशब्दात् तनादिकृञ्भ्यउः तनादेःकृञश्चउप्रत्ययःस्याच्छपोऽपवादः तनादित्वादेवसिद्धेकृ
ञ्ग्रहणंगणकार्यस्यानित्यत्वेलिंगं तेननविश्वसेदविश्वस्तमित्यादिसिद्धं विदांकरोतु अतउत्सार्वधा
तुके उप्रत्ययांतकृञोऽकारस्यउत्स्यात्सार्वधातुकेक्ङितिउदितितपरकरणसामर्थ्यान्नगुणः विदांकु
रुतात् विदांकुरुतां उतश्चेतिहेर्लुक् आभीयत्वेनलुकोऽसिद्धत्वादुत्वं विदांकुरु विदांकरवाणि अवे-
त् अवित्तां सिजभ्यस्तेतिझेर्जुस् अविदुः दश्च धातोर्दस्यपदांतस्यसिपिपरेरुःस्याद्वा अवेः अवेत्

अस्भुवि अस्ति **श्नसोरल्लोपः** श्नस्यास्तेश्चाकारस्यलोपःस्यात्सार्वधातुकेक्ङिति स्तः संति तासस्त्यो
रितिसलोपः असि स्थः स्थ अस्मि स्वः स्मः आर्धधातुक इत्यधिकृत्य **अस्तेर्भूः** बभूव भविता अस्तु
स्तात् स्तां संतु **ध्वसोरेद्धावभ्यासलोपश्च** घोरस्तेश्चैत्वंस्याद्धौपरेअभ्यासलोपश्च आभीयत्वेनैत्वस्या
सिद्धत्वाद्धेर्धिः श्नसोरित्यल्लोपः एधि तातङ् पक्षेएत्वंन परेणातातङाबाधात् सकृद्गतौविप्रतिषेधेन
यद्बाधितंतद्बाधितमेवेतिन्यायात् स्तात् स्तं स्त असानि असाव असाम अस्तिसिचइतिईट् आसीत्
श्नसोरित्यल्लोपस्याभीयत्वेनासिद्धत्वादाट् आस्ताम् आसन् स्यात् स्याद् भूयात् अभूत् सिचोऽस्तेश्च
विद्यमानत्वेनविशेषणादीण्न **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** उपसर्गेणःप्रादुसश्चपरस्यास्तेःसस्य
षःस्याद्यकारेऽचिचपरे निष्यात् प्रादुष्यात् निषंति प्रादुःषंति यच्परःकिं अभिस्तः मृजूशुद्धौ **मृजेर्वृ-
द्धिः** मृजेरिकोवृद्धिःस्याद्धातुप्रत्ययेपरे क्ङित्यजादौ वेष्यते प्रश्रेतिषः मार्ष्टि मृष्टः मृजंति मार्जंति ममा
र्ज ममार्जतुः ममृजतुः ममार्जिथ ममार्ष्ठ मार्जिता मार्ष्टा मृड्ढि ममार्ट् अमार्जं अमार्जीत् अमार्क्षीत्
रुदिर् अश्रुविमोचने **रुदादिभ्यःसार्वधातुके** रुद् स्वप् श्वस् अन् जक्ष एभ्योवलादेःसार्वधातुकस्येट्
स्यात् रोदिति रुदितः हौपरत्वादिटिधित्वंन रुदिहि **रुदश्चपंचभ्यः** हलादेःपितःसार्वधातुकस्यापृक्त
स्यईट्स्यात् **अड्गार्ग्यगालवयोः** अरोदीत् अरोदत् अरुदितां अरुदन् अरोदीः अरोदः प्रकृतिप्रत्य
यविशेषापेक्षाभ्यामडीड्भ्यामंतरंगत्वाद्यासुट् रुद्यात् अरुदत् अरोदीत् ञिष्वप् शये स्वपिति स्वपितः
सुषाप सुषुपतुः सुषुपुः सुषपिथ सुषप्थ **सुविनिर्दुर्भ्यः सुपिसूतिसमाः** एभ्यःसुप्यादेःसस्यषःस्यात्

पूर्वंधातुरुपसर्गेणयुज्यते किति लिटि परत्वात्संप्रसारणेषत्वेच कृते द्वित्वं पूर्वत्रासिद्धीयमद्विर्वचने सुषुषुप
तुः सुषुषुपुः अकितितु द्वित्वे ऽभ्यासस्यसंप्रसारणं षत्वस्यासिद्धत्वात्ततः पूर्वंहलादिःशेषः नित्यत्वाच्च ततः
सुपिरूपाभावान्नषः सुष्वाप सुस्वप्ता अस्वपीत् अस्वपत् स्वपात् सुप्यात् सुषुप्यात् अस्वाप्सीत् श्वस
प्राणने श्वसिति श्वसिता अश्वसीत् अश्वसत् श्वस्यात् श्वस्यातां ह्म्यंतेतिनवृद्धिः अश्वसीत् अनच अनि-
ति आन अनिता आनीत् आनत् अनितेः उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्यणःस्यात् प्राणिति जक्ष
भक्षहसनयोः जक्षिति जक्षितः अदभ्यस्तात् झस्यअत्स्यादंतापवादः जक्षति सिजभ्यस्तेतिजुस् अज
क्षुः अयमंतस्थादिरित्युज्वलदत्तोबभ्राम रुदादयःपंचगताः जागृनिद्राक्षये जागर्ति जागृतः जाग्रति
उषविदेत्याम्वा जागरांचकार जजागार जाग्रोविचिण्णल्ङित्सु जागर्तेर्गुणःस्याद्विचिण्णल्ङित्सु ऽन्य-
स्मिन्वृद्धिविषयेप्रतिषेधविषयेच जजागरतुः जजागरुः अजागः अजागृतां अभ्यस्तत्वाज्जुस् जुसिच
अजादौजुसि इगंतांगस्यगुणःस्यात् अजागरुः अजागर्दोर्षि जागृयुः आशिषितुजागर्यात् जागर्यास्तां जा
गर्यासुः लुङि अजागरीत् जागृइस्इत्यत्रयण्प्राप्तः तंसार्वधातुकगुणोबाधते तंसिचिवृद्धिः तांजागर्तिगु
णः तत्रकृतेहलंतलक्षणाप्राप्तानेटीतिनिषिद्धा ततोऽतोहलादेरितिबाधित्वाऽतोल्लांतस्येतिप्राप्तास्यंतेः
तिनिषिध्यते तदाहुः गुणोवृद्धिर्गुणोवृद्धिःप्रतिषेधोविकल्पनं पुनर्वृद्धिर्निषेधोऽतोयण्पूर्वाःप्राप्तयोन
नवेति दरिद्रादुर्गतौ दरिद्राति इद्दरिद्रस्य दरिद्रातेरिकारःस्याद्धलादौक्ङितिसार्वधातुके दरिद्रितः स्ना
भ्यस्तयोरातः अनयोरातोलोपःस्यात्क्ङितिसार्वधातुके दरिद्रति अनेकाच्त्वादाम् दरिद्रांचकार आ

तऔणलइत्यत्रओइत्येवसिद्धे औकारविधानंदरिद्रातेरालोपेकृतेश्रवणार्थं अतएवज्ञापकादाम्नेत्येके
ददरिद्रौ ददरिद्रतुरित्यादि यत्तुणलिदरिद्रेति तन्निर्मूलमेव दरिद्रातेरार्धधातुकेविवक्षितेआलोपोवाच्यः
लुङिवा सनिण्वुलिल्युटिचन दरिद्रिता अदरिद्रात् अदरिद्रितां अदरिद्रुः दरिद्रियात् दरिद्र्यात् अदरि-
द्रीत् इट्सकोअदरिद्रासीत् चकासृदीप्तौ झस्यअत् चकासति चकासांचकार धिचेतिसलोपःसिचइ
त्येके चकाद्धि चकाधीत्येवभाष्यं तिप्यनस्तेः पदांतस्यसस्यदः स्यात्तिपिनत्वस्तेः अचकात् अचकाद्
सिपिधातोरुर्वा पदांतस्यसस्यरुःस्याद्वा पक्षेदः अचकाः अचकाद् शासुअनुशिष्टौशास्ति शासइ
दङ्हलोः शासउपधायाइस्याद्ङिहलादौक्ङितिच शासिवसीतिषः शिष्टः शासति शशास शशासतुः श
शासुः शिष्टात् शिष्टां शासतु शाहौ शास्तेःशादेशःस्याद्धौपरे तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः शाधि अशा
त् अशिष्टां अशासुः अशाः अशात् शिष्यात् सर्तिशास्त्यर्तिभ्यश्चेत्यङ् अशिषत् अशासिष्यत् दीधीङ्दीप्ति-
देवनयोः एतदादयःपंचधातवः छांदसाः दीधीते एरकानेकाचइतियण् दीध्यातेयीवर्णयोर्दीधीवेव्योः
एतयोरंत्यस्यलोपः स्याद्यकारेइवर्णेचपरे इतिलोपंबाधित्वानियत्वाद्दीरेत्वं दीध्ये दीधीवेवीटामितिगु
णनिषेधः दीध्यांचक्रे दीधिता दीधिष्यते वेवीङ् वेतिनातुल्ये वीगतौ त्येने नतुल्येऽर्थेवर्तत इत्यर्थः
अथत्रयःपरस्मैपदिनः षसस्वप्ने सस्तिस्वप्ने सस्ति सस्तः ससंति ससास सेसतुः ससृ सधि पूर्वत्रासिद्धमि
तिसलोपस्यासिद्धत्वादतोहेरितिलुङ्न असत् असस्तां असः असत् सस्यात् अससीत् अससीत् सं
स्ति संतः संस्तंति बहूनांसमवायेद्वयोः संयोगसंज्ञानेत्याश्रित्यस्कोरितिसलोपाभावात् संस्ति संस्तः

इत्येके वशकांतौ कांतिरिच्छा वष्टि उष्टः उशंति वक्षि उष्ठः उवाश ऊशतुः वशिता वष्टु उष्टात् उष्टां उड्ढि अवट्
औष्टां औशन् अवशं उश्यातां उश्यास्तां चर्करीतंच यङ्लुङंतमदादौ बाध्यं ह्नुङ् अपनयने ह्नुते जह्नुवे
ह्नुवीत ह्नोषीष्ट अह्नोष्ट इत्यदादयः समाप्ताः हु दानादनयोः आदाने चेत्येके प्रीणनेऽपीति भाष्यं दानंचे
ह प्रक्षेपः सचवैधे आधारे हविषश्चेति स्वभावाल्लभ्यते इतश्चत्वारः परस्मैपदिनः जुहोत्यादिभ्यः श्लुः
शपः श्लुः स्यात् श्लौ धातोर्द्वे स्तः जुहोति जुहुतः अदभ्यस्तादित्यत् हुश्नुवोरितियण् जुह्वति भीह्रीभृहु
वांश्लुवच्च एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यंच जुहवांचकार जुहाव होता होष्यति जुहोतु जुहु
तात् हेर्धिः जुहुधि आटि परत्वाद्गुणः जुहवानि परत्वाज्जुसि चेति गुणः अजुहवुः जुहुयात् हूयात् अ
हौषीत् ञिभी भये बिभेति भियोऽन्यतरस्यां इकारः स्याद्धलादौ क्ङिति सार्वधातुके बिभितः बिभीतः
बिभ्यति बिभयांचकार बिभाय भेता ह्रीलज्जायां जिह्रेति जिह्रीतः जिह्रियति जिह्रयांचकार जिह्रा
य पॄ पालनपूरणयोः अर्तिपिपर्त्योश्च अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ उदोष्ठ्यपूर्वस्य अंगाव
यवौ ष्ठ्यपूर्वो यऋत्तदंतस्यांगस्य उत्स्यात् गुणवृद्धी परत्वादिमं बाधेते पिपर्ति उत्वं रपरत्वं हलि चेति दी
र्घः पिपूर्तः पिपुरति पपार क्ङिति लिटि ऋच्छत्यॄतामिति गुणे प्राप्ते शॄदॄप्रां ह्रस्वो वा एषां क्ङिति लिटि ह्र
स्वो वा स्यात् पक्षे गुणः पप्रतुः पपरतुः पपरुः परिता परीता अपिपः अपिपूर्तां अपिपरुः पिपूर्यात् पू
र्यात् अपारीत् अपारिष्टां ह्रस्वांतोऽयमिति केचित् पिपर्त्ति पिपृतः पिप्रति पिपृयात् आशिषि प्रियात्
अपार्षीत् पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ छांदसत्वं शरणं डुभृञ् धारणपोषणयोः भृञा

मित् भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति बिभृतः बिभ्रति बिभृध्वे श्लुवद्वावाद्वि
ते बिभरामास बभार बभर्थ बभृव बिभृहि बिभराणि अबिभः अबिभृतां अबिभरुः बिभृयात् भ्रियात् भृ
षीष्ट अभार्षीत् अभृत माङ् मानेशब्देच ई हल्यघोः श्नाभ्यस्तयोरातईत्स्यात्सार्वधातुके क्ङिति हलिनतु
घोः मिमीते श्नाभ्यस्तयोरित्यालोपः मिमाते मिमते मध्यमास्त ओहाङ् गतौ जिहीते जिहाते जिहते जिहे
हाता हास्यते ओहाक् त्यागे परस्मैपदी जहाति जहातेश्च इत्स्याद्वा हलादौ क्ङिति सार्वधातुके पक्षे इत्त्वं ज
हितः जहीतः जहति जहौ जहातु जहितात् जहीतात् आच हौ जहातेर्हौ परे आस्याद्वा दीदितौ जहा
हि जहिहि जहीहि अजहात् अजहुः लोपोयि जहातेरालोपः स्याद्यादौ सार्वधातुके जह्यात् एर्लिङि
हेयात् अहासीत् डुदाञ् दाने प्रणिददाति दत्तः ददति दत्ते ददौ घ्वसोरित्येत्वाभ्यासलोपौ देहि अदद
त् अदत्तां अददुः दद्यात् देयात् अदात् अदातां अदुः अदित डुधाञ् धारणपोषणयोः दानेऽप्येके
प्रणिदधाति दधस्तथोश्च द्विरुक्तस्य झषंतस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्चपरतः वचनसा
मर्थ्यादल्लोपो न स्थानिवदिति वामनमाधवौ वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवत् धत्तः दधति धत्थः
दध्वः धत्ते धत्से धध्वे धेहि अधित अथत्रयः स्वरितेतः णिजिर् शौचपोषणयोः णिजां त्रयाणां गुणः
श्लौ णिज्विज्विषामभ्यासस्य गुणः स्याच्छ्लौ नेनेक्ति नेनिक्तः निनेज नेक्ता नेक्ष्यति नेनेक्तु नेनिग्धि
नाभ्यस्तस्याचि पिति सार्वधातुके लघूपधगुणो न नेनिजानि अनेनेक् अनेनिक्तां अनेनिजुः नेनिज्या
त् निज्यात् अनिजत् अनैक्षीत् अनिक्त विजिर् पृथग्भावे वेवेक्ति वेविक्ते विवेजिथ अत्रविजइडिति न

ङित्वंन ओविजीत्यस्यैव तत्रग्रहणात् णिजिर्विजिरीरुधादावपि विष्लृ व्याप्तौ वेवेष्टि वेविष्टे लृदित्वादङ्
अविषत् तङि क्सः अजादौ क्सस्याचीत्यल्लोपः अविक्षत अविक्षातां अविक्षंत अथ गणांताः परस्मैपदि
नः छांदसाश्च घृ क्षरणदीप्त्योः जिघर्म्यग्निं हविषा घृतेन भृञामित् बहुलं छंदसीति इत्वं हृसत्यकर
णे अयं स्रुवो अभिजिहर्त्ति होमान् ऋसृगतौ बहुलं छंदसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्वविधानादयं
भाषायामपि अभ्यासस्यासवर्णे इतीयङ् इयर्ति इयृतः इयृरति आर आरतुः इडत्यर्तीति नित्यमिट् आरि
थ अर्त्ता अरिष्यति इयराणि ऐयः ऐयृतां ऐयरुः इयृयात् अर्यात् आरत् ससर्ति भस भर्त्सनदीप्त्योः ब
भस्ति घसिभसोर्हलि चेत्युपधालोपः झलो झलीति सलोपः बब्धः बप्सति कि ज्ञाने चिकेति तुर त्वर
णे तुतोर्ति तुतूर्तः तुतुरति धिष शब्दे दिधेष्टि दिधिष्टः धन धान्ये दधंति दधंतः दधनति जन जनने ज
नसनखनां सञ्झलोः एषामाकारोंऽतादेशः स्याज्झलादौ सनि झलादौ क्ङिति च जजातः जज्ञति ज
जंसि जजान जजन्यात् जजायात् जन्यात् ये विभाषा जायात् गा स्तुतौ देवान् जिगाति सुम्नयुः जिगी
तः जिगति इति जुहोत्यादयः दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु
जृषंताः परस्मैपदिनः दिवादिभ्यः श्यन् शपोऽपवादः हलि चेति दीर्घः दीव्यति दिदेव देविता देविष्य
ति दीव्यतु अदीव्यत् दीव्येत् दीव्यात् अदेवीत् अदेविष्यत् षिवु तंतुसंताने परिषीव्यति परिषिषेव न्य
सेवीत् न्यषेवीत् स्रिवु गतिशोषणयोः ष्ठिवु निरसने केचिदिह मं न पठंति ष्णसु अदने आदान इत्ये
के अदर्शन इत्यपरे स्नुस्यति क्ष्णोस ष्णसु निरसने स्नस्यति सस्नास क्नसु ह्वरणदीप्त्योः ह्वरणं कौ

टिर्ल्य चक्कास व्युषदाहे वुव्योष वुषच्च नृतीगात्रविक्षेपे नृत्यति ननर्त सेऽसिचिकृतचृतछृदतृदनृतः एभ्यःपरस्यसिज्भिन्नस्यसादेरार्धधातुकस्येड्वास्यात् नर्तिष्यति नर्त्स्यति नृत्येत् नृत्यात् अनर्तीत् त्रसीउद्वेगे वाभ्राशेतिश्यन्वा त्रस्यति त्रसति त्रेसतुः तत्रसतुः कुथपूतीभावे पुथहिंसायां गुधपरिवेष्टने क्षिपप्रेरणे क्षिप्यति क्षेप्ता पुष्पविकसने पुष्प्यति पुपुष्प तिमष्टिमष्टीमआर्द्रीभावे तिम्यति ष्टिम्यति ष्टीम्यति व्रीडचोदने लज्जायांच व्रीड्यति इषगतौ इष्यति षहषुह चक्यर्थे चक्यर्थस्तृप्तिः सह्यति सुह्यति जृषुझृषुवयोहानौ जीर्यति जजरतुः जेरतुः जरिता जरीता जीर्येत् जीर्यात् जृस्तम्भित्यङ्वा ऋदृशोऽङि गुणः अजरत् अजारीत् अजारिष्टां झीर्यति जझरतुः अझारीत् षूङ्प्राणिप्रसवे सूयते सुषुवे स्वरतिसूतीति विकल्पंबाधित्वाश्र्युकः कितीतिनिषेधेप्राप्तेक्रादिनियमान्नित्यमिट् सुषुविषे सुषुविवहे सोता सविता दूङ्परितापे दूयते दीङ्क्षये दीयते दीङोयुडचिक्ङिति दीङःपरस्याजादेःक्ङितआर्धधातुकस्ययुट्स्यात् दुग्युटावुवङ्यणोःसिद्धौवक्तव्यौ दिदीये मीनातिमिनोतिदीङांल्यपिच एषामात्वंस्याल्ल्यपि चकारादशित्येज्निमित्ते दाता दास्यते अदास्त अदास्थाः डीङ्विहायसागतौ डीयते धीङ् आधारे धीयते दिध्ये धेता मीङ्हिंसायां हिंसात्रप्राणवियोगः मीयते रीङ्श्रवणे रीयते लीङ्श्लेषणे विभाषालीयतेः लीयतेरितियकानिर्देशोनतुश्यनालीलीङोरात्वंवास्यादेज्विषयेल्यपिच लेता लाता लास्यते लेष्यते एज्विषयेकिं लीयते लिल्ये व्रीङ्वृणोत्यर्थे व्रीयते विव्रिये स्वादयओदितः तत्फलंतुनिष्ठानत्वं पीङ्पाने पीयते माङ्माने मायते ममे ईङ्गतौ ईयते अयांचक्रे प्रीङ्प्रीतौ सकर्मकः

प्रीयते पिप्रिये अथपरस्मैपदिनश्चत्वारः शोतनूकरणे ओतःश्यनि लोपःस्यात्श्यति श्यतः श्यंति शशौ शशतुः शाता शास्यति विभाषाघ्राधेट्शाच्छासइतिसिचोवालुक् लुगभावेयमरमेतीट्सकौ अशात् अशातां अशुः अशासीत् अशासिष्टां छोच्छेदने छ्यति षोऽतकर्मणि स्यति ससौ अभिष्यति अभ्यष्यत् अभिससौ दोअवखंडने द्यति ददौ प्रणिदाता देयात् अदात् अथात्मनेपदिनःपंचदश जनीप्रादुर्भावे ज्ञाजनोर्जा अनयोर्जादेशःस्याच्छिति जायते जज्ञे जज्ञाते जज्ञिरे जनिता जनिष्यते दीपजनेतिवाच्चिण् जनिवध्योश्च अनयोरुपधायावृद्धिर्नस्याच्चिणिञ्णितिकृतिच अजनि अजनिष्ट दीपीदीप्तौ दीप्यते दिदीपे अदीपि अदीपिष्ट पूरीआप्यायने पूर्यते अपूरि अपूरिष्ट तूरीगतित्वरणहिंसनयोः तूर्यते तुतूरे धूरीगूरीहिंसागत्योः धूर्यते दुधूरे गूर्यते जुगूरे घूरीजूरीहिंसावयोहान्योः शूरीहिंसास्तंभनयोः चूरीदाहेतपऐश्वर्येवा अयंधातुरैश्वर्येवातङ्श्यनौलभते अन्यदातुशब्विकरणः परस्मैपदीत्यर्थः केचित्तु वाग्रहणंवृतुधारोराद्यवयवमिच्छंति तप्यते तप्ता तप्स्यते पतेतिव्यत्यासेनपाठांतरं घृतद्यामानिपुलःपत्यमानाः वृतुवरणे वृत्यते पक्षांतरे वावृत्यते ततोवावृत्यमानासारामशालान्यविक्षतेति भट्टिः क्लिशउपतापे क्लिश्यते क्लेशिता काशृदीप्तौ काश्यते वाशृशब्दे वाश्यते ववाशे अथपंचस्वरितेतः मृषतितिक्षायां मृष्यति मृष्यते ममर्ष ममृषे ईशुचिर्पूतीभावे पूतीभावःक्लेदः शुच्यति शुच्यते शुशोच शुशुचे अशुचत् अशोचीत् अशोचिष्ट णहबंधने नह्यति नह्यते ननाह ननद्ध नेहिथ नेहे नद्धा नत्स्यति अनात्सीत् रंजरागे रज्यति रज्यते शपआक्रोशे शप्यति शप्यते अथैकादशअनुदात्तेतः पदगतौ पद्यते

पेदे पत्ता पद्येत पत्सीष्ट चिण्तेपदः पदेश्च्लेश्चिण्स्यात्तशब्देपरे प्रण्यपादि अपत्सातां अपत्सत खिददै
न्ये खिद्यते चिखिदे खेत्ता अखित्त विदसत्तायां विद्यते वेत्ता बुधअवगमने बुध्यते बुबुधे बोद्धा भोत्
स्यते भुत्सीष्ट अबोधि दीपजनेतिचिण् अबुद्ध अभुत्सातां युधसंप्रहारे युध्यते युयुधे योद्धा अयुद्ध कथं
युध्यतीति युधमिच्छतीतिक्यच् अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमितिवा अनोरुधकामे अनु
रुध्यते अणप्राणने अण्यते आणे अणिता अनेतिदंत्यांतोऽयमित्येके मनज्ञाने मन्यते मेने मंता युज
समाधौ समाधिश्चित्तवृत्तिनिरोधः अकर्मकः युज्यते योक्ता सृजविसर्गे अकर्मकः संसृज्यते सरसिजे
रुणांशुभिन्नैः ससृजिषे स्रष्टा स्रक्ष्यते लिङ्सिचाविति कित्वान्नगुणो नाप्यम् सृक्षीष्ट असृष्ट असृ
क्षातां लिशअल्पीभावे लिश्यते लेष्टा लेक्ष्यते लिक्षीष्ट अलिक्षत अलिक्षातां अथागणांताःपरस्मैपदि
नः राधोअकर्मकाद्वृद्धावेव एवकारोभिन्नक्रमः राधोअकर्मकादेवश्यन् उदाहरणमाह वृद्धाविति यन्
न्मत्यमपराध्यति द्रुह्यतीत्यर्थः विराध्यंतंसहेतकः द्रुह्यंतंराध्यत्योदनः सिध्यतीत्यर्थः कृष्णायराः
ध्यति दैवंपर्यालोचयतीत्यर्थः दैवस्यधात्वर्थेऽतर्भावाज्जीवत्यादिवदकर्मकत्वं रराध रराधतुः रराधि
थ राधोहिंसायामित्येत्वाभ्यासलोपाविहन हिंसार्थस्यसकर्मकतया दैवादित्वायोगात् राद्धा रात्स्य
ति अयंस्वादिश्चुरादिश्च व्यधताडने ग्रहिज्येतिसंप्रसारणं विध्यति विव्याध विविधतुः विव्यद्ध विव्य
धिथ व्यद्धा व्यत्स्यति विध्येत् विध्यात् अव्यात्सीत् पुषपुष्टौ पुष्यति पुपोष पुपोषिथ पोष्टा पोक्ष्यति पु
षादीत्यङ् अपुषत् शुषशोषणे अशुषत् तुषप्रीतौ दुषवैकृत्ये श्लिषआलिंगने श्लिष्यति शिश्लेष

श्लेष्टा श्लेक्ष्यति श्लिषः अस्मात्परस्यानिटः च्लेः क्सः स्यात् पुषाद्यङोऽपवादो नतु चिणः पुरस्तादपवादन्याया
त् आलिंगने श्लिषश्च्लेरालिंगने एव क्सो नान्यत्र योगविभागसामर्थ्याच्छलइगुपधादित्यस्याप्ययं निय
मः अश्लिक्षत्कन्यां देवदत्तः आलिंगन एवेति किं समश्लिषज्जतु काष्ठं अङ् प्रत्यासत्ताविहाश्लिषिः कर्मणि
अनालिंगने सिजेवनतुक्सः एकवचनेचिण् अश्लेषि अश्लिक्षातां अश्लिक्षत अश्लिष्ठाः अश्लिड्ढ्वं श
कविभाषितोमर्षणे विभाषितइत्युभयपदीत्यर्थः शक्यति शक्यते हरिं द्रष्टुं भक्तः शशाक शेकिथ श
शक्थ शेके शक्ता शक्ष्यति शक्ष्यते अशकत् अशक्त सेट्कोयमित्येके तन्मते नानिट्कारिकासु लृदित्
पठितः शकिता शकिष्यति ष्विदा गात्रप्रक्षरणे घर्मस्रुतोइत्यर्थः अयंञिदिति न्यासकारादयः नेति हरद
त्तादयः स्विद्यति सिष्वेद सिष्वेदिथ स्वेत्ता अस्विदत् क्रुधक्रोधे क्रोद्धा क्रोत्स्यति क्षुधबुभुक्षायां क्षोद्धा
कथं क्षुधित इति संपदादिक्विबंतात्तारकादित्वादितजिति माधवः वस्तनस्क वसति क्षुधोरितीट् वक्ष्य
ते शुधशौचे शोध्यति शुशोध शोद्धा षिधुसंराद्धौ ऊदित्पाठः प्रामादिकः सिध्यति सेद्धा सेत्स्यति असिध
त् रधहिंसासंराध्योः रध्यति रधिजभोरचीति नुम् ररंध ररंधतुः रधादिभ्यश्च वलाद्यार्धधातुकस्येड्वे
ट् स्यात् ररंधिथ ररद्ध ररंधिव रेध्व नेट्यलिटि रधेः लिड्वर्जे इटि रधेर्नुम्न स्यात् रधिता रद्धा रधिष्यति
रत्स्यति अङि नुम् अनिदितामिति नलोपः अरधत् णशअदर्शने नश्यति ननाश नेशतुः नेशिथ म
स्जिनशोर्झलि नुम् स्यात् ननंष्ठ नेशिव नेश्व नशिता नंष्टा नशिष्यति नङ्क्ष्यति नश्येत् नश्यात् अ
नशत् प्रणश्यति नशेःषांतस्य णत्वं न प्रनंष्टा अंतग्रहणं भूतपूर्वप्रतिपत्त्यर्थं प्रनङ्क्ष्यति तृपप्री-

णने प्रीणनंतृप्तिस्तर्पणंच नाग्निस्तृप्यतिकाष्ठानां पितॄनताप्सीदित्युभयत्रदर्शनात् ततर्पिथ ततर्प्थ
ततृप्थ तर्पिता तृप्ता तर्प्ता स्पृशमृशेतिसिज्वा अताप्सीत् अत्राप्सीत् अतर्पीत् अतृपत् दृपहर्षमोहनयोः
मोहनंगर्वः दृप्यतीत्यादि रधादित्वादिमौ वेट्काववमर्थमनुदात्तत्ता द्रुहजिघांसायां वाद्रुहमुहेतिवायः
पक्षेदः दुद्रोग्ध दुद्रोढ दुद्रोहिथ द्रोहिता द्रोग्धा द्रोढा द्रोहिष्यति ध्रोक्ष्यति ढलघलयोस्तुल्यंरूपं अद्रुह
त् मुहवैचित्ये वैचित्यमविवेकः मुह्यति मुमोहिथ मुमोग्ध मुमोढ मोग्धा मोढा मोहिता मोहिष्यति
मोक्ष्यति अमुहत् ष्णुहउद्गिरणे स्नुह्यति स्नुष्णोह स्नुष्णोहिथ स्नुष्णोग्ध स्नुष्णोढ स्नुष्णुहिव सुष्णुक्
स्नोहिता स्नोग्धा स्नोढा स्नोहिष्यति स्नोक्ष्यति अस्नुहत् ष्णिहप्रीतौ स्निह्यति सिष्णेह द्वृत् रधादयः
समाप्ताः पुषादयस्त्वागणांताइतिसिद्धांतः शमुउपशमे शमामष्टानांदीर्घःश्यनि शमादीनामि
त्यर्थः प्रणिशाम्यति शेमतुः शेमिथ शमिता अशमत् तमुकांक्षायां ताम्यति तमिता अतमत् दमुउ
पशमे उपशमइतिण्यंतस्य तेनसकर्मकोऽयं नतुशामिवदकर्मकः अदमत् श्रमुतपसिखेदेच श्राम्य
ति अश्रमत् भ्रमुअनवस्थाने वाभ्राशेतिश्यन्वा तत्रश्रुतेशमामष्टानामितिदीर्घः भ्राम्यति लुङ्यङ्
अभ्रमत् शेषंभ्वादिवत् क्षमूसहने क्षाम्यति चक्षमिथ चक्षंथ चक्षमिव चक्षण्व चक्षमिम चक्षण्म
क्षमिता क्षंता अयंनषित् भ्वादिस्तुषित् अषितःक्षाम्यतेःक्षांतिःक्षमूषःक्षमतेःक्षमा क्लमुग्लानौ क्लाम्य
ति क्लामति शपीवश्यन्यपिष्ठिवुक्लम्वित्येवदीर्घेसिद्धेशमादिपाठोघिनुणर्थः अङ् अक्लमत् मदीहर्षे मा
द्यति अमदत् शमादयोऽष्टौगताः असुक्षेपणे अस्यति आस असिता अस्यतेस्थुक् अङिपरे आस्थ-

त् अस्यपुष्पादित्वादङिःसिद्धे अस्यतिवक्तीतिवचनंतङर्थं तङ्नूपसर्गादस्यत्यूह्योरितिवक्ष्यते पर्यास्थत
यसुप्रयत्ने यसो नुपसर्गात् संयसश्च श्यन्वास्यात् यस्यति यसति संयस्यति अनुपसर्गात्किं प्रय
स्यति जसुमोक्षणे जस्यति तसुउपक्षये दसुच तस्यति अतसत् दस्यति अदसत् वसुस्तंभे वस्यति व
वास ववसतुः नशसदेतिनिषेधः वशादिरयमितिमतेतु बेसतुः बेसुः व्युषविभागे अयंदाहे पठितः
अर्थभेदेनत्वङर्थंपुनःपठ्यते अव्युषत् ओष्ठ्यादिर्दंत्यांतोऽयं प्लुसित्यन्ये अथकारंपुष्नित्यपरे पुष
दाहे अप्लुषत् पूर्वपाठःसिजर्थ इत्याहुः तन्न भ्वादिपाठेनगतार्थमितिस्फुवच्चं बिसप्रेरणे बिस्यति अ
बिसत् कुससंश्लेषणे अकुसत् बुसउत्सर्गे मुसखंडने मसीपरिणामे परिणामोविकारःसमीत्येके लु
ठविलोडने उचसमवाये उच्यति उवोच ऊचतुः माभवानुचत् भृशुभ्रंशुअधःपतने बभर्श अभृश
त् अनिदितामितिनलोपः भ्रश्यति अभ्रशत् वृशवरणे वृश्यति अवृशत् कृशतनूकरणे कृश्यति ञि
तृषापिपासायां तृषतुष्टौ श्यन्लङोर्भौवादिकाद्विशेषः रुषरिषहिंसायां तीषसहेतिवेट् रोषिता रोष्टा रे
षिता रेष्टा डिपक्षेपे कुपक्रोधे गुपव्याकुलत्वे युपुरुपुलुपुविमोहने युप्यति रुप्यति लुप्यति लोपिता लु
प्यतिःसेट्कः अनिट्कारिकासुलिपिसाहचर्यात्तौदादिकस्यैवतत्रग्रहणात् लुभगार्ध्ये गार्ध्यमाकांक्षा
तीसहेतिवेट् लोभिता लोब्धा लोभिष्यति लुभ्येत् लुभ्यात् अलुभत् भौवादेरप्युत्करणाल्लोभतीत्यपीत्या
हुः क्षुभसंचलने क्षुभ्यति णभतुभहिंसायां क्षुभिनभितुभयोर्द्युतादौ क्र्यादौच पठ्यंते तेषांद्युतादि-
त्वादङ् सिद्धः क्र्यादित्वात्पक्षेसिज्भवत्येव इहपाठस्तुश्यनर्थः क्लिदूआर्द्रीभावे क्लिद्यति चिक्लेदिथ

चिक्लिदिव चिक्लिद्व क्लेदिता क्लेत्ता ञिमिदा स्नेहने मिदेर्गुणः मेद्यति अमिदत् द्युतादिपाठादेवामिदत्
अमेदिष्टेतिसिद्धे इहपाठोऽमेदीदितिमाभूदिति द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः ञिक्ष्विदा
स्नेहनमोचनयोः ऋधु वृद्धौ आनर्द्ध आर्धत् गृधु अभिकांक्षायां अगृधत् वृत् पुषादयो दिवादयश्च वृ-
ताः केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणं दिवादिस्तु भ्वादिवदाकृतिगणः तेनक्षीयतेमृग्यतीत्यादिसिद्ध्य-
तीत्याहुः इतिदिवादयः षुञ् अभिषवे अभिषवः स्नपनंपीडनंस्नानंसुरासंधानंच तत्रस्नानेअर्मकः
स्वादिभ्यःश्नुः सुनोति सुनुतः हुश्नुवोरितियण् सुन्वंति सुन्वः सुनुवः सुन्वहे सुनुवहे सुषाव सुषुवे सो-
ता सुनु सुनवानि सुनवै सुनुयात् सूयात् स्तुसुधूञ्भ्यइतीट् असावीत् असोष्ट अभिषुणोति अभ्य-
षुणोत् अभिसुषाव सुनोतेःस्यसनोः स्येसनिचसुञः षोनस्यात् विसोष्यति षिञ् बंधने सिनोति विसि-
नोति सिषाय सिष्ये सेता शिञ् निशाने तालव्यादिः शेता डुमिञ् प्रक्षेपणे मीनातिमिनोतीत्यात्वं ममौ
ममिथ ममाथ मिम्ये माता मीयात् मासीष्ट अमासीत् अमासिष्टां अमास्त चिञ् चयने प्रणिचिनोति
विभाषाचेः अभ्यासात्परस्यचिञः कुत्वंवास्यात्सनिलिटिच प्रणिचिकाय चिचाय चिक्ये चिच्ये अचै-
षीत् अचेष्ट स्तृञ् आच्छादने स्तृणोति स्तृणुते गुणोऽर्तीतिगुणः स्तर्यात् ऋतश्चसंयोगादेः ऋदंता-
त्संयोगादेःपरयोर्लिङ्सिचोरिड्वास्यात्तङि स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत कृञ् हिंसायां कृणो-
ति कृणुते चकार चकर्थ चक्रे क्रियात् कृषीष्ट अकार्षीत् अकृत वृञ् वरणे बभूथाततंथजगृभ्मव-
वर्थेतिनिगमे एषांवेदेइडभावोनिपात्यते तेनभाषायांथलीट् ववरिथ ववृव ववृवहे वरिता वरीता

लिङ्सिचोरात्मनेपदेषु वृङ्वृञ्भ्यामृदंताच्च परयोर्लिङ्सिचोरिड्वास्यात्तङि॰ नलिङि॰ वृतोलिङि॰ इ-
टोदीर्घोनस्यात् वरिषीष्ट वृषीष्ट अवारीत् अवरिष्ट अवरीष्ट अवृत धुञ्कंपने धुनोति धुनुते अधौषीत् अ-
धोष्यत् दीर्घांतोऽप्ययं धूनोति धूनुते स्वरतीतिवेट् दुधविथ दुधोथ क्रितिलिटितु श्र्युकइतिनिषेधंबाधि-
त्वाक्रादिनियमान्नित्यमिट् दुधुविव स्तुक्रू धूञ्भ्यइतिनित्यमिट् अधावीत् अधविष्ट अधोष्ट अथपरस्मै-
पदिनः टुदुउपतापे दुनोति हिगतौवृद्धौच हिनुमीना उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्यणः स्यात्
प्रहिणोति हेरचङि॰ अभ्यासात्परस्यहिनोतेर्हस्यकुत्वंस्यान्नतुचङि॰ जिघाय पृप्रीतौ पृणोति पर्ता स्पृप्री-
तिपालनयोः प्रीतिचलनयोरित्यन्ये चलनंजीवनमितिस्वामी स्पृणोति पस्पार स्मृइत्येके स्मृणोति पृ-
णोत्यादयस्त्रयोऽपिछांदसाइत्याहुः आप्लृव्याप्तौ आप्नुवंति आप्नुवः आप्ता आप्नुहि लृदित्वादङ् आपत्
शकृशक्तौ अशकत् राधसाधसंसिद्धौ राध्नोति साध्नोति राधोहिंसायां एत्वाभ्यासलोपौस्तः क्रितिलिटिसे-
टिथलिच अपरेधतुः रेधुः रेधिथ राद्धा साद्धा असात्सीत् असाद्धां अथद्वावनुदात्तेतौ अशूव्याप्तौसंघा-
तेच अश्नुते अश्नोतेश्च दीर्घीभूतादभ्यासावर्णात्परस्यनुट् स्यात् आनशे अशिता अष्टा अशिष्यते
अक्ष्यते अश्नुवीत अक्षीष्ट अशिषीष्ट आष्ट आक्षातां ष्टिघआस्कंदने स्तिघ्नुते तिष्टिघे स्तेघिता अथागणां-
ताः परस्मैपदिनः तिकतिगच चादास्कंदने तिक्नोति तिग्नोति षघहिंसायां सघ्नोति ञिधृषाप्रागल्भ्ये
धृष्णोति दधर्ष धर्षिता दंभुदंभने दंभनंदंभः दभ्नोति ददंभ श्रंथिग्रंथिदंभिस्वंजीनांलिटःकित्वंवेति व्या-
करणांतरमिहाप्याश्रीयतइत्युक्तं अनिदितामितिनलोपः तस्याभीयत्वादसिद्धत्वेनएत्वाभ्यासलोपयो

रम्रासेो दंभेश्च एभ्यासलोपोवक्तव्यो देभतुः ददंभतुः इदंकित्वंपिदपिद्विषयकमितिसुधाकरादयः तेषां
मतेतिपृस्रिपृमिष्ठः देभ देभिथ देभौतिरूपांतरंज्ञेयं अपिद्विषयकमितिन्यासकारमतेतु ददंभ ददंभिथ
ददंभेत्येव दभ्यात् ऋधुवृद्धौतृपप्रीणनइत्येके क्षुभ्नादिषुच तृप्नोति छंदसि आगणांतादधिकारोऽयं
अहव्याप्तौ अन्होति दघघातनेपालनेच दघ्नोति चमुभक्षणे चम्नोति रिक्षिचिरिजिरिदाशदृहिंसायां
रिणोति क्षिणोति अयंभाषायामपीत्येके नतघशशरूप्रभृतांक्षिणोति ऋक्षीत्येकएवाजादिरित्यन्ये
ऋक्षिणोति चिरिणोति जिरिणोति दाश्नोति दृणोति दृत् इतिस्वादयः तुदव्यथने इतःषट् स्वरितेतः
तुदादिभ्यःशः तुदति तुदते तुतोद तुतोदिथ तुतुदे तोत्ता अतौत्सीत् अतुत्त णुदप्रेरणे नुदति नुदते
नुनोद नुनुदे नोत्ता दिशअतिसर्जने अतिसर्जनंदानं देष्टा दिक्षीष्ट अदिक्षत् अदिक्षातां भ्रस्जपाके
ग्रहिज्येति संप्रसारणं स्नस्यश्चुत्वेनशः शस्यजश्त्वेनजः भृज्जति भृज्जते भ्रस्जोरोपधयोरमन्यतर
स्यां भ्रस्जेरेफस्योपधायाश्चस्थानेरमागमोवास्यादार्धधातुके मित्वादंत्यादचःपरःस्थानषष्ठीनिर्देशा
द्रोपधायोर्निवृत्तिः बभर्ज बभर्जतुः बभर्जिथ बभर्ष्ठ बभर्जे रमभावे बभ्रज्ज बभ्रज्जतुः बभ्रज्जिथ
स्कोरितिसलोपः व्रश्चेतिषः बभ्रष्ठ बभ्रज्जे भ्रष्टा भर्ष्टा भ्रक्ष्यति भर्क्ष्यति क्ङितिरमागमंबाधित्वा
संप्रसारणंपूर्वविप्रतिषेधेन भृज्ज्यात् भृज्ज्यास्तां भर्क्षीष्ट भ्रक्षीष्ट अभार्क्षीत् अभ्राक्षीत् अभर्ष्ट अ
भ्रष्ट क्षिपप्रेरणे क्षिपति क्षिपते क्षेप्ता अक्षैप्सीत् अक्षिप्त कृषविलेखने कृषति कृषते क्रष्टा कर्ष्टा
कृष्यात् कृक्षीष्ट स्पृशमृशकृषेतिसिज्वा पक्षेक्सः सिच्यम्वा अक्राक्षीत् अकार्क्षीत् अकृक्षत् त

ङिंल्लिङ्सिचावितिकित्वादम्न अरुष्ट अरुक्षातां अरुक्षंत अरुक्षत ऋषिगतौपरस्मैपदी ऋषति आ
नर्ष जुषीप्रीतिसेवनयोः आत्मनेपदिनश्चत्वारः जुषते ओविजीभयचलनयोः प्रायेणायमुत्पूर्वः उद्वि
जते विजइट् विजेःपरइडादिप्रत्ययोङिद्वत्स्यात् उद्विजिता उद्विजिष्यते ओलजीओलस्जीव्रीडने
लजते लेजे लेज्जते ललज्जे अथपरस्मैपदिनः ओव्रश्चूच्छेदने ग्रहिज्या व्रश्चति वव्रश्च वव्रश्चतुः
वव्रश्चिथ वव्रष्ठ लिट्यभ्यासस्येतिसंप्रसारणंरेफस्यऋकारः उरत् तस्याचःपरस्मिन्निितिस्थानिवद्भा
वान्नसंप्रसारणइतिवस्योत्वंन व्रश्चिता व्रष्टा व्रश्चिष्यति व्रक्ष्यति वृश्च्यात् अव्रश्चीत् अव्राक्षीत् व्य
चव्याजीकरणे विचति विव्याच विविचतुः व्यचिता व्यचिष्यति विच्यात् अव्याचीत् अव्यचीत् व्यचेः
कुटादित्वमनसीतितुनेहप्रवर्तते अनसीतिपर्युदासेनकृन्मात्रविषयत्वात् उछिउंछे उंछति उच्छी
विवासे उच्छति ऋच्छगतींद्रियप्रलयमूर्तिभावेषु ऋच्छत्यृतामितिगुणः द्विहलग्रहणस्यअनेकह
लुपलक्षणत्वान्नुट् आनर्च्छ आनर्च्छतुः ऋच्छिता मिच्छउत्क्लेशे उत्क्लेशःपीडा मिमिच्छ अमिच्छी
त् जर्जचर्चझर्झपरिभाषणभर्त्सनयोः त्वचसंवरणे तत्वाच ऋचस्तुतौ आनर्च उब्जआर्जवे उ
ज्झउत्सर्गे लुभविमोहने विमोहनमाकुलीकरणं लुभति लोभिता लोब्धा लोभिष्यति रिफकत्थ
नयुद्धनिंदाहिंसादानेषु रिफति रिरेफ रिहेत्येके शिशंननिप्रामातिभीरिहंति तृपतृंफतृप्तौ आद्यःप्र
थमांतः द्वितीयोद्वितीयांतः द्वावपिद्वितीयांतावित्यन्ये तृपति ततर्प तर्पिता स्पृशम्मृशेतिसि
ज्विकल्पः पौषादिकस्यैव अङपवादत्वात् तेनात्रनित्यंसिच् अतर्पीत् तृंफति शस्यङित्वादनि

दितामितिनलोपे शेतृंफादीनां तुम्वाच्यः आदिशब्दः प्रकारे तेनयत्र नकारानुषक्तास्ते तृंफादयः तृंफति त
तृंफ तृंप्यात् तुपतुंपतुफतुंफहिंसायां तुपति तुंपति तुफति तुंफति दृपदृंफउत्क्लेशे प्रथमः प्रथमांतः द्वि-
तीयोद्वितीयांतः प्रथमोद्वितीयांतइत्येके दृफति दृंफति ऋफऋंफहिंसायां ऋफति आनर्फ ऋंफति ऋं
फांचकार गुफगुंफग्रंथे गुफति जुगोफ गुंफति जुगुंफ उभउंभपूरणे उभति उवोभ उंभति उंभांचकार
शुभशुंभशोभार्थौ शुभति शुंभति दृभीग्रंथे दृभति चृतीहिंसाग्रंथनयोः चर्चिता सेऽसिचीतिवेट् च-
र्तिष्यति चर्त्स्यति अचर्तीत् विधविधाने विधति वेधिता जुडगतौ तवर्गपंचमांतइत्येके जुडति ज
रुतोजुनंति मृडसुखने मृडति मर्डिता पृडच पृडति पृणप्रीणने पृणति पपर्ण वृणच वृणति मृण
हिंसायां तुणकौटिल्ये तुतोण पुणकर्मणिशुभे पुणति मुणप्रतिज्ञाने कुणशब्दोपकरणयोः शुनग
तौ द्रुणहिंसागतिकौटिल्येषु घुणघूर्णभ्रमणे षुरऐश्वर्यदीप्त्योः सुरति सुषोर आशिषि सूर्यात् कु
रशब्दे कुरति कूर्यात् अत्रनभकुर्छुरामितिनिषेधोन करोतेरेवतन्त्रग्रहणादित्याहुः खुरछेदने मुरसं-
वेष्टने क्षुरविलेखने घुरभीमार्थशब्दयोः पुरअग्रगमने वृहूउद्यमने दंत्योष्ठ्यादिः पवर्गीयादिरित्यन्ये
तृहूस्तृहूस्तृंहूहिंसार्थाः तृहति ततर्ह स्तृहति तस्तर्ह तर्दा स्तर्हिता स्तर्दा स्तर्हिता अतार्ढ्‌ीत् अ
तार्दीत् इषइच्छायां इषुगमियमांछः इच्छति एषिता एष्टा एषिष्यति इष्यात् ऐषीत् मिषस्पर्द्धायां मिषति
मेषिता किलश्वैत्यक्रीडनयोः तिलस्नेहने चिलवसने चलविलसने इलस्वप्नक्षेपणयोः विलसंवरणे दं
त्योष्ठ्यादिः बिलभेदने ओष्ठ्यादिः णिलगहने हिलभावकरणे शिलषिलउंछे मिलश्लेषणे लिखअक्षर

विन्यासे लिलेख कुटकौटिल्ये गाङ्कुटेतिङित्वं चुकुटिथ चुकोट चुकुट कुटिता पुटसंश्लेषणे कुचसंको-
चने गुजशब्दे गुडरक्षायां डिपक्षेपे छुरछेदने नभकुछुरामितिनदीर्घः छुर्यात् स्फुटविसने स्फुटति पुस्फो-
ट मुटआक्षेपप्रमर्दनयोः त्रुटछेदने वाभ्राशेतिश्यन्वा त्रुट्यति त्रुटति तुत्रोट त्रुटिता तुटकलहकर्मणि
तुटति तुतोट तुटिता चुटछुटछेदने गुडबंधने कडमदे लुटसंश्लेषणे कृडघनत्वे घनत्वंसांद्रता चक्र-
र्ड कृडिता कुडबाल्ये पुडउत्सर्गे घुटप्रतिघाते तुडतोडने तोडनंभेदः थुडस्फुडसंवरणे थुडति तुथोड पु-
स्फोड खुडछुडइत्येके स्फुरस्फुलसंचलने स्फुरस्फुरणे स्फुलसंचलनइत्येके **स्फुरतिस्फुलत्योर्नि-
र्निविभ्यः** षत्वंवास्यात् निष्फुरति निस्फुरति स्फरइत्यकारोपधंकेचित्पठंति पस्फार स्फुडचुडब्रुडसं-
वरणे क्रुडभ्रुडनिमज्जनइत्येके गुरीउद्यमने अनुदात्तेत् गुरते जुगुरे गुरिता णूस्तवने दीर्घांतः परिणूत
गुणोदयः **इतश्चत्वारःपरस्मैपदिनः** नुवति अनुवीत् धूविधूनने धुवति गुपुरीषोत्सर्गे जुगुविथ जुगु-
थ गुता गुष्यति अगुषीत् **ह्रस्वादंगात्** अगुतां अगुषुः **ध्रुगतिस्थैर्ययोः** ध्रुवइतिपाठांतरं आद्यस्य
ध्रुवतीत्यादिगुवतिवत् द्वितीयस्तुसेट् दुध्रुविथ ध्रुविता ध्रुविष्यति ध्रूयात् अध्रुवीत् अध्रुविष्टां कूङ्
शब्दे दीर्घांतइतिकेयटादयः कुविता अकुविष्ट ह्रस्वांतइतिन्यासकारः कुता अकुत **वृत् कुटादयो
वृत्ताः** पृङ् व्यायामे प्रायेणायंव्याङ्पूर्वः रिङ् इयङ् व्याप्रियते व्यापप्रे व्यापप्राते व्यापप्रिरे व्याप-
रिष्यते व्यापृत व्यापृषातां मृङ्प्राणत्यागे **म्रियतेर्लुङ्लिङोश्च** लुङ्लिङोः शितश्चप्रकृतिभूतान्
मृङस्तङ्नान्यत्र ङित्वंस्वरार्थं म्रियते ममार ममर्थ मम्रिव मर्तासि मरिष्यति मृषीष्ट अमृत अपप

रस्मैपदिनः सस रिपिगतौ लघूपधगुणादंतरंगत्वादियङ् रियति पियति रेता पेता धिधारणे क्षिनिवासगत्योः षू
प्रेरणे सुवति सविता कॄविक्षेपे किरति किरतः चकार चकरतुः करिता करीता कीर्यात् अकारीत् किरतौल
वने उपात्किरतेः सुडागमः स्याच्छेदनेर्थे उपस्किरति अडभ्यासव्यवायेपि सुट्कात्पूर्व इतिवक्तव्यं उपा
स्किरत् उपचस्कार हिंसायांप्रतेश्च उपात्प्रतेश्चकिरतेः सुट् स्याद्धिंसायां उपस्किरति प्रतिस्किरति गॄनिग
रणे अचिविभाषा गिरतेरेफस्य लत्वंवास्यादजादौ गिरति गिलति जगार जगाल जगरिथ जगलिथ गरि
ता गरीता गलिता गलीता दृङ् आदरे आद्रियते आद्रियेते आदद्रे आदद्रिषे आदर्त्ता आदरिष्यते आदृषी
ष्ट आदृत आदृषातां धृङ् अवस्थाने ध्रियते अथपरस्मैपदिनः षोडश प्रच्छज्ञीप्सायां पृच्छति पप्रच्छ प
प्रच्छतुः पप्रच्छिथ पप्रष्ठ प्रष्टा प्रक्ष्यति अप्राक्षीत् वृत्त्किरादयोवृत्ताः सृजविसर्गे विभाषासृजिदृशोः
ससर्जिथ सस्रष्ठ स्रष्टा स्रक्ष्यति सृजिदृशोरित्यमागमः सृजेत् सृज्यात् अस्राक्षीत् टुमस्जोशुद्धौमज्जति
ममज्ज मस्जिनशोर्झलीतिनुम् मस्जेरंत्यात्पूर्वोनुम्वाच्यः संयोगादिलोपः ममङ्क्थ ममज्जिथ मङ्क्ता
मङ्क्ष्यति अमाङ्क्षीत् अमाङ्क्तां अमाङ्क्षुः रुजोभंगे रोक्ता रोक्ष्यति अरौक्षीत् अरौक्ताम् भुजोकौटिल्ये
रुजिवत् छुपस्पर्शे छोप्ता अच्छौप्सीत् रुशरिशहिंसायां तालव्यांतौ रोष्टा रोक्ष्यति रेष्टा रेक्ष्यति लिशगतौ
अलिक्षत् स्पृशसंस्पर्शने स्प्रष्टा स्पर्ष्टा स्प्रक्ष्यति स्पर्क्ष्यति अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् विच्छगतौ
गुपूधूपेत्यादयः आर्धधातुकेवा विच्छायति विच्छायांचकार विविच्छ विशप्रवेशने विशति वेष्टा मृश
आमर्शने आमर्शनंस्पर्शः अम्राक्षीत् अमार्क्षीत् अमृक्षत् णुदप्रेरणे कर्त्रभिप्राये ऽपिफलेपरस्मैपदार्थः

पुनःपाठः षद्लृविशरणगत्यवसादनेषु सीदतीत्यादिर्भौवादिकवत् इहपाठोनुम्विकल्पार्थः सीदंती सीद
तीज्वलादिपाठस्तूणार्थःस्वादःस्वरार्थश्च शबनुदात्तः शस्तूदात्तः शद्लृशातने स्वरार्थएवपुनःपाठःशता
तुनास्ति शदेःशितइत्यात्मनेपदोक्तेः अथषट्स्वरितेतः मिलसंगमे मिलसंश्लेषणइतिपठितस्यपुनः
पाठःकर्त्रभिप्रायेतङर्थः मिलति मिलते मिमेल मिमिले मुच्लृमोक्षणे शेमुचादीनां नुमस्यात् मुंचति मुंच
ते मोक्ता मुच्यात् मुक्षीष्ट अमुचत् अमुक्त अमुक्षातां लुप्लृछेदने लुंपति लुंपते अलुपत् अलुप्त विद्लृलाभे
विंदति विंदते विवेद विविदे व्याघ्रभूत्यादिमतेतुसेट्कोऽयं वेदिता भाष्यमतेअनिट्कः वेत्ता परिवेत्ता परि
रत्नवर्जने ज्येष्ठंपरित्यज्यदारानग्नींश्चलब्धवानित्यर्थः तृन्तृचौ लिपउपदेहे उपदेहो वृद्धिः लिंपति लिंपते ले
प्ता लिपिसिचीत्यङ् तङितुवा अलिपत् अलिपत अलिप्त षिचरक्षणे सिंचति सिंचते असिचत् असिचत अ
सिक्त अभिषिंचति अभ्यषिंचत् अभिषिषेच अथत्रयःपरस्मैपदिनः कृतीच्छेदने कृंतति चकर्त कर्तिता
कर्तिष्यति कर्त्स्यति अकर्तीत् खिदपरिघाते खिंदति चिखेद खेत्ता अयंदैन्येदिवादौरुधादौच पिशअवयवे
पिंशति पेशिता अयंदीपनायामपि त्वष्टारूपाणिपिंशतु इतिमुचादयस्तुदादयश्च रुधिरावरणे न-
वस्वरितेतइरितश्च रुधादिभ्यश्श्नम् शपोऽपवादः मित्वादंत्यादचःपरःनित्यत्वाद्गुणंबाधते रुणद्धि श्नसो
रल्लोपःणत्वस्यासिद्धत्वादनुस्वारःपरसवर्णस्तस्यासिद्धत्वाण्णत्वंन नपदांतेतिसूत्रेणानुस्वारपरसवर्णयो
रल्लोपोनस्थानिवत् रुंद्धः रुंधति रुंधे रोद्धा रोत्स्यति रोत्स्यते रुणधु रुंध्यात् रुंधि रुणधानि रुणधै अरुणत् अ
रुंधां दश्चेतिरुः अरुणः अरुणत् अरुणधं अरुधत् अरौत्सीत् अरुद्ध भिदिर्विदारणे भिनत्ति भिंत्ते भेत्ता

भेत्स्यति भेत्स्यते अभिनत् अभिंतां अभिनत् अभिनद् अभिनः अभिनदं अभिंत्त अभिदत् अभैत्सीत्
अभित्त छिदिर् द्वैधीकरणे अच्छिदत् अच्छैत्सीत् अच्छित्त रिचिर्विरेचने रिणक्ति रिंक्ते रिरेच रिरिचे रेक्ता
अरिणक् अरिचत् अरैक्षीत् अरिक्त विचिर् पृथग्भावे विनक्ति विङ्क्ते क्षुदिर् संपेषणे क्षुणत्ति क्षुंत्ते क्षोत्ता
अक्षुदत् अक्षौत्सीत् अक्षुत्त युजिर्योगे योक्ता उच्छृदिर् दीप्तिदेवनयोः छृणत्ति छृंते चच्छर्द सेऽसिचीति
वेट् चच्छृदिषे चच्छृत्से छर्दिता छर्दिष्यति छर्त्स्यति अच्छृदत् अच्छर्दीत् अच्छर्दिष्ट उतृदिर् हिंसानादरयोः तृ
णत्तीत्यादि छृणत्तिवत् कृती वेष्टने परस्मैपदी कृणत्ति आर्धधातुके तौदादिकवत् ञिइंधी दीप्तौ त्रयआत्म
नेपदिनः श्नान्नलोपः श्नमः परस्य नस्य लोपः स्यात् श्नसोरल्लोपः इंधे इंत्से इंधिता इनधै ऐंध ऐंद्धाः खि
ददैन्ये खिन्त्ते खेत्ता विद विचारणे विंत्ते वेत्ता अथ परस्मैपदिनः शिषॢ विशेषणे शिनष्टि शिंष्टः शिंषंति
शिशेषिथ शेष्टा शेक्ष्यति हेर्धिः जश्त्वं ष्टुत्वं झरोझरीतिवालोपः अनुस्वार परसवर्णौ शिण्ढि शिनषाणि
अशिनट् लृदित्वादङ् अशिषत् पिषॢ संचूर्णने पिनष्टि शिषिवत् भंजोआमर्दने भनक्ति बभंजिथ बभ
ङ्क्थ भंक्ता भुज पालनाभ्यवहारयोः भुनक्ति भोक्ता भोक्ष्यति अभुनक् तृह हिसि हिंसायां तृणह इम्
तृहः श्नमिकृते इमागमः स्याद्धलादौपिति तृणेढि तृण्ढः ततर्ह तर्हिता अतृणेट् हिनस्ति जिहिंस हिंसिता
उंदीक्लेदने उनत्ति उंत्तः उंदंति उंदांचकार औनत् औंत्तां औंदन् औनद् औनः औनदं अंजू व्यक्तिम्रक्षण
कांतिगतिषु अनक्ति अङ्क्तः अंजति आनंज आनंजिथ आनङ्क्थ अंक्ता अंजिता 'अङ्ग्धि' अनन
जानि आनक् अंजेःसिचि नित्यमिट् स्यात् आंजीत् तंचू संकोचने तनक्ति तङ्क्ता तंचिता ओविजी भ

यचलनयोः विनक्ति विङ्क्तः विजइडितिङित्वं विविजिथ विजिता अविनक् अविजीत् वृजी वर्जने वृणक्ति
वर्जिता पृची संपर्के पृणक्ति पपर्च **इतिरुधादयः** **अथसतस्वरितेतः** तनुविस्तारे तनादिकृञ्भ्यउः
तनोति तन्वः तनुवः तनुते ततान तेने तनु अतनीत् अतानीत् **तनादिभ्यस्तथासोः** तनादेः सिचोलु
ग्वास्यात्तथासोःपरतः थासासाहचर्यादेकवचनंतशब्देनगृह्यते यूयमतनिष्ट अतानिष्ट अनुदात्तोपदेशे
त्यनुनासिकलोपः तङि अतत अतनिष्ट अतथाः अतनिष्ठाः षणुदाने सनोति सनुते येविभाषा सायात्
सन्यात् जनसनेत्यात्वं असात असनिष्ट असाथाः असनिष्ठाः क्षणुहिंसायां क्षणोति क्षणुते ह्मंतेतिनवृद्धिः
अक्षणीत् अक्षत अक्षणिष्ट अक्षथाः अक्षणिष्ठाः क्षिणुच उप्रत्ययनिमित्तोलघूपधगुणः संज्ञापूर्वकोविधि
रनित्यइतिनभवतीत्यात्रेयादयः भवत्येवेत्येके क्षिणोति क्षेणोति क्षेणितासि क्षेणितासे अक्षेणीत् अक्षित
अक्षेणिष्ट ऋणुगतौ ऋणोति अर्णोति अर्णुतः अर्णुवंति आनर्ण आनृणे अर्णितासि आर्णीत् आर्त आर्णिष्ट
आर्थाः आर्णिष्ठाः तृणु अदने तृणोति तर्णोति तृणुते तर्णुते घृणुदीप्तौ जघर्ण जघृणे **अथद्वावनुदात्तेतौ**
वनुयाचने वनुते ववने चांद्रमतेपरस्मैपदी वनोति ववान मनुअवबोधने मनुते मेने डुकृञ्करणे करो
ति अतउत्सार्वधातुके कुरुतः यण् नभकुर्छुरामितिनदीर्घः कुर्वंति नित्यंकरोतेः करोतेः प्रत्ययोकारस्यनि
त्यंलोपः स्यान्म्वोःपरतः कुर्वः चकर्थ चकृव कर्ता करिष्यति येच कृञउलोपःस्याद्यादौप्रत्ययेपरे कुर्यात्
आशिषि क्रियात् कृषीष्ट अकार्षीत् तनादिभ्यइतिलुकोऽभावेह्रस्वादंगादितिसिचोलोपः अकृत अकृथाः
**संपरिभ्यांकरोतौभूषणे** **समवायेच** संपरिपूर्वस्यकरोतेःसुट्स्याद्भूषणेसंघेचार्थे संस्करोति अलं-

करोतीत्यर्थः संस्कुर्वंति संघीभवंतीत्यर्थः संपूर्णस्यक्वचिदभूषणेऽपिसुट् संस्कृतंभक्षाइतिज्ञापकात् परि
निविभ्यइतिषः परिष्करोति सिवादीनांवा पर्यस्कार्षीत् पर्यष्कार्षीत् उपात्प्रतियत्नवैकृतवाक्याध्याहा
रेषु उपात्कृञः सुट्स्यादेष्वर्थेषुचात्प्रागुक्तयोरर्थयोः प्रतियत्नोगुणाधानं विकृतमेववैकृतंविकारः वा
क्याध्याहारआकांक्षितैकदेशपूरणं उपस्कृताकन्या अलंकृतेत्यर्थः उपस्कृता ब्राह्मणाः समुदिताइत्यर्थः
एधोदकस्योपस्कुरुते गुणाधानंकरोतीत्यर्थः उपस्कृतंभुंक्ते विकृतमित्यर्थः उपस्कृतंब्रूते वाक्याध्याहारेणे
त्यर्थः सुट्कात्पूर्वः अडभ्यासव्यवायेऽपीत्युक्तं संचस्कार कात्पूर्वइत्यादिभाष्येप्रत्याख्यातं तथाहि
पूर्वंधातुरुपसर्गेणयुज्यते अंतरंगत्वात्सुट् ततोद्वित्वं एवंचऋतश्चसंयोगादेर्गुणः संचस्करतुः स्कंभ
इतिसूत्रे ऋतोभारद्वाजस्येतिसूत्रेचकृञोऽसुट्इतिवक्तव्यं तेनससुट्कात्परस्येट् संचस्क रिथ संचस्क
रिव गुणोऽर्तीतिसूत्रेनित्यंछंदसीतिसूत्रान्नित्यमित्यनुवर्तते नित्यंयःसंयोगादिस्तस्येत्यर्थात्सुडादिगुणो
न संस्क्रियात् ऋतश्चसंयोगादेरितिलिङ्सिचोर्नेट् एकाचउपदेशेइतिसूत्रात् उपदेशेइत्यनुवर्त्यउपदेशे
यःसंयोगादिरितिव्याख्यानात् संस्कृषीष्ट समस्कृत समस्कृषातां इतितनादयः डुक्रीञ्द्रव्यविनिमये
क्र्यादिभ्यःश्ना क्रीणाति ईहल्यघोः क्रीणीतः ईत्वात्पूर्वंश्नेरंतादेशः परत्वान्नित्यत्वादंतरंगत्वाच्च
एवंश्नस्याभावः ततःश्नाभ्यस्तयोरित्यालोपः क्रीणंति क्रीणीते क्रीणाते क्रीणते चिक्राय चिक्रियतुः चि
क्रयिथ चिक्रेथ चिक्रियिव चिक्रियिषे क्रेता क्रेष्यति क्रीयात् क्रेषीष्ट अक्रैषीत् अक्रेष्ट प्रीञ्तर्पणेकांतौ
च कांतिःकामना प्रीणाति प्रीणीते श्रीञ्पाके मीञ्हिंसायां हिनुमीना प्रमीणाति प्रमीणीतः मीना

तिमिनोति इत्येज्विषयेआत्वं ममौ मिम्यतुः ममिथ ममाथ मिम्ये माता मास्यति मीयात् मासीष्ट अमासी-
त् अमासिष्टां अमास्त षिञ्बंधने सिनाति सिनीते सिषाय सिष्ये सेता स्कुञ्आप्रवणे स्तंभुस्तंभुस्कं
भुस्कुंभुस्कुञ्भ्यश्नुश्च चात्श्ना स्कुनोति स्कुनुते स्कुनाति स्कुनीते चुस्काव चुस्कुवे स्कोता अस्कौषीत्
अस्कोष्ट स्तंभ्वादयश्चत्वारःसौत्राः सर्वेरोधनार्थाइत्येके माधवस्तुप्रथमतृतीयौस्तंभनार्थौ द्वितीयो
निष्कोषणार्थः चतुर्थोधारणार्थइत्याह सर्वेपरस्मैपदिनः नलोपः विष्टभ्नोति विष्टभ्नाति अवष्टभ्नोति
अवष्टभ्नाति अवतष्टंभ जृस्तंभ्वित्यङ्वा व्यष्टभत् व्यष्टंभीत् स्तभ्नोति स्तभ्नाति वेस्कभ्नातेर्नि-
त्यं वेःपरस्यस्कभ्नातेःसस्यषःस्यात् विष्कभ्नोति विस्कभ्नाति स्कुभ्नोति स्कुभ्नाति हलश्नःशानज्झौ ह
लःपरस्यश्नःशानजादेशःस्यात्हौपरे स्तभान स्तभान स्कभान स्कुभान पक्षेस्तभ्नुहीत्यादि युञ्बंध
ने युनाति युनीते योता क्नूञ्शब्दे क्नूनाति क्नूनीते क्नविता द्रूञ्हिंसायां द्रूणाति द्रूणीते पूञ्पवने प्वा
दीनांन्हस्वः शितिपरे पुनाति पुनीते पविता लूञ्छेदने लुनाति लुनीते स्तॄञ्आच्छादने स्तृणाति स्तृ
णीते तस्तार तस्तरतुः स्तरिता स्तरीता स्तृणीयात् स्तृणीत आशिषिस्तीर्यात् लिङ्सिचोरितिवेट्
नलिङिः वृतइटोलिङिदीर्घोनस्यात् स्तरिषीष्ट उश्चेतिकित्वं स्तीर्षीष्ट सिचिचपरस्मैपदेषितिनदीर्घः
अस्तारीत् अस्तारिष्टां अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट कॄञ्हिंसायां कृणाति कृणीते चकार चकरे वृञ्वर
णे वृणाति वृणीते ववार ववरे वरिता वरीता आशिषि उदोष्ठ्यपूर्वस्य वूर्यात् वरिषीष्ट वूर्षीष्ट अवारी
त् अवारिष्टां अवरिष्ट अवरीष्ट अवूर्ष्ट धूञ्कंपने धुनाति धुनीते दुधविथ दुधोथ दुधुविव धोता धवि

ता स्तुक्षू धूञ्श्य इतीट् अधावीत् अधविष्ट अधोष्ट अथबध्नात्यंताः परस्मैपदिनः शॄ हिंसायां शॄदॄप्रांन्ह्रस्वोवेतिन्ह्र-
स्वपक्षेयण् अन्यदा ऋच्छत्यॄतामितिगुणः शश्रतुः शशरतुः श्र्युकः क्तितीतिनिषेधस्यक्रादिनियमेनबाधः श
श्रिव शशरिव शरिता शरीता शृणीहिशीर्यात् अशारिष्टां पॄपालनपूरणयोः पप्रतुः पपरतुः आशिषि पूर्यात्
वॄवरणे भरणइत्येके भॄभर्त्सने भरणइत्येके मॄहिंसायां मृणाति ममार दॄविदारणे दद्रतुः ददरतुः जॄवयोहानौ
झॄइत्येके धॄइत्यन्ये नॄनये कॄहिंसायां ॠगतौ ऋणाति अरांचकार अरिता अरीता आर्णात् आर्णीतां ईर्या
त् आरीत् आरिष्टां गॄशब्दे गृणाति ज्यावयोहानौ ग्रहिज्या० हलः अंगावयवाद्धलः परंयत्संप्रसारणंतदंतांग
स्यदीर्घः स्यात् इतिदीर्घेकृतेप्वादीनांन्ह्रस्वः जिनाति जिज्यौ जिज्यतुः रीगतिरेषणयोः रेषणंवृकशब्दः ली
श्लेषणे विभाषालीयतेरित्येज्विषयेआत्वंवा ललौ लिलाय लाता लेता ब्लीवरणे ब्लिनाति प्लीगतौ वृत्
ल्वादयोवृत्ताः ल्वादयोऽपीत्येके व्रीवरणे भ्रीभये भरणइत्येके क्षीषृहिंसायां एषांत्रयाणांन्ह्रस्वः केचिन्न
तेतुनज्ञा अवबोधने **ज्ञाजनोर्जा** जानाति **दीर्घ**निर्देशसामर्थ्यान्नह्रस्वः बंधबंधने बध्नाति बबंधिथ
बबंध बंधा बंधारो भन्त्स्यति बधान अभान्त्सीत् पूर्वत्रासिद्धमितिभष्भावात्पूर्वं झलोझलीसिचुलोपः
प्रत्ययलक्षणेनसादिंप्रत्ययमाश्रित्यभष्भावोन प्रत्ययलक्षणंप्रतिसिज्लोपस्यासिद्धत्वात् अबांद्धां
अबांत्सुः वृङ्संभक्तौ वृणीते वव्रे ववृषे ववृढ्वे वरिता वरीता अवरिष्ट अवरीष्ट अवृत श्रंथविमोचनप्र
तिहर्षयोः इतः परस्मैपदिनः श्रथ्नाति श्रंथिग्रंथीत्यादिनाकित्वपक्षेएत्वाभ्यासलोपावप्यत्रवक्तव्याविति
हरदत्तादयः श्रेथतुः श्रेथुः इदंकित्वंपितावपीतिसुधाकरमते श्रेथिथ अस्मिन्नपिपक्षेणलिशश्राथ उत्तमे

तुशश्राथ शश्रथेतिमाधवः तत्र मूलं मृग्यं मंथविलोडने श्रंथग्रंथसंदर्भे अर्थभेदाच्छ्रंथेःपुनःपाठः रूपंतू
क्तं कुंथसंश्लेषणे संक्लेशइत्येके कुथ्नाति चुकुंथ कुथेतिदुर्गः चुकोथ मृदक्षोदे मृद्नाति मृदान मृडच अयं
क्ष्रवेऽपि ष्टुत्वं मृडूणाति गुधरोषे गुध्नाति कुषनिष्कर्षे कुष्णाति कोषिता निरःकुषः निरःपरस्यकुषोव
लादेरार्धधातुकस्येड्वास्यात् निष्कोषिता निष्कोष्टा निरकोषीत् निरकुक्षत् क्षुभसंचलने क्षुभ्नादिषु
च क्षुभ्नाति क्षुभ्नीतः क्षोभिता क्षुभाण णभतुभहिंसायां नभ्नाति तुभ्नाति नभते तोभते इतिशपिन-
भ्यति तुभ्यति इतिश्यनि क्लिशूविबाधने शादितिश्चुत्वनिषेधः क्लिश्नाति क्लेशिता क्लेष्टा अक्लेशीत् अ
क्लिक्षत् अशभोजने अश्नाति आशउध्रसउंछे उकारइत् ध्रस्नाति उकारोधात्ववयवइत्येके उध्रसांचका
र इषआभीक्ष्ण्ये पौनःपुन्यंभृशार्थोवा आभीक्ष्ण्यं इष्णाति एषिता तीषसहेत्यत्रसहि नासाहचर्याद-
कारविकरणस्यतौदादिकस्यैवइषेर्ग्रहणंनतुइष्यतीष्णात्योरित्याहुः यस्तुतस्तुइष्णातेरपीड्विक
ल्पउचितः तथाचवार्तिकं इषेस्तकारेश्यन्प्रत्ययात्प्रतिषेधइति विषविप्रयोगे विष्णाति वेष्टा प्रुष
प्लुषस्नेहनसेवनपूरणेषु प्रुष्णाति प्लुष्णाति पुषपुष्टौ पोषिता मुषस्तेये मोषिता खचभूतप्रादुर्भावे
भूतप्रादुर्भावोअतिक्रांतोत्पत्तिः खच्ञाति वांतोऽयमित्येके छ्वोःशूडनुनासिकेच सतुक्कस्यछस्यवस्य
चक्रमाच्छऊठेतावादेशौस्तोनुनासिकेक्वौझलादौक्ङितिच खौनाति चखाव खविता शानचः पर
त्वाद्ऊठि कृतेहलंतत्वाभावान्नशानच् खौनीहि हिठच ष्टुत्वं हिठ्नाति ग्रहउपादाने स्वरितेत् ग्रहि
ज्या गृण्हाति गृण्हीते ग्रहोऽलिटिदीर्घः एकाचोग्रहोर्विहितस्येटोदीर्घस्यान्नतुलिटि ग्रहीता लिटितु

जग्रहिथ गृह्यात् ग्रहीषीष्ट ह्म्यंतेतिन वृद्धिः अग्रहीत् अग्रहीष्टां अग्रहीष्ट अग्रहीषातां इतिक्र्यादयः चुर
स्तेये **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्योणिच्** ए
भ्योणिच्स्यात् चूर्णांतेभ्यः प्रातिपदिकाद्धात्वर्थइत्येवसिद्धेतेषामिह ग्रहणं प्रपंचार्थं चुरादिभ्यस्तुस्वार्थे
पुगंतेतिगुणः सनाद्यंताइतिधातुत्वं तिप्शपादिगुणायादेशोचोरयति **णिचश्च** णिजंतादात्मनेपदं
स्यात्कर्तृगामिनिक्रियाफले चोरयते चोरयामास चोरयिता चोर्यात् चोरयिषीष्ट णिश्रीतिचङ् णौच
ङीतिह्रस्वः द्वित्वं हलादिःशेषः दीर्घोलघोरित्यभ्यासदीर्घः अचूचुरत् अचूचुरत चितिस्मृत्यां चिंत
यति अचिचिंतत् चिंतेतिपठितव्येइदित्करणंणिचः पाक्षिकत्वेलिंगं तेनचिंत्यात् चिंततेइत्यादौनलो
पोन चिंतति चिंतेत् एतच्चज्ञापकंसामान्यापेक्षमित्येके अतएवकृहलित्यत्रवृत्तिकृताजगणातुः जगणुरि
त्याद्युदाहृतत्वात् विशेषापेक्षमित्यपरे अतएवआधृषाद्वेत्यस्यनवैयर्थ्यं यंत्रिसंकोचे यंत्रयति यंत्रेतिप
ठितुंयुक्तं यत्तुइदित्करणाद्यंत्रतीतिमाधवेनोक्तं तच्चिंत्यं एवंकुद्रितंत्रिमंत्रिषु स्फुडिपरिहासे स्फुंडयति
इदित्करणात्स्फुडति स्फुटीतिपाठांतरं स्फुंटयति स्फुंटति लक्षदर्शनांकनयोः कुद्रिअनृतभाषणे कुंद्रय
ति लडउपसेवायां लाडयति मिदिस्नेहने मिंदयति मिंदति ओलडिउत्क्षेपणे ओलंडयति ओलंडति ओका
रइदित्येके लंडयति लंडति उकारादिरित्यन्ये जलअपवारणे लजइत्येके पीडअवगाहने पीडयति **भ्राज
भासभाषदीपजीवमीलपीडामन्यतरस्यां** एषामुपधायाह्रस्वोवास्याच्चङ्परेणौअपीपिडत् अपिपीड
त् नटअवस्पंदने अवस्पंदनंनाट्यं श्रथप्रयत्ने प्रस्थानइत्येके बधसंयमने बाधयति बंधेतिचांद्रः पूपूरणे

पारयति दीर्घोच्चारणंणिचः पाक्षिकत्वेलिंगं तद्धिसेट्कत्वाय एवंच पृणातिपिपर्तिभ्यां परितेत्यादिसिद्धावपि
परतिपरतइत्यादिसिद्धिः फलं ऊर्जबलप्राणनयोः पक्षपरिग्रहे वर्णचूर्णप्रेरणे वर्णवर्णनइत्येके प्रथप्रख्याने
प्राथयति नान्येमितोऽहेताविति वक्ष्यमाणत्वान्मास्यमितं अत्स्मृदृत्वरप्रथम्रदस्तृस्पशां एषामभ्यासस्याका
रोऽतादेशःस्याच्चङ्परेणौ इत्यपवादः अपप्रथत् पृथप्रक्षेपे पर्थयति उर्ऋत् उपधायाऋवर्णस्यस्थानेऋ
त्स्याद्वाचङ्परेणौ इररारामपवादः अपीपृथत् अपपर्थत् पथइत्येके पाथयति षंबसंबंधने संबयति
अससंबत् शंबच सांबइत्येके भक्षअदने कुट्ट छेदनभर्त्सनयोः पूरणइत्येके कुट्टयति पुट्टचुट्टअल्पीभावे
अट्टषुट्टअनादरे अट्टयति अयंदोपधः ष्टुत्वस्यासिद्धत्वान्नंद्राइतिनिषेधः आट्टिटत् लुंठस्तेये लुंठयति लुंठ
तीतितुलुंठिस्तेयइतिभौवादिकस्य शठश्वठअसंस्कारगत्योः श्वठिइत्येके तुजिपिजिहिंसाबलादाननिके
तनेषु तुंजयति पिंजयति इदित्करणात्तुंजति पिंजति तुजपिजेतिकेचित् लजिलुजिइत्येके पिसगतौ पेसय
ति पेसतीतिशापिगतं षांत्वसामप्रयोगे श्वल्कवल्कपरिभाषणे ष्णिहस्नेहने स्फिटइत्येके स्फिटअनादरे अ
षोपदेशत्वान्नषः असिस्मिटत् ष्मिड्अनादरइत्येके ङित्वस्यावयवेऽचरितार्थत्वाण्णिजंतात्तङ्स्मायय्ते
श्लिषश्लेषणे पथिगतौ पंथयति पिच्छकुट्टने छदिसंवरणे छंदयति छंदति श्रणदाने प्रायेणाऽयंविपूर्वः विश्राण
यति तडआघाते ताडयति खडखडिकडिभेदने खाडयति खंडयति खंडति कंडयति कंडति कुडिरक्षणे गुडिवेष्टने
रक्षणइत्येके कुठिइत्यन्ये अवकुंठयति अवकुंठति गुठिइत्यपरे खुडिखंडणे वडिविभाजने वंटइत्येके मडिभूषा
यांहर्षेच भडिकल्याणे छर्दवमने पुस्तबुस्तआदरानादरयोः चुदसंचोदने नक्कधक्कनाशने णोपदेशलक्षणेपर्यु

दस्तोऽयं प्रनक्कयति चक्कचुक्कव्यथने क्षलशौचकर्मणि तलप्रतिष्ठायां तुलउन्माने तोलयति अतूतुलत् कथं
तुलयति तुलनेत्यादि अतुलोपमाभ्यामितिनिपातनादङंतस्यतुलाशब्दस्यसिद्धौततोणिच् दुलउत्क्षेपे पुल
महत्वे चुलसमुच्छ्राये मूलरोहणे कलविलक्षेपे बिलभेदने तिलस्नेहने चलभृतौ पालरक्षणे लूषहिंसायां शुल्ब
मानेशूर्पच चुटच्छेदने मुटसंचूर्णने पडिपसिनाशने पंडयति पंडति पंसयति पंसति वजमार्गसंस्कारग
त्योः शुल्कअतिस्पर्शने चंपिगत्यां चंपयति चंपति क्षपिक्षांत्यां क्षंपयति क्षंपति क्षजिकृच्छ्रजीवने श्वर्तगत्यां
श्वभ्रच ज्ञपमिच्च अयंज्ञानेज्ञापनेचवर्तते मितांन्हस्वः मितामुपधायान्हस्वःस्याण्णौ ज्ञपयति यमचपरिवेष
णे चान्मित्परिवेषणमिहवेष्टनं नतुभोजनानापिवेष्टनायमयतिचंद्रं परिवेष्टतइत्यर्थः चहपरिकल्कने चह
यति अचीचहत् कथादेर्वक्ष्यमाणस्यत्वदंतत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौन अचचहत् चपइत्येके चपयति र
हत्यागइत्येके अरीरहत् कथादेस्तु अररहत् बलप्राणने बलयति चिञ्चयने **चिस्फुरोर्णौ** आत्वंवास्यात् अ
र्तिन्हीव्लीरी क्नूयीक्ष्माय्यातांपुङ्णौ एषांपुक्स्याण्णौ चपयति चययति ञित्वकरणसामर्थ्यादस्यणिज्विक
ल्पः चयति चयते प्रणिचयति प्रनिचयति **नान्येमितोऽहेतौ** अहेतौ स्वार्थेणिचिज्ञपादिभ्योऽन्येमितोनस्युः
तेनशमादीनांअमंतत्वप्रयुक्तं मित्वंन घट्टचलने मुस्तसंघाते खट्टसंवरणे षट्टस्फिट्टचुबिहिंसायां पूलसंघाते
पूणइत्येके पुणेत्यन्ये पुंसअभिवर्द्धने टकिबंधने टंकयति टंकति धूसकांतिकरणे धूसयति दंत्यांतः मूर्द्धन्यांत
इत्यन्ये तालव्यांतइत्यपरे कीटवर्णे चूर्णसंकोचने पूजपूजायां अर्कस्तवने तपनेइत्येके शुठआलस्ये शुठिशो
षणे शुंठयति शुंठति जुडप्रेरणे गजमार्जशब्दार्थौ गाजयति मार्जयति मर्चच मर्चयति घृप्रस्रवणे स्राव

णेइत्येके पचिविस्तारवचने पंचयति पंचतेइतिव्यक्तार्थस्यशपिगतं तिजनिशाने तेजयति कृतसंशब्दने उप
धायाश्च धातोरुपधाभूतस्यऋतउत्स्यात् रपरत्वंउपधायांचेतिदीर्घः कीर्तयति उर्ऋत् अचीकृतत् अ
चिकीर्तत् वर्धच्छेदनपूरणयोः कुबिआच्छादने कुंबयति कुंबति कुभि इत्यन्ये लुबितुबिअदर्शने अर्दन
इत्येके ल्हपव्यक्तायांवाचि क्लपेत्यन्ये चुटिच्छेदने इलप्रेरणे एलयति ऐलिलत् म्रक्षम्लेच्छने म्लेच्छअव्यक्ता
यांवाचि ब्रूसबर्हहिंसायां केचिदिहगर्जगर्दशब्दे गर्धअभिकांक्षायामितिपठंति गुर्दपूर्वनिकेतने जसिर
क्षणे मोक्षणइतिकेचित् जंसयति जंसति ईडस्तुतौ जसुहिंसायां पिडिसंघाते रुषरोषे रुटइत्येके डिप
क्षेपे ष्टुपसमुच्छ्राये आकुस्मादात्मनेपदिनः कुस्म नाम्नोवेति वक्ष्यते तमभिव्याप्येत्यर्थः अकर्तृगामि
फलार्थमिदं चितसंचेतने चेतयते अचीचितत दशिदंशने दंशयते अददंशत इदित्वाण्णिजभावे दंशा-
ति आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः नलोपेसंजिसाहचर्यात्प्वादेरेवग्रहणं द-
सिदर्शनदंशनयोः दंसयते दंसति दंसेत्यप्येके डपडिपसंघाते तंत्रिकुटुंबधारणे तंत्रयते चांद्रस्तु धातु
द्वयमितिमत्वा कुटुंबयतइत्युदाहरंति मंत्रिगुप्तपरिभाषणे स्पशग्रहणसंश्लेषणयोः तर्जभर्त्सतर्जने
बस्तगंधअर्दने बस्तयते गंधयते विष्कहिंसायां हिष्केत्येके निष्कपरिमाणे ललईप्सायां कूणसंकोचने
तूणपूरणे भ्रूणआशाविशंकयोः शठश्लाघायां यक्षपूजायां स्यमवितर्के गूरउद्यमने शमलक्षआलोचने
नान्येमितइतिमित्त्वनिषेधः शासयते कुत्सअवक्षेपणे त्रुटच्छेदने कुटइत्येके गलस्रवणे भलआभंडने
कूटआप्रदाने अवसादइत्येके कुट्टप्रतापने वंचुप्रलंभने वृषशक्तिबंधने शक्तिबंधनं प्रजननसामर्थ्यं

शक्तिसंबंधश्च वर्षयते मदत्वृप्तियोगे दिवु परिकूजने गृ विज्ञाने गारयते विद चेतनाख्याननिवासेषु वेद
यते सत्तायां विद्यते ज्ञाने वेत्ति विंत्ते विचारणे विंदते विंदति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् मनस्तंभे
मानयते युजुगुप्सायां यावयते कुस्म नाम्नो वा कुस्मेति धातुः कुत्सितस्मये वर्तते कुस्मयते अचुकुस्मत
अथवा कुस्मेति प्रातिपदिकं ततो धात्वर्थे णिच् इत्याकुस्मीयाः चर्च अध्ययने बुक्क भाषणे शब्द उपसर्गा-
दाविष्कारे च भाषणे प्रतिशब्दयति प्रतिश्रुतमाविष्करोतीत्यर्थः अनुपसर्गाच्च आविष्कार इत्येव कण नि
मीलने काणयति णौ चङ्युपधाया ह्रस्वः काण्यादीनां वेति विकल्प्यते अचीकणत् अचकाणत् जभि
नाशने जंभति जंभयति षूद क्षरणे सूदयति असूषुदत् जसु ताडने जासयति जसति पश बंधने पाशय
ति अम रोगे आमयति नान्ये मित इति निषेधः अम गत्यादौ अपि गतः तस्माद्धेतुमण्णौ आमयति न कम्य-
मिचमामिति मित्वनिषेधः चट स्फुट भेदने विकासे शपोः स्फुटति स्फोटते इत्युक्तं घट संघाते घाटयति हं
त्यर्थाश्च नवगण्यामुक्ता अपि हंत्यर्थाः स्वार्थे णिचं लभंत इत्यर्थः दिवु मर्दने उदित्त्वाद्भूवतीत्यपि अर्ज प्रतियत्ने
अयमर्थांतरेऽपि द्रव्यमर्जयति घुषिर विशब्दने घोषयति घुषिरविशब्दन इति सूत्रेऽविशब्दन इति निषेधा
ल्लिंगादनित्योऽस्य णिच् घोषति इरित्वादङ्वा अघुषत् अघोषीत् ण्यंतस्य तु अजूघुषत् आङः क्रंद सातत्ये
भौवादिकः क्रंद धातुः आह्वानाद्यर्थ उक्तः स एवाङ्पूर्वो णिचं लभते सातत्ये आक्रंदयति अन्ये तु आङ्पूर्वो-
घुषिः क्रंद सातत्य इत्याहुः आघोषयति लस शिल्पयोगे तसि भूष अलंकरणे अवतंसयति अवतंसति भूष
यति अर्ह पूजायां ज्ञा नियोगे आज्ञापयति भज विश्राणने शृधु प्रहसने अशशर्धत् अशीशृधत् यत निकारोप

स्करयोः रकलगआस्वादने रघइत्येके रगइत्यन्ये अंचुविशेषणे अंचयति उदित्त्वमिड्विकल्पार्थं अतएवविभा
षितोणिच् अंचयति एवंशुधुजस्कप्रभृतीनामपीतिबोध्यं लिगिचित्रीकरणे लिंगयति लिंगति मुदसंसर्गे मो
दयति सक्तून्घृतेन त्रसधारणे ग्रहणइत्येके वारणइत्यन्ये उध्रस्उंछे उकारोधात्ववयवइत्येके नेत्यन्ये ध्रा
सयति उध्रासयति मुचप्रमोचनेमोदनेच वसस्नेहच्छेदापहरणेषु चरसंशये च्युसहने हसनेचेत्येके च्योसय
ति भुवोअवकल्कने अवकल्कनंमिश्रीकरणं चिंतनमित्यन्ये भावयति कल्पेश्च कल्पयति आस्वादतःसक
र्मकात् स्वादिमभिव्याप्यसंभवत्कर्मकेभ्यएवणिच् ग्रसग्रहणे ग्रासयतिफलं पुषधारणे पोषयत्याभरणं द
लविदारणे दालयति पटपुटलुटतुजिमिजिपिजिलुजिभजिलघित्रसिपिसिकुसिदशिकुशिघटघटिबृहिब
र्हबल्हगुपधूपविच्छचीवपुथलोकलोचृणदकुपतर्कवृतुवृधुभाषार्थाः पाटयति पोटयति लोटयति तुंज
यति तुंजति एवंपरेषां घाटयति घंटयति नाग्लोपिशास्वृदितां णिच्यग्लोपिनःशास्तेरृदितांचोपधाया
ह्रस्वोनस्याच्चङ्परेणौ अलुलोकत् अलुलोचत् वर्तयति वर्धयति उदित्वाद्वर्तति वर्द्धति रुटलजिअजिदसि
भृशिरुशिशीकनटपुटिजुरिरघिलघिअहिरहिमहिच तडितडतलच पूरीआप्यायने ईदित्वंनिष्ठायामि
णिनषेधार्थं अतएवणिज्वा पूरयति पूरति रुजहिंसायां षदआस्वादने स्वादइत्येके असिष्वदत् दीर्घस्यत्व
षोपदेशत्वात् असिस्वदत् आधृषाद्वा इतऊर्ध्वंविभाषितणिचः धृषधातुमभिव्याप्य युजपृचसंयमने यो
जयति योजति अयोक्षीत् पर्चयति पर्चति पर्चिता अपर्चीत् अर्चपूजायां षहमर्षणे साहयति सएवायंना
गःसहतिकलभेभ्यःपरिभवं ईरक्षेपे लीद्रवीकरणे लाययति लयति लेता वृजीवर्जने वर्जयति वर्जति

वृञ्आवरणे वारयति वारयते वरति वरते वरिता वरीता ज्वयोहानौ जारयति जरति जरिता जरीता ज्रिच
ज्रापयति ज्रयति ज्रेता रिचवियोजनसंपर्चनयोः रेचयति रेचति रेक्ता शिषअसर्वोपयोगे शेषयति शेषति
शेष्टा अशिक्षत् अयंविपूर्वोऽतिशये तपदाहे तापयति तपति तप्ता तपत्त्वसौ संदीपनइत्येके तर्पयति तर्प
ति तर्पिता छृदीसंदीपने छर्दयति छर्दति छर्दिता छर्दिष्यति सेऽसीतिविकल्पोन साहचर्यात्तित्ररोधादिकस्यै
वग्रहणात् चृपछृपदृपदृपसंदीपनइत्येके चर्पयति छर्पयति दृभीभये दर्भयति दर्भति दर्भिता दृभसंदर्भे
अयंतुदादावीदित् श्रंथमोक्षणे हिंसायामित्येके मीगतौ माययति मयति मेता ग्रंथबंधने ग्रंथयति ग्रंथ-
ति शीकआमर्षणे चीकच अर्दहिंसायां स्वरितेत् अर्दयति अर्दयते अर्दति अर्दते हिसिहिंसायां हिंसय
ति हिंसति हिनस्तिइतिश्नमिगतं अर्हपूजायां आङःषदपद्यर्थे आसादयति आसीदति पाघ्रेतिसीदादे-
शः आसत्ता आसात्सीत् शुंधशौचकर्मणि शुंधिता अशुंधीत् अशुंधिष्टां छदअपवारणे स्वरितेत् जुष
परितर्कणे परितर्कणमूहोहिंसावा परितर्पणमित्यन्ये परितर्पणंपरितृप्तिक्रिया जोषयति जोषति प्री
तिसेवनयोर्जुषतेइतितुदादौ धूञ्कंपने णावित्यधिकृत्य धूञ्प्रीञोर्नुक्वक्तव्यः धूनयति धवति ध
वते केचित्तु धूञ्प्रीणोरितिपठित्वाप्रीणातिसाहचर्याद्धूनातेरेवनुकमाहुः धावयति अयंस्वादौक्र्यादौ
तुदादौच स्वादौन्हस्वश्च तथाचकविरहस्ये धूनोतिचंपकवनानिधुनोत्यशोकंचूतंधुनाति धुवतिस्फुटिता
तिमुक्तं वायुर्विधूनयतिचंपकपुष्परेणून्यत्कानने धवतिचंदनमंजरीश्च १ प्रीञ्तर्पणे प्रीणयति धूञ्
प्रीणोरितिहरदत्तोक्तपाठेतु प्राययति प्रयति प्रयते श्रंथग्रंथसंदर्भे आप्लृलंभने आपयति आपति आप्ता

आपत् स्वरितेदयमित्येके आपते तनुश्रद्धोपकरणयोः उपसर्गाच्च दैर्घ्ये तानयति वितानयति तनति वितन
ति चनश्रद्धोपहननयोरित्यन्ये चानयति चनति वदसंदेशवचने स्वरितेत् वादयति वदति वदते अनुदात्ते-
दित्येके ववदतुः ववदिथ ववदे वद्यात् वचपरिभाषणे वाचयति वचति वक्ता अवाक्षीत् मानपूजायां
मानयति मानति मानिता विचारणेतुभौवादिकोनित्यसन्नंतः स्तंभे मानयते इत्याकुस्मीयाः मन्यतेइति
दिवादौमनुतेइतितनादौ भूप्राप्तावात्मनेपदी भावयते भवते णिच्संनियोगेनैवात्मनेपदमित्येके भव
ति गर्हविनिंदने मार्गअन्वेषणे कंठिशोके उत्पूर्वोऽयमुत्कंठायां कंठतेइत्यात्मनेपदीगतः मृजूशौचालंकार
योः मार्जयति मार्जति मार्जिता मार्ष्टा मृषस्तितिक्षायां स्वरितेत् मर्षयति मर्षयतेमर्षति मर्षते मृष्यति मृ
ष्यतेइतिदिवादौ सेचनेशापिमर्षति धृषप्रसहने धर्षयति धर्षति इत्याधृषीयाः अथादंताः कथवाक्यप्रबं
धे अल्लोपस्यस्थानिवत्वान्नवृद्धिः कथयति अग्लोपित्वान्नदीर्घसन्वद्भावो अचकथत् वरईप्सायां वरय
ति धारयतीतिगतं गणसंख्याने गणयति ईचगणः गणेरभ्यासस्यईत्स्यात्चङ्परेणौ चादुत् अजग
णत् अजीगणत् शठश्वठसम्यगवभाषणे पठ वठग्रंथे रहत्यागे अररहत् स्तनगदीदेवशब्दे स्तनयति
गदयति अजगदत् पतगतौवा वाणिजंतः वाऽदंतइत्येके आद्येपतयति पतति पतांचकार अपतीत्
द्वितीयेपातयति अपीपतत् पषअनुपसर्गात् गतावित्येव पषयति स्वरआक्षेपे स्वरयति रचप्रतियत्ने
रचयति कलगतौसंख्यानेच चहपरिकल्कने कल्कनंदंभःशाठ्यंच महपूजायां महयति महतीति श्र
पिगतं सारकृपश्रथदौर्बल्ये सारयति कृपयति श्रथयति स्पृहईप्सायां भामक्रोधे अबभामत् सूचपे

भून्ये सूचयति अषोपदेशत्वान्नषः असूसूचत् खेटभक्षणे तृतीयांतइत्येके खोटइत्यन्ये क्षोटक्षेपे गो
मउपलेपने अजुगोमत् कुमारक्रीडायां अचुकुमारत् शीलउपधारणे उपधारणमभ्यासः सामसांत्वप्र
योगे अससामत् षामसांत्वनइत्यतीतस्यतुअससीषमत् वेलकालोपदेशे वेलयति कालइतिपृथग्धातु
रित्यन्ये कालयति पल्यूलल्लन पवनयोः वातसुखसेवनयोः गतिसेवनयोरित्येके वातयति अववातत्
गवेषमार्गणे अजगवेषत् वासउपसेवायां निवासआच्छादने भाजपृथक्कर्मणि सभाजप्रीतिदर्शनयोः प्री
तिसेवनयोरित्यन्ये सभाजयति ऊनपरिहाणे ऊनयति ओःपुयण्जीतिसूत्रेपययोरितिवक्तव्येवर्गप्रत्या-
हारजग्रहोलिंगं णिच्यचआदेशोनस्यात्द्विर्त्वेकार्येइति यत्रद्विरुक्तोअभ्यासोत्तरखंडस्यआद्योऽच्प्रक्रियायांप्र
शिनिष्ठितेवारूपेऽवर्णोलभ्यतेतत्रैवाऽयंनिषेधः ज्ञापकस्यसजातीयापेक्षत्वात्तेनाचिकीर्तदितिसिद्धं प्रकृतेतु
नशब्दस्यद्वित्वंततउत्तरखंडेऽल्लोपः औननत् माभवानूननत् ध्वनशब्दे अदध्वनत् कूटपरितापे परिदाह
इत्यन्ये संकेतग्रामकुणगुणचामंत्रणे चात्कूटोऽपि कूटयति संकेतयति ग्रामयति कुणयतिगुणयति पा
ठांतरं केतश्रावणेनिमंत्रणेच केतयति निकेतयति कुणगुणचामंत्रणे चकारात्केतकूणसंकोचे नइति स्ते
नचौर्ये अतिस्तेनत् आगर्वादात्मनेपदिनः पदगतौ पदयते अपपदत गृहग्रहणे गृहयते मृगअन्वेषणे मृ
गयते मृग्यतीति कंड्वादिः कुहविस्मापने शूरवीरविक्रांतौ स्थूलपरिबृंहणे स्थूलयते अतुस्थूलत अर्थउ
पयाच्ञायां अर्थयते आर्तथत सत्रसंतानक्रियायां अससत्रत अनेकाच्त्वान्नषोपदेशः सिसत्रयिषते
गर्वमाने गर्वयते अदंतत्वसामर्थ्याण्णिज्विकल्पः धातोरंतउदात्तः लिट्याम्चफलं एवमग्रेऽपि इत्यागर्वीयाः

सूत्रवेष्टने सूत्रयति असुसूत्रत् मूत्रप्रस्रवणे मूत्रयति रूक्षपारुष्ये पारतीरकर्मसमाप्तौ अपपारत् अन
तितीरत् पुटसंसर्गे पुटयति धेकदर्शनइत्येके आदिधेकत् कत्रशैथिल्ये कत्रयति कत्रति कर्त्तेत्यप्येके
कर्त्तयति कर्तति प्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्च प्रातिपदिकाद्धात्वर्थेणिच्स्यात् इष्ठेयथाप्रातिपदि
कस्यपुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपिस्युः पटुमाच
ष्टेपटयति परत्वाद्वृद्धौसत्यांटिलोपः अपीपटत् णौचङ्गित्यत्रभाष्येतु वृद्धेर्लोपोबलीयानितिस्थितं अपप
टत् तत्करोतितदाचष्टे पूर्वस्यप्रपंचः करोत्याचष्टइतिधात्वर्थमात्रेणिजर्थः लडर्थस्त्वविवक्षितः तेनाति
क्रामति अश्वेनातिक्रामति अश्वयति हस्तिनाअतिक्रामति हस्तयति धातुरूपंच णिच्प्रकृतिर्धातुरूपंप्रति
पद्यते चशब्दोऽनुक्तसमुच्चयार्थः तथाचवार्तिकं आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्र
कृतिवच्चकारकमिति कंसवधमाचष्टे कंसंघातयति इहकंसहन्इतिस्थिते हनस्तोऽचिण्णलोः हंतेस्त
कारोऽतादेशःस्याच्चिण्णल्वर्जे ञ्णितिक्ङितिच नन्वत्रांगसंज्ञाधातुसंज्ञाचकंसविशिष्टस्यप्राप्ता ततश्च
टाद्वित्वयोर्दोषः किंचकुत्वतत्वेनस्यातां धातोःस्वरूपग्रहणेतत्प्रत्ययेकार्यविज्ञानात् सत्यंप्रकृतिवच्चेति
चकारोभिन्नक्रमः कारकंच चात्कार्यं हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौयादृशंकारकंधातावनंतर्भू
तंद्वितीयांतंयादृशंच कार्यंकुत्वतत्वादितदिहापीत्यर्थः कंसमजीघतत् कर्तृकरणाद्धात्वर्थे कर्तुर्व्यापा
रार्थयत्करणंनतुचक्षुरादिमात्रमित्यर्थः असिनाहंतिअसयति वक्षदर्शने चित्रचित्रीकरणे आलेख्यक
रणेइत्यर्थः कदाचिद्दर्शनेचित्रेत्ययमद्भुतदर्शनेणिचंलभतेचित्रयति अंससमाघाते वटविभाजने लज-

जप्रकाशने वटिलजि इत्येके वंटयति लंजयति अदंतेषु पाठबलाददंतत्वेऽपि वृद्धिरित्यन्ये वंटापयति लंजाप
यति शाकटायनस्तु कथादीनां सर्वेषां वृद्धिमाह तन्मते कथापयति गणापयतीत्यादि मिश्रसंपर्के संग्रामयुद्धे
अयमनुदात्तेत् अकारप्रश्लेषात् असंसंग्रामत स्तोमश्लाघायां अतुस्तोमत् छिद्रकर्णभेदने करणभेद इ
त्येके कर्णेतिधात्वंतरमित्यन्ये अंधदृष्ट्युपघाते उपसंहार इत्यन्ये आंदधत् दंडदंडनिपातने अंकपदे ल
क्षणे च आंचकत् अंगच आंजगत् सुखदुःखतत्क्रियायां रसआस्वादनस्नेहनयोः व्ययवित्तसमुत्सर्गे अ
वव्ययत् रूपरूपक्रियायां रूपस्यकरणं दर्शनं वा रूपक्रिया छेदद्वैधीकरणे अचिच्छेदत् छद अपवारण इ
त्येके छदयति लाभप्रेरणे व्रणगात्रविचूर्णने वर्णवर्णक्रियाविस्तारगुणवचनेषु वर्णक्रिया वर्णकरणं
सुवर्णं वर्णयति कथां वर्णयति विस्तृणातीत्यर्थः हरिं वर्णयति स्तौतीत्यर्थः बहुलमेतन्निदर्शनं अदंत था
तु निदर्शनमित्यर्थः बाहुलकादन्येऽपि बोध्याः तद्यथा पर्णहरितभावे अपपर्णत् विष्कदर्शने क्षपप्रेरणे
वसनिवासे तुत्थ आवरणे एवमांदोलयति प्रेंखोलयति विडंबयति अवधीरयतीत्यादि अन्ये तु दशगणी
पाठो बहुलमित्याहुः तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः अपरे तु नवगणीपठितेभ्योऽपि क्वचि
त्स्वार्थे णिचमाहुः रामो राज्यमचीकरदिति यथेत्याहुः चुरादिभ्य एव बहुलं णिजित्येके सर्वे पक्षाः प्राचां
ग्रंथे स्थिताः णिङंगान्निरसने अंगवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात् हस्तौ निरस्यति हस्त
यते पादयते श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च श्वेताश्वादीनां चतु र्णा
मश्वादयो लुप्यंते णिङ् च धात्वर्थे श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते अश्वतरमाचष्टे अश्वय

ते गालोडितंवाचांविमर्शस्तत्करोतिगालोडयते आव्हरयते केचित्तुणिचमेवानुवर्तयंति तन्मतेपरस्मै
पदमपि पुच्छादिषुधात्वर्थइत्येवसिद्धं णिजंतादेवलबहुवचनादात्मनेपदमस्तु मास्तुपुच्छभांडेतिणिङ्
विधिः सिद्धशब्दोग्रंथांतेमंगलार्थः इतिचुरादयः तत्प्रयोजकोहेतुश्च कर्तुःप्रयोजकोहेतुसंज्ञः कर्तृसंज्ञ
श्चस्यात् हेतुमतिच प्रयोजकव्यापारेप्रेषणादौवाच्येधातोर्णिच्स्यात् भवंतंप्रेरयतिभावयति णिचश्चे
तिकर्तृगेफलेआत्मनेपदं भावयते भावयांबभूव ओःपुयण्ज्यपरे सनिपरेयदंगंतदवयवाभ्यासोकार
स्येत्स्यात्पवर्गयण्जकारेष्ववर्णपरेषुपरतः अबीभवत् अपीपवत् मूङ् अमीमवत् अयीयवत् अरीरव
त् अलीलवत् अजीजवत् स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनांवा एषामभ्यासोकारस्येत्वं
वास्यात्सनिअवर्णपरेधात्वक्षरेपरेअसिस्रवत् असुस्रवत् नाग्लोपीतिन्हस्वनिषेधः अशशासत् अडुढौ
कत् अचीचकासत् मतांतरे अचचकासत् अग्लोपीत्युसुप्धातुप्रकरणेउदाहरिष्यते ण्यंताण्णिचिपूर्व
विप्रतिषेधादपवादत्वाद्वावृद्धिंबाधित्वाणिलोपः चोरयति णौचङ्गतिन्हस्वः दीर्घोलघोरितिदीर्घः न
चाग्लोपित्वात्द्वयोरप्यसंभवः ण्याकृतिनिर्देशात् अचूचुरत् णौचसंश्चङोः सन्परेचङ्परेचणौश्वय
तेःसंप्रसारणंवास्यात् संप्रसारणंतदाश्रयंचकार्यंबलवदितिवचनात्संप्रसारणंपूर्वरूपं अशूशवत् अ
लघुत्वान्नदीर्घः अशिश्वयत् स्तंभुसिवुसहांचङि उपसर्गस्थान्निमित्तादेषांसस्यषोनस्याच्चङि अव
तस्तंभत् पर्यसीषिवत् न्यसीषहत् आटिटत् आशिशत् बहिरंगोप्युपधान्हस्वोद्वित्वात्प्रागेव ओणे
र्ऋदित्करणाल्लिंगात् माभवानिदिधत् एजादावेधातोर्विधानान्नवृद्धिः माभवान्प्रेदिधत् नंद्राःसंयोगादयः

दराणांनद्वित्वं औन्दिदत् आड्डिडत् आर्चिचत् उब्जआर्जवे उपदेशेऽयंदकारोपधः भुजन्युब्जोपाण्यु
पतापयोरितिनिपातनाद्रस्यबः सचांतरंगोऽपिद्वित्वविषयेनंद्राद्रितिनिषेधाज्जिशब्दस्यद्वित्वेकृतेप्रव
र्तते नतुततःप्राक् दकारोच्चारणसामर्थ्यात् औब्जिजत् अजादेरित्येवनेह अदिद्रपत् रभेरशाब्लिटोः
रभेर्नुम्स्यादचिनतुशाब्लिटोःलभेश्च अररंभत् अललंभत् हेरचङीतिसूत्रेअचङीत्युक्तेःकुत्वन्न अ
जीहयत् अत्स्मृदृत्वरप्रथम्रदस्तृस्पशां असस्मरत् अददरत् तपरत्वसामर्थ्यादत्रलघोर्नदीर्घः
विभाषावेष्टिचेष्ट्योः अभ्यासस्यअत्वंवास्याच्चङ्परेणौ अववेष्टत् अविवेष्टत् अचचेष्टत् अचिचेष्ट
त् भ्राजभासेत्यादिनावोपधान्हस्वः अबिभ्रजत् अबभ्राजदित्यादि काण्यादीनांवेतिवक्तव्यं ण्यंताः
कणरणभणश्रणलुपहेठाः काण्यादयःषट्भाष्येउक्ताः व्हायिबाणिलोटिलोपयश्चत्वारोऽधिकान्यासे
वाणिलोटीअप्यन्यत्रइत्थंद्वादशअचीकणत् अचकाणत् स्वापेश्चङि ण्यंतस्यस्वापेश्चङिसंप्रसार
णंस्यात् असूषुपत् शाच्छासाव्हाव्यावेपांयुक् णौ शाययति व्हाययति व्हःसंप्रसारणं सन्परेच
ङ्परेचणौव्हःसंप्रसारणंस्यात् अजूहवत् अजुहावत् लोपःपिबतेरीच्चाभ्यासस्य पिबतेरुपधाया
लोपःस्यादभ्यासस्यईदंतादेशश्चचङ्परेणौ अपीप्यत् अर्तिन्हीतिपुक् अर्पयति न्हेपयति क्नूपयति
रेपयति यलोपः क्ष्मोपयति क्ष्मापयति स्थापयति तिष्ठतेरित् उपधायाइदादेशःस्याच्चङ्परेणौ अति
ष्ठिपत् जिघ्रतेर्वा अजिघ्रिपत् अजिघ्रपत् उर्ऋत् अचीकृतत् अचिकीर्तत् अवीवृतत् अववर्तत् अमी
मृजत् अममार्जत् पातेर्णौलुग्वक्तव्यः पुकोऽपवादः पालयति वोविधूननेजुक् वातेर्जुक्स्याण्णौकंप

नेऽर्थेवाजयति कंपनेकिं केशान्वापयति विभाषालीयतेः लीलोर्नुग्लुकावन्यतरस्यांस्नेहविपातने लीयते
र्लातेश्च क्रमान्नुग्लुकावागमौ वास्तो णौ स्नेहद्रवे विलीनयति विलाययति विलालयति विलापयतिवा
घृतं लिईइतिईकारप्रश्लेषादात्वपक्षेनुक्न स्नेहद्रवेकिं लोहंविलापयति विलाययति प्रलंभनाभिभवपू
जास्फलियोनित्यमात्वमशितिवाच्यं लियःसंमाननशालीनीकरणयोश्च लीलीङोर्ण्यंतयोरात्मनेपदंस्या
दकर्तृगेऽपिफले पूजाभिभवयोः प्रलंभनेचार्थे जटाभिर्लापयते पूजामधिगच्छतीत्यर्थः श्येनोवर्तिकामुल्ला
पयते अभिभवतीत्यर्थः बालमुल्लापयते वंचयतीत्यर्थः बिभेतेर्हेतुभये बिभेतेरेचआत्वंवास्यात्प्रयोजका
द्भयंचेत् भीस्म्योर्हेतुभये आभ्यांआत्मनेपदंस्याद्धेतोश्चेद्भयस्मयौ सूत्रेभयग्रहणंधात्वर्थोपलक्षणं मुंडोभा
पयते भियो हेतुभयेषुक् भीई इतीकारःप्रश्लिष्यते ईकारांतस्यभियःषुक्स्याण्णौहेतुभये भीषयते नि
त्यंस्मयतेः स्मयतेरेचोनित्यमात्वंस्याण्णौ हेतोःस्मयेज टिलोविस्मापयते हेतोश्चेद्भयस्मयावित्युक्तेर्नेह
कुंचिकयैनंभाययति विस्माययति कथंतर्हिविस्मापयन् विस्मितमात्मवृत्ताविति मनुष्यवाचेतिकरणा
देवहितत्रस्मयः अन्यथाशानजपिस्यात् सत्यं विस्माययन्नित्येवपाठइतिसांप्रदायिकाः यद्वामनुष्यवाक्
प्रयोज्यकर्त्रीविस्मापयते तयासिंहोविस्मापयन्नितिण्यंताच्छ्णौ शतेतिव्याख्येयं स्फायो वः णौस्फावय
ति शदेरगतौतः शदेर्णौतांऽतादेशःस्यान्नतुगतौ शातयति गतौतुगाः शादयति गोविंदः गमयतीत्यर्थः
रुहःपोऽन्यतरस्यां णौरोपयति रोहयति क्रीङ्जीनांणौ एषामेचआत्वंस्याण्णौ क्रापयति अध्यापय
ति जापयति णौचसंश्चङोः सन्परेचङ्परेचणौइङोगाङ्वास्यात् अध्यजीगपत् अध्यापिपत् सिध्य

तेरपारलौकिके ऐहलौकिकेऽर्थेविद्यमानस्यसिध्यतेरेचआत्वंस्याण्णौ अन्नंसाधयति निष्पादयतीत्यर्थः
अपारलौकिकेर्किं तापसःसिध्यति तत्वंनिश्चिनोति तंप्रेरयतिसेधयतितापसं तपः प्रजनेवीयतेः अस्येच
आत्वंस्याण्णौप्रजनेऽर्थे वापयतिवाययतिवागाःपुरोवातः गर्भंग्राहयतीत्यर्थःऊदुपधायागोहः गूहयति
दोषोणौ दुषइतिस्रुवचनं दुष्यतेरुपधायाऊत्स्याण्णौ दूषयति वाचित्तविरागे विरागोऽप्रीतिता चित्तंदोष
यतिदूषयतिवाकामः मितांह्रस्वः भ्वादौचुरादौचयेमितउक्ताः घटयति जनीजॄष्क्नुजनयति जरयतिजॄणा-
न्तेस्तुजारयति रंजेर्णौमृगरमणेनलोपोवक्तव्यः मृगरमणमाखेटः रजयतिमृगान् मृगेतिकिं रंजयतिपक्षि
णःरमणादन्यत्रतु रंजयतिमृगान् तृणदानेन चुरादिषुज्ञपादिश्चिञ् चिस्फुरोर्णौ चपयति चययतीत्य
र्कं चिनोतेस्तुचापयति चाययति स्फारयति स्फोरयति अपुस्फरत् अपुस्फुरत् उभौसाभ्यासस्य साभ्या
सस्यानितेरुभौनकारोणत्वंप्राप्नुतःनिमित्तेसति प्राणिणत् णौगमिरबोधने इणोगमिःस्याण्णौ गमयन्
ति बोधनेतुप्रत्याययति इण्वदिकः अधिगमयति हनस्तोऽचिण्णलोः होहंतेरितिकुत्वंघातयति ईर्ष्ययन्
ति ईर्ष्यतेस्तृतीयस्येतिवक्तव्यं तृतीयव्यंजनस्यतृतीयैकाचइतिवार्थः आद्येषकारस्यद्वित्वंवारयितुमि
दं द्वितीयेत्वजादेर्द्वितीयस्येत्यस्यापवादतयासन्नंतेप्रवर्तते ऐर्ष्यियत् ऐर्षिष्यत् द्वितीयव्याख्यायांणिजंता
च्चङिषकारएवाभ्यासेश्रूयेतहलादिःशेषात् द्वित्वंतुद्वितीयस्यैवतृतीयाभावेनप्रकृतवार्तिकाप्रवृत्तेः निष्प्र
त्तप्रेषणाद्धातोर्हेतुमर्पणौशुन्ध्नतुल्योऽर्थः तेनमार्थयतिशयनोत्थितंप्रियाःइत्यादिसिद्धं एवंसकर्मकेषुसर्वे
बूध्यं इतिण्यंतप्रक्रिया धातोःकर्मणःसमानकर्तृकादिच्छायांवा इषिकर्मणःइषिणैककर्तृका

द्धातोः सन्प्रत्ययो वा स्यादिच्छायां धातोर्विधेरिह सनआर्धधातुकत्वंइट् द्वित्वं सन्यतः पठितुमिच्छति पिपठि
षति कर्मणः किं गमनेनेच्छतीति करणान्माभूत् समानकर्तृकात्किं शिष्याः पठंत्वितीच्छति गुरुः वाग्रहणात्पक्षे
वाक्यमपि लुङ्सनोर्घस्लृ एकाचउपदेशइतिनेट् सस्यतत्वं अत्तुमिच्छति जिघत्सति ईर्ष्यतेस्तृतीयस्येतियिस
नोर्द्वित्वं ईर्षियिषति ईर्ष्यिषिषति रुदविदमुषग्रहिस्वपिप्रच्छःसंश्च एभ्यःसंश्चक्त्वाच किदुक्तः रुरुदिषति
विविदिषति मुमुषिषति सनिग्रहगुहोश्च ग्रहेर्गुहेरुगंताच्च सनइण्नस्यात् ग्रहिज्येतिसंप्रसारणं सनःषत्वस्या
सिद्धत्वाद्भष्भावः जिघृक्षति सुषुप्सति किरश्चपंचभ्यः कॄगॄदृङ्धृङ्प्रच्छ एभ्यःसनइट्स्यात् पिपृच्छिषति
चिकरिषति जिगरिषति जिगलिषति अत्रेटोदीर्घोनेष्टः दिदरिषते दिधरिषते कथमुद्दिधीर्षुरिति औवादिकयो
र्धृङ्धृञोरितिगृहाण इकोझल् इगंताज्झलादिःसन्कित्स्यात् बुभूषति दीङ् दातुमिच्छति दिदीषते एज्विषय
ताभावान्मीनातिमिनोतीत्यात्वंन अतएवसनिमीमेतिसूत्रेमाधातोःपृथङ्मीग्रहणंकृतं हलंताच्च इक्समी
पाद्धलःपरोझलादिःसन्कित्स्यात् गुहूजुघुक्षति बिभित्सति इकःकिं यियक्षते झल्ग्रहणंकिं विवर्तिषते ह
ल्ग्रहणंजातिपरं तृंहूतितृक्षति तितृंहिषति अज्झनगमांसनि अजंतानांहंतेरजादेशगमेश्चदीर्घःस्यात्झ
लादौसनि सन्लिटोर्जेः जिगीषति विभाषाचेः चिकीषति चिचीषति जिघांसति सनिच इणोगमिःस्यात्सनि
नतुबोधने जिगमिषति बोधनेतुप्रतीषिषति इण्वदिकः अधिजिगमिषति कर्मणिलङ्परस्मैपदेष्वित्युक्तेर्नेट्
झलादौसनीतिदीर्घः जिगांस्यते अधिजिगांस्यते अजादेशस्येत्युक्तेर्गच्छतेर्नदीर्घः जिगंस्यते संजिगंसते इङ
श्च इङोगमिःस्यात्सनि अधिजिगंसते रलोव्युपधाद्धलादेःसंश्च उश्चइश्चवी तेउपधेयस्यतस्माद्धलादेरलंता

त्परोऽक्मासनौसेटौवाकितौस्तः द्युतिस्वाप्योःसंप्रसारणं दिद्युतिषते दिद्योतिषते रुरुचिषते रुरोचिषते लिलिखि
षति लिलेखिषति रलःकिं दिदेविषति व्युपधात्किं विवर्तिषते हलादेःकिं एषिषिषति इहनित्यमपिद्वित्वंगुणेन
बाध्यते उपधाकार्यंहिद्वित्वात्प्रबलं ओणेर्ऋदित्करणस्यसामान्यापेक्षज्ञापकत्वात् सनीवंतर्द्धभ्रस्जदंभुश्रि
स्वृयूर्णुभरज्ञपिसनां इवंतेभ्यः ऋधादिभ्यश्चसनइड्वास्यात् इडभावे हलंताच्चेतिकित्वं छ्वोरितिवस्योठ् य
णद्वित्वं दुद्यूषति दिदेविषति स्तौतिण्योरे वेतिवक्ष्यमाणनियमान्नषः सुस्यूषति सिसेविषति आप्ज्ञप्यृधामी
त् एषामचईत्स्यात्सादौसनि अत्रलोपोऽभ्यासस्य सनिमीमेत्यारभ्ययदुक्तंतत्राभ्यासस्यलोपःस्यात् आप्तुमि
च्छति ईप्सति अर्द्धितुमिच्छतिरपरत्वंचर्त्वंईर्त्सति अर्दिधिषति बिभ्रज्जिषति बिभर्जिषति बिभर्क्षति बिभ्र
क्षति दंभइच्च दंभेरच्चइत्स्यादीच्चसादौसनि अभ्यासलोपः हलंताच्चेत्यत्रहल्ग्रहणंजातिपरमित्युक्तं तेनसनः
कित्वान्नलोपः धिप्सति धीप्सति दिदंभिषति शिश्रीषति शिश्रयिषति उदोष्ठ्यपूर्वस्य सुस्वूर्षति सिस्वरिषति
युयूर्षति यियविषति ऊर्णुनूषति ऊर्णुनुविषति ऊर्णुनविषति नचपरत्वाद्गुणावादेशयोः सतोरभ्यासेउकारोन
श्रूयेतेतिवाच्यं द्विर्वचनेऽचीतिसूत्रेणद्वित्वेकर्तव्येस्थानिरूपातिदेशात् आदेशनिषेधाद्वा नचसन्नंतस्यद्वि
त्वंप्रतिकार्यित्वान्निमित्ततांकथमितिवाच्यं कार्यमनुभवन्हिकार्यीनिमित्ततयानाश्रीयतेनत्वननुभवन्नपि
नचेहसन्द्वित्वमनुभवति बुभूर्षति बिभरिषति ज्ञपिःपुंगतोमित्संज्ञः पकारांतश्चोरादिकश्च इडभावेइकोज्झ
लीतिकित्वान्नगुणः अज्झनेतिदीर्घःपरत्वाण्णिलोपेनबाध्यते आप्ज्ञपीतीत् ज्ञीप्सति जिज्ञपयिषति अमि
तस्तु जिज्ञापयिषति जनसनेत्यात्वं सिषासति सिषनिषति तनिपतिदरिद्रातिभ्यः सनोवेड्वाच्यः तनो

तेर्विभाषा अस्योपधायादीर्घोवास्या इग्लादौसनि तितांसति तितंसति तितनिषति आशंकायांसन्वक्तव्यः श्वा
सुमूर्षति कूलंपिपतिषति सनिमीमाघुरभलभशकपतपदामचइस् एषामचइस्स्यात्सादौसनि अभ्यास
लोपः स्कोरितिसलोपः पित्सति दिदरिद्रिषति दिदरिद्रासति डुमिञ्मीञ्आभ्यांसन् इनदीर्घेस्यमिनोतेरपि
मीरूपाविशेषाणादिस् सस्सीतितः मित्सति मित्सते मामाने मित्सति माङ्मेङोर्मित्सते दोदाणोः दित्सति देङ्दि
त्सते दाञ्दित्सति दित्सते धेट् धित्सति धाञ् धित्सति धित्सते रिप्सते लिप्सते शकृशिक्षति शकमर्षणइति
दिवादिः स्वरितेत् शिक्षति शिक्षते पित्सति राधोहिंसायांसनीस्वाच्यः रित्सति हिंसायांकिं आरिरात्सति मु
चोऽकर्मकस्यगुणोवा सादौसनि अभ्यासलोपः मोक्षते मुमुक्षतेवावत्सः स्वयमेव अकर्मकस्यकिं मुमुक्ष
तिवत्सं कृष्णः नहृद्धश्चतुर्थ्यः विवृत्सति नाङितुविवर्तिषते सेऽसिचीतिवेट् निनर्तिषति निनृत्सति इट्स
निवा दृङ् दृञ्भ्याम् दंताच्चसन इड्वास्यात् नितरिषति नितरीषति तितीर्षति विवरिषति विवरीषति वुवूर्ष
ति वृङ् वुवूर्षते दुध्वूर्षति स्मिपूङ् रंज्वशांसनि स्मिपूङ् ऋ अंजू अशूएभ्यः सनइट्स्यात् सिस्मयिषते पिपविष
ते अरिरिषति इहरिस्शब्दस्यद्वित्वं इस्इतिसनोवयवः कार्यभागितिकार्यिणोनिमित्तत्वायोगात् द्विर्वच
नेऽचीतिनप्रवर्तते अंजिजिषति अशिशिषते उभौसाभ्यासस्य प्राणिणिषति उच्छेस्तुक् श्चुत्वं पूर्वत्रासिद्धी
यमद्वित्वेइतिचछाभ्यांसहितस्येटोद्वित्वं हलादिःशेषः उचिच्छिषति निमित्तापायेनैमित्तिकस्याप्यपायइ
तित्वनित्यं छ्वोरितिसतुक्ग्रहणात्ज्ञापकात् प्रकृतिप्रत्यापत्तिवचनाद्वा णौचसंश्चङोरितिसूत्राभ्यामिङो
गाङ्ग्वयतेः संप्रसारणंचवा अधिजिगापयिषति अध्यापिपयिषति शिश्वाययिषति शुशावयिषति ह्वः

संप्रसारणं जुहावयिषति णोर्ह्वि त्वात्सागच्च आदेशोनेत्यक्तत्वादुकारस्याद्वित्वं पुस्फारयिषति चुक्षावयिषति
ओः पुयणज्यपरे पिपावयिषति बिभावयिषति यियावयिषति रिरावयिषति लिलावयिषति जिजावयिषति
पुयणज्जीतिकिं नुनावयिषति अपरेकिं बुभूषति,स्त्रवतीतीत्वंवा सिस्त्रावयिषति सुस्त्रावयिषति इत्यादि अपर
इत्येव शुश्रूषते स्तौतिण्योरेवषण्यभ्यासात् अभ्यासेणः परस्यस्तौतिण्यंतयोरेवसस्यषःस्यात् षभूतेसनि
नान्यस्य तुष्टूषति धृतिस्वाप्योरित्युक्तत्वं सुष्वापयिषति सिषाधयिषति स्तौतिण्योःकिं सिसिक्षति उपसर्गात्सुस्था
दिष्वभ्यासेनेतिषत्वंपरिषिषिक्षति षणिकिं तिष्ठासति सुषुप्सति अभ्यासादित्युक्तेर्नेहनिषेधः इण्क्भ्यांतीषिषति
इकु अधीषिषति स्तः स्विदिस्वदिसहीनांच अभ्यासेणः परस्यण्यंतानामेषांसस्यस एवनतुषः षणिपरे सिस्वेद
यिषति सिस्वादयिषति सिसाहयिषति स्थादिष्वभ्यासेनेतिनियमान्नेह अभिसुसूषति,शैषिकान्मतुबर्थी
याच्छैषिकोमतुबर्थिकः सरूपः प्रत्ययोनेष्टः सन्नंतान्नसनिष्यते शैषिकाच्छैषिकः सरूपोन तेनशालीयेभ
वइतिवाक्यमेव नतुच्छांताच्छः सरूपःकिं अहिच्छत्रेभवः आहिच्छत्रः तत्रभवः आहिच्छत्रीयः अणंता
च्छः तथामत्वर्थात्सरूपःसन धनवानस्यास्तिइहमतुबंतान्मतुब्न विरूपस्तुस्यादेव दंडिमतीशाला सरूपइ
त्यनुषज्यते अर्थद्वारासादृश्यं तेनइच्छासन्नंतादिच्छासन्नस्वार्थसन्नंतात्तुस्यादेव जुगुप्सिषते मीमांसिषते
इतिसन्प्रक्रिया धातोरेकाचोहलादेः क्रियासमभिहारेयङ् पौनःपुन्यंभृशार्थश्चक्रियासमभिहारस्तस्मि
न्द्योत्येयङ्स्यात् गुणोयङ्लुकोः अभ्यासस्यगुणःस्याद्यङियङ्लुकिच सनाद्यंताधातवइतिधातुत्वाल्लडादयः
ङिदंतत्वादात्मनेपदं पुनःपुनरतिशयेनवाभवतिबोभूयते बोभूयांचक्रे अबोभूयिष्टधातोःकिं आर्धधातुकत्वं

यथास्यात् तेनभ्रुवोवचिरित्यादि एकाचः किं पुनःपुनर्जागर्ति हलादेः किं भृशमीक्षते भृशंशोभतेरोचतेइत्यत्रयङ्
नेतिभाष्यं पौनःपुन्येतुस्यादेव रोरूच्यते शोशुभ्यते सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्योयङ्वाच्यः आद्यास्त्रयश्चुरा
दावदंताः सोसूच्यते सोसूत्र्यते अनेकाच्त्वेनाषोपदेशत्वात्षत्वंन मोमूत्र्यते यस्यहलः यस्येतिसंघातग्रहणं
हलः परस्ययशब्दस्यलोपःस्यात् आर्धधातुके आदेःपरस्य अतोलोपः सोसूचांचक्रे सोसूचिता सोसूत्रिता मो
मूत्रिता दीर्घोऽकितः अकितोऽभ्यासस्यदीर्घःस्याद्यङि यङ्लुकिच अटाट्यते यङिच अर्तेः संयोगादेश्चर्तो
गुणःस्याद्यङि यकारपररेफस्यनद्वित्वनिषेधः अरार्यतइतिभाष्योदाहरणात् अरारिता अशाशिता ऊर्णोनूयते
बेभिद्यते अल्लोपस्यस्थानिवत्वान्नोपधागुणः बेभिदिता नित्यंकौटिल्येगतौ गत्यर्थात्कौटिल्यएवयङ्स्या-
न्नतुक्रियासमभिहारे कुटिलंव्रजति वाव्रज्यते लुपसदचरजपजभदहदशगॄभ्योभावगर्हायां एभ्यो
धात्वर्थगर्हायामेवयङ्स्यात् गर्हितंलुंपति लोलुप्यते सासद्यते चरफलोश्च अनयोरभ्यासस्यातोनुक्स्या
द्यङ्लुकोः नुगित्यनेनानुस्वारोलक्ष्यते सचपदांतवद्वाच्यः वापदांतस्येतियथास्यात् उत्परस्यातः चरफलोर
भ्यासात्परस्यअतउत्स्याद्यङ्लुकोः हलिचेतिदीर्घः चंचूर्यते चञ्चूर्यते पंफुल्यते पम्फुल्यते जपजभदह
दशभंजपशांच एषामभ्यासस्यनुक्स्याद्यङ्लुकोः गर्हितंजपतिजंजप्यतेइत्यादि ग्रोयङि गिरतेरेफस्य
लत्वंस्याद्यङि गर्हितंगिलति जेगिल्यते घुमास्थेतीत्वं द्वित्वं गुणः देदीयते पेपीयते सेषीयते विभाषाश्वेः शो
शूयते शेश्वीयते यङिच सास्मर्यते शीङ्रितः चेक्रीयते सुट् संचेस्क्रीयते सिचोयङि सिचः सस्यषोनस्याद्य
ङि निसेसिच्यते नकवतेर्यङि कवतेरभ्यासस्यचुत्वंनस्याद्यङि कोकूयते कौतिकुवत्योस्तुचोकूयते नी

गंचुस्रंसु ध्वंस्रुभ्रंस्रुकसपतपदस्कंदां एषामभ्यासस्यनीगागमः स्याद्यङ्लुकोः अकित इत्युक्तेर्नदीर्घः
नलोपः वनीवच्यते सनीस्रस्यत इत्यादि नुगतोऽनुनासिकांतस्य अनुनासिकांतस्यांगस्ययोऽभ्यासोऽदं
तस्तस्यनुक् स्यात् नुकानुस्वारोलक्ष्यत इत्युक्तं यंयम्यते तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापिन भामक्रो-
धे बाभाम्यते येविभाषा जाजायते जंजन्यते हंतेर्हिंसायांयङि घ्नीभावोवाच्यः जेघ्नीयते हिंसायांकिं जंघन्य
ते रीगृदुपधस्यच ऋदुपधस्यधातोरभ्यासस्यरीगागमः स्याद्यङ्लुकोः वरीवृत्यते क्षुभ्नादित्वान्नणः नरी
नृत्यते जरीगृध्यते उभयत्रलत्वं चलीकॢप्यते रीगृत्वत इतिवक्तव्यं वरीवृश्च्यते परीपृच्छ्यते स्वपिस्यमि
व्येञांयङि संप्रसारणंस्यात् सोषुप्यते सेसिम्यते वेवीयते नवशः वावश्यते चायःकी चेकीयते ईघ्रा-
ध्मोः जेघ्रीयते देध्मीयते अयङ्यिक्ङिति शीङोयङादेशःस्यादाद्यौ क्ङितिपरे शाशय्यते अभ्यासन्ह्रस्वः
ततोगुणः डोढौक्यते तोत्रौक्यते इतियङंतप्रक्रिया यङोचिच यङोन्प्रत्ययेलुक् स्याच्चकारात्तंविना
पिबहुलंलुक् स्यात् अनैमित्तिकोऽयमंतरंगत्वादादौभवति ततःप्रत्ययलक्षणेनयङंतत्वाद्द्वित्वं अ
भ्यासकार्यं धातुत्वाल्लडादयः शेषात्कर्त्तरीतिपरस्मैपदं अनुदात्तङितइतितुनङित्वस्यप्रत्ययाप्रत्यय-
साधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः यत्रहिप्रत्ययस्यासाधारणंरूपमाश्रीयतेतत्रैवतत् अतएवसुदृष
त्प्रासादइत्यत्रात्वसंतस्योतिदीर्घोन येऽपिस्पर्द्धशीङादयोऽनुदात्तङितस्तेभ्योऽपिन अनुदात्तङितइत्य
नुबंधनिर्देशात् श्तिपाशपेतिनिषेधात् अतएवश्यनादयोन गणेननिर्देशात् किंतुशबेव चर्करीतंचेत्य
दादौपाठाच्छपोलुक् यङोवा यङंतात्परस्यहलादेःपितः सार्वधातुकस्यईड्वास्यात् भूसुवोरितिगुणनिषे

धोयङ्लुकि भाषायां न बोभूतु तेतिक्ते इति छंदसि निपातनात् अत एव यङ्लुक् भाषायामपि सिद्धः नच यङ्
लुक्यप्राप्त एव गुणाभावो निपात्यतां इति वाच्यं प्रकृतिग्रहणे न यङ्लुङंतस्यापि ग्रहणात् द्विःप्रयोगो द्विर्वच
नं षाष्ठमिति सिद्धांतात् बोभवीति बोभोति बोभूतः बोभुवति बोभवांचकार बोभविता अबोभवीत् अबो
भोत् अबोभूतां अबोभवुः बोभूयात् बोभूयातां बोभूयास्तां गातिस्थेति सिचो लुक् यङो वेतीट् पक्षे गुणं बा
धित्वा नित्यत्वाद्वुक् अबोभूवीत् अबोभोत् अबोभूतां अभ्यस्ताश्रयो जुस् नित्यत्वाद्वुक् अबोभूवुः अबोभवि
ष्यदित्यादि पास्पर्धीति पास्पर्द्धि पास्पर्द्धः पास्पर्द्धति पास्पर्द्धीषि पास्पर्त्सि हुझल्भ्यो हेर्द्धिः पास्पर्द्धि लङ् अ
पास्पर्त् अपास्पर्द् सिपि दश्चेति रुत्वपक्षे रोरि अपास्पाः गाधृ जागाद्धि जाघात्सि अजाघात् सिपि रुत्वपक्षे अ
जाघाः नाथृ नानात्ति नानात्तः दध दादद्धि दादद्धः दाधत्सि अदाधत् अदादद्धां अदादधुः अदाधः अदाधत्
लुङि अदादाधीत् अदादधीत् चोस्कुंदीति चोस्कुंति अचोस्कुन् अचोस्कुंतां अचोस्कुंदुः मोमुदीति मोमोत्ति
मोमोदांचकार मोमोदिता अमोमुदीत् अमोमोत् अमोमुत्तां अमोमुदुः अमोमुदीः अमोमोः अमोमोत् लु
ङि गुणः अमोमोदीत् चोकूर्दीति चोकूर्त्ति लङ्तिपि अचोकूर्त् सिपि पक्षे अचोकूः अचोखूः अजोगूः वनी
वंचीति वनीवंक्ति वनीवक्तः वनीवचति अवनीवंचीत् अवनीवन् जंगमीति जंगंति अनुदात्तोपदेशे
त्यनुनासिकलोपः जंगतः गमहनेत्युपधालोपः जंग्मति म्वोश्च जंगन्मि जंगन्वः जंगन्मः एकाच्ग्रहणेनो
क्तत्वान्नेण्निषेधः जंगमिता अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् जंगहि मो नो धातोः अजं
गन् अनुबंधनिर्देशान्न च्लेरङ् ह्म्यंतेति न वृद्धिः अजंगमीत् अजंगमिष्टां हंतेर्यङ्लुक् अभ्यासस्याद्वे

तिकुत्वं यद्यपिहोहंतेरित्यतो हंतेरित्यनुवर्त्यविहितं न तथापियङ्लुकिभवत्येवेतिन्यासकारः श्तिपाशपेतिनि
षेधस्त्वनित्यः गुणोयङ्लुकोरितिसामान्यापेक्षज्ञापकादितिभावः जंघनीति जंघंति जंघतः जंघ्नति जंघनि
ता श्तिपानिर्देशाज्जादेशोन जंघहि अजंघनीत् अजंघन् जंघन्यात् आशिषितु वध्यात् अवधीत् अवधिष्यमि
त्यादि वधादेशस्यद्वित्वंतुनभवति स्थानिवत्वेनानभ्यासस्येतिनिषेधात् तद्धिसामानाधिकरण्येनधातोर्विशेष
णं बहुव्रीहिबलात् आङ्पूर्वात्तुआङोयमहनइत्यात्मनेपदं आजंघते इत्यादि उत्परस्येति तपरत्वान्नगुणः हु
लिचेतिदीर्घस्तूस्यादेव तस्यासिद्धत्वेनतपरत्वनिवर्त्यत्वायोगात् चंचुरीति चंचूर्ति चंचूर्त्तः चंचुरति अचंचुरीत्
अचंचूः चंखनीति चंखंति जनसनेत्यात्वं चंखातः गमहनेत्युपधालोपः चंख्नति चंखाहि चंखनानि अचं
खनीत् अचंखन् अचंखातां अचंख्नुः येविभाषा चंखायात् चंखन्यात् अचंखानीत् उतोवृद्धिरित्यत्रनाभ्य
स्तस्येत्यनुवृत्तेरुतोवृद्धिर्न योयोति योयवीति अयोयवीत् अयोयोत् योयुयात् आशिषिदीर्घः योयूयात् अ-
योयावीत् नोनवीति नोनोति जाहेति जाहाति ईहल्यघोः जाहीतः इहजहातेश्चआच्होलोपोपिघुमास्थाग
लिङि इत्येते पंचापिनभवंतिश्तिपानिर्देशात् जाहति जाहासि आजाहासीत् अजाहासिष्टां अजाहिष्यत् लु
कालुसेप्रत्ययलक्षणाभावात्स्वपिस्यमीत्युत्वंन रुदादिभ्यइतिगणनिर्दिष्टत्वादिट्नसास्वपीति सास्वप्ति सा
स्वप्तः सास्वपति असास्वपीत् असास्वप् सास्वप्यात् आशिषितुवचिस्वपीत्युत्वं सासुप्यात् असास्वापीत् अ
सास्वपीत् रुग्रिकौचलुकि ऋदुपधस्यधातोरभ्यासस्यरुग्रिकौरीकुणतेआगमास्युर्यङ्लुकि ऋतश्च ऋदंताद्धा
तोरपितथा वर्वृतीति वरिवृतीति वरीवृतीति वर्वर्ति वरिवर्ति वरीवर्ति वर्वृत्तः वर्वृतति वर्वर्तामास वर्वर्तिता ग

णानिर्दिष्टत्वान्नवृद्ध्यइतिन वर्वर्तिष्यति अवर्वर्तीत् अवर्वर्तसिपिदश्चेतिरुत्वपक्षेरोरि अवर्वाः गणानिनिर्दिष्ट
त्वादङ्न अवर्वर्तीत् चर्करीति चरिकरीति चरीकरीति चर्कर्ति चरिकर्ति चरीकर्ति चर्कृतः चक्रति चर्करांचकार
चर्करिता अचर्करीत् अचर्कः चर्कृयात् आशिषिरिङ् चर्क्रियात् अचर्करीत् ऋतश्चेतितपरत्वान्नेह कॄवि
क्षेपे चाकर्ति तातर्ति तातीर्त्तः तातिरति तातार्हि तातराणि अतातरीत् अतातः अतातीर्ता अतातरुः अता
तारीत् अतातरिष्टांइत्यादि अत्तेर्यङ्लुकिद्वित्वेऽभ्यासस्योरदत्वंरपरत्वं हलादिःशेषः रुकरिग्रीकोऽस्त्वभ्या
सस्यासवर्णइतिइयङ् अरर्त्ति अरियर्ति अररीति अरियरीति अर्कृतः अरियृतः झिअत्यण् रुकोरोरीतिलो
पः नचतस्मिन्कर्तव्येयणःस्थानिवत्वं पूर्वत्रासिद्धेतन्निषेधात् आरति अरियात् लिङि शितपानिर्देशान्नगु
णोऽर्तीतिगुणोन रिङ्रलोपः दीर्घः आरियात् अरिग्रियात् गृहूग्रहणे जर्गृहीति जर्गर्ढि जर्गृढः जर्गृहति
अजर्घट् गृण्हातेस्तुजाग्रहीति जाग्राढि तस्मादोङिनन्निमित्तंसंप्रसारणं तस्यबहिरंगत्वेनासिद्धत्वान्नरुगाद
यः जागृढः जागृहति जाग्रहीषि जाग्राक्षि लुटिजाग्रहीता ग्रहोऽलिटीतिदीर्घस्तु न तत्रैकाचइत्यनुवृत्तेः मा
धवस्तुदीर्घमाह तद्भाष्यविरुद्धं जर्गृधीति जर्गर्द्धि जर्गृद्धः जर्गृधति जर्गृधीषि जर्गर्द्धि जर्गृद्धः जर्गृधति जर्गृधी
षि जर्घर्त्सि अजर्गृधीत् इडभावेगुणः हल्ङ्यादिलोपःभष्भावः जश्त्वचर्त्वे अजर्घत् अजर्गृद्धां अजर्गृधुः सि
पिदश्चेतिपक्षेरुत्वं अजर्घाः अजगर्धीत् अजगर्द्धिष्टां पाप्रच्छीति पाप्रष्टि तस्मादोग्रहिज्येतिसंप्रसारणंनभवति
शितपानिर्देशात् छ्वोःशूडितिशः व्रश्चेतिषः पाप्रष्टः पाप्रच्छति पाप्रश्मि पाप्रच्छ्वः पाप्रश्मः यकारवकारांतानांनूठ्भा
विनांयङ्लुकनास्तीतिच्छ्वोरितिसूत्रेभाष्येध्वनितं कैयटेनस्फुटीकृतं इदंचच्छ्वोरितियत्रोट् तद्विषयकंज्वर

त्वरेत्यूठ्भाविनोः स्निविमव्योस्तुयङ्लुगस्त्येवेतिन्याय्यं माधवादिसंमतंच मव्यबंधने अयंयांतऊठ्भावी नेहदे
हदेवने इत्यादयोवांताः हयगतौ जाहयीति जाहाति जाहतः जाहयति जाहसि वलिलोपेयआदौ दीर्घः जाहासि
जाहावः जाहामः हर्यगतिकांत्योः जाहर्यीति जाहर्ति जाहर्त्तः जाहर्यति लोटि जाहर्हि अजाहः अजाहर्त्तां
अजाहर्युः मवबंधने ज्वरत्वरस्निव्यविमवामुपधायाश्च ज्वरादीनांउपधावकारयोरूठ् स्यात्क्वौझलादावनुना
सिकादौच प्रत्यये अत्रक्किंतीतिनानुवर्त्तते अवतेस्तनिओतुरितिदर्शनात् अनुनासिकग्रहणंचानुवर्त्तते
अवतेर्मन्प्रत्यये तस्यटिलोपे ओमितिदर्शनात् इडभावेऊठिपिति गुणः मामोति मामवीति मामूतः मामव
ति मामोषि मामोमि मामावः मामूमः मामोतु मामूतात् मामूहि मामवानि अमामोत् अमामोः अमामवं
अमामाव अमामूम तुर्वीहिंसायां तोतूर्वीति राल्लोपः रेफात्परयोश्छ्वोर्लोपः स्यात्क्वौझलादौ अनुनासिकादौ
चप्रत्यये इतिवलोपः लघूपधगुणः नधातुलोपआर्धधातुके धात्वंशलोपनिमित्तेआर्धधातुकेपरे इ
कोगुणवृद्धीनस्तः इतिनेहनिषेधः तिबादीनामनार्धधातुकत्वात् तोतोर्ति हलिचेतिदीर्घः तोतूर्तः तोतूर्व
ति तौथोर्ति दोदोर्त्ति दाधोर्त्ति मूर्च्छा मोमोर्त्ति मोमूर्तः मोमूर्च्छतिइत्यादि आर्धधातुकइतिविषयसप्तमी
तेनयङिविवक्षितेअजेर्वी वेवीयते अस्ययङ्लुङ्नास्ति लुकाअपहारेविषयत्वासंभवेनवीभावस्याप्रवृ
त्तेः इतियङ्लुगंतप्रक्रिया रूपआत्मनःक्यच् इतिकर्मणःएषित्रसंबंधिनः सुबंतादिच्छायामर्थेक्य
च्प्रत्ययोवास्यात् धात्ववयवत्वात्सुब्लुक् क्यचिच अस्यईत्स्यात् आत्मनः पुत्रमिच्छतिपुत्रीयति वांतोयि
प्रत्यये गव्यति नाव्यति लोपःशाकल्यस्येतितुन अपदांतत्वात् तथाहि नःक्ये क्यचिक्यङिचनांतमेव

पदंस्यान्नान्यत् सन्निपातपरिभाषयावक्यच्चोयस्यलोपोन गव्यांचकार गव्यिता नाव्यांचकार नाव्यिता नलोपःप्रा
जीयति प्रत्ययोत्तरपदयोश्च त्वद्यति मद्यति एकार्थयोरित्येव युष्मद्यति अस्मद्यति हलिच गीर्यति पूर्यति धातो
रित्येव नेह दिवमिच्छतिदिव्यति इह पुरमिच्छतिपुर्यति इतिमाधवेनोक्तंप्रत्युदाहरणंचिंत्यं पूर्गिरोःसाम्यात्
दीव्यतीतिदीर्घस्तुप्राचःप्रामादिकएव अदस्यति रीङृतः कर्त्रीयति क्यच्व्योश्च गार्गीयति वात्स्यति अकृत्सा
र्वेतिदीर्घः कवीयति क्यस्यविभाषा हलःपरयोःक्यच्क्यङोर्लोपोवास्यादार्धधातुके आदेःपरस्य अतोलोपः
तस्यस्थानिवत्वाल्लघूपधगुणोन समिधिता समिध्यिता मांतप्रकृतिकात्सुबंतादव्ययाच्चक्यच्न इदंकिमिच्छति
इदमिच्छति स्वरिच्छति अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषुक्यजंतानिपात्यंते अशनायति उदन्यति
धनायति बुभुक्षादौकिं अशनीयति उदकीयति धनीयति अश्वक्षीर वृषलवणानामात्मप्रीतौक्यचि एषां
क्यच्यसुगागमःस्यात् अश्ववृषयोर्मैथुनेच्छायां अश्वस्यतिवडवा वृषस्यतिगोः क्षीरलवणयोर्लालसायां
क्षीरस्यतिबालः लवणस्यत्युष्ट्रः सर्वप्रातिपदिकानां क्यचिलालसायांसुगस्सुकौ दधिस्यति दध्यस्यति म
धुस्यति मध्वस्यति काम्यच्च उक्तविषयेकाम्यच्स्यात् पुत्रमात्मनइच्छतिपुत्रकाम्यति पुत्रकाम्यिता इह य
स्यहलइतिलोपोन अनर्थकत्वात् यस्येतिसंघातग्रहणमित्युक्तं यशस्काम्यति सर्पिष्काम्यति मांताऽव्ययेभ्यो
ऽप्ययंस्यादेव किंकाम्यति स्वःकाम्यति उपमानादाचारे उपमानात्कर्मणः सुबंतादाचारेऽर्थेक्यच्स्यात् पुत्र
मिवाचरति पुत्रीयति छात्रं विष्णूयतिद्विजं अधिकरणाच्चेतिवक्तव्यं प्रासादीयतिकुट्यां पक्षेवाक्यं सांतस्य
लोपस्तु क्यङ्संनियोगशिष्टः सचव्यवस्थितः ओजसोप्सरसोर्नित्यमितरेषांविभाषया कृष्णइवाचरति कृ

ष्णायते ओजःशब्दोवृत्तिविषयेतद्वति ओजायते अप्सरायते यशायते यशस्यते विद्वायते विद्वस्यते त्वद्यते मद्यते अनेकार्थत्वेतु युष्मद्यते अस्मद्यते क्यङ् मानिनोश्च कुमारीवाचरतिकुमारायते हरिणीवाचरतिह रिणायते गुर्वीवगुरूयते सपत्नीवसपत्नायते सपतीयते सपत्नीयते युवतिरिवयुवायते पट्वीमृद्वीवपट्वीमृदूयते नकोपधायाः पाचिकायते आचारेअवगल्भक्लीबहोडेभ्यः क्विब्वा वाग्रहणात्क्यङपि अवगल्भादयः पचाद्यजंताः क्विप्संनियोगेनानुदात्तत्वमनुनासिकत्वंचाच्प्रत्ययस्यप्रतिज्ञायते तेनतङ् अवगल्भते क्लीबते होडते भूतपूर्वादप्यनेकाचआम् एतद्वार्तिकारंभसामर्थ्यात् नचावगल्भतइत्यादिसिद्धिस्तत्फलं केवलानामाचारेऽपिवृत्तिसंभवात् धातूनामनेकार्थत्वात् अवगल्भांचक्रे क्लीबांचक्रे होडांचक्रे वार्त्तिकेऽचेत्युपसर्गविशिष्टपाठात्केवलादुपसर्गांतरविशिष्टाच्च क्यङेवेतिमाधवादयः तङ्नेतितून्नितं सर्वप्रातिपदिकेभ्यःक्विब्वावक्तव्यः पूर्ववार्तिकेत्वनुबंधासंजनार्थे तत्रक्विबनूद्यते प्रातिपदिकग्रहणादिहसुपइतिनसंबध्यते तेनपदकार्यंन कृष्णइवाचरति कृष्णति अतोगुणइतिशपासहपररूपं अइवाचरति अति अतः अंति प्रत्ययग्रहणमपनीयानेकाचइत्युक्तेर्नाम् औ अतुः उः द्वित्वं अतोगुणेप्राप्ते अतआदेरितिदीर्घःणलऔवृद्धिः अतुसादिषुत्वातोलोपइटिचेत्यालोपः मालेवाचरति मालाति लिंगविशिष्टपरिभाषयाएकादेशस्यपूर्वांतत्वाद्वाक्विप् मालांचकार लङि अमालात् अत्रहल्ङ्याबितिलोपो नङीसाहचर्यादापोऽपिसोरेवलोपविधानात् इट्सकौ अमालासीत् कविरिवकवयति आशीर्लिङि कवीयात् सिचिवृद्धिरित्यत्रधातोरित्यनुवर्त्यधातुरेवयोधातुरिति व्याख्यानात्नामधातोर्नवृद्धिरिति

कैय्यटादयः अकवयीत् माधवस्तु नामधातोरपि वृद्धिमिच्छति अकवायीत् विरिववयति विवाय विव्यतुः
अवयीत् अवायीत् श्रीरिवश्रयति शिश्राय शिश्रियतुः पितेवपितरति आशिषिरिङ् पित्रियात् भूरिवभव
ति अत्रगातिस्थेतिभुवोबुगितिभवतेरइतिचनभवति अभिव्यक्तित्वेनधातुपाठपठितस्यैवतत्रग्रहणात्
अभावीत् बुभाव द्रुरिवद्रवति णिश्रीतिचङ्न अद्रावीत् अनुनासिकस्यक्विझलोःक्ङितीति अनुनासिका
तस्योपधायादीर्घःस्यात्क्वौझलादौचक्ङितीति इदमिवाचरति इदामति राजेवराजानति पंथाइवपथीनति
मथीनति ऋभुक्षाणति द्यौरिवदेवतीतिमाधवः अत्रोठिद्यवतीत्युचितं कइवकतिचकावितिहरदत्तः मा
धवस्तुण्यल्लोपाविति वचनाण्णलिवृद्धिंबाधित्वाऽतोलोपात्चकइतिरूपमाह स्वइवसस्वौ सस्व यत्तुस्वामा
स स्वांचकारेतितदनाकरमेव भृशादिभ्योभुव्यच्वेर्लोपश्चहलः अभूततद्भावविषयेभ्योभृशादिभ्योभ
वत्यर्थेक्यङ्स्यात्हलंतानामेषांलोपश्च अभृशोभृशोभवतिभृशायते अच्वेरितिपर्युदासबलादभूतत
द्भावइतिलब्धं तेनेहन कदिवाभृशाभवंति येरात्रौभृशानक्षत्रादयस्तेदिवाकृशभवंतिइत्यर्थः सुमनस् अस्य
सलोपःसुमनायते चुरादौसंग्राम्युद्धेतिपठ्यते तत्रसंग्रामेतिप्रातिपदिकं तस्मात्तत्करोतीतिणिचिसिद्धः
तत्संनियोगेनअनुबंधआसज्यते युद्धेयोऽयं ग्रामशब्द इत्युक्तेऽपिसामर्थ्यात्संग्रामशब्देलब्धेविशिष्टपाठोज्ञा
पयति उपसर्गसमानाकारंपूर्वपदंधातुसंज्ञाप्रयोजकेप्रत्ययेचिकीर्षितेपृथक्क्रियतइति तेनमनःशब्दात्सामट्
स्वमनायत उन्मनायते उदमनायत एवंचावागल्भअवागल्भिष्टेत्यादावप्यावेत्यस्यपृथक्करणंबोध्यं ज्ञापकं
चसजातीयविषयं तेनयत्रोपसर्गसरूपंसकलंश्रूयते नतादेशेनापहृतंतत्रैवपृथक्कृतिः एवंचआऊदःओ

दः सद्वांचर्यओदायित्वा अत्रउन्मनाय्यअवगल्भेतिवन्नल्यप् ज्ञापकस्याविशेषविषयत्वेषाष्ठवार्त्तिकंनद्भाष्य
चप्रमाणं तथाहि उस्योमाङ्स्वादःप्रतिषेधःउसिओमाङोश्चपरयोरादः पररूपंनेत्यर्थःउस्रामैच्छत् ओस्री
यत् औंकारीयत् ओदीयत् आटश्चेतिचशब्देनपुनर्वृद्धिविधानादिदंसिद्धमितिषाष्ठेस्थितं लोहितादिडा
ज्भ्यःक्यष् लोहितादिभ्योडाजंताच्चभवत्यर्थेक्यष्स्यात् वाक्यषः क्यषंतास्सरस्मैपदंवास्यात् लोहितायते
लोहितायति अत्राच्वेरित्यनुवृत्त्या अभूततद्भावविषयत्वंलब्धं तच्चलोहितशब्दस्यैवविशेषणंनतुडाचोऽसंभ
वात् नाप्यादिशब्दग्राह्याणां तस्यप्रत्याख्यानात् तथाचवार्तिकं लोहितडाज्भ्यः क्यष्वचनंभृशादिष्वितराणीति
नन्वेवंकाम्यचइवक्यषोऽपिककारः श्रूयेतउच्चारणसामर्थ्यादितिवाच्यं तस्याऽपिभाष्येप्रत्याख्यानात् पटप
टायति पटपटायते कृभ्वस्तियोगंविनापिहडाच् डाजंतात्क्यषोविधानसामर्थ्यात् यत्तु लोहितश्यामदुःखा
निहर्षगर्वसुखानिच मूर्च्छानिद्राकृपाधूमाः करुणानित्यचर्मणीतिपठित्वाश्यामादिभ्योऽपिक्यषिपदद्वयमुदा
हरंतितद्भाष्यवार्षिकविरुद्धं तस्मात्तेभ्यःक्यङेव शामायते दुःखादयोवृत्तिविषयेतद्वतिवर्त्तंते लिंगविशिष्टप
रिभाषयालोहिनीशब्दादपिक्यष् लोहिनीयते लोहिनीयति कष्टायक्रमणे चतुर्थ्यंतात्कष्टशब्दादुत्साहे
र्थेक्यङ्स्यात् कष्टायक्रमतेकष्टायते पापंकर्तुमुत्सहतइत्यर्थः सत्रकक्षकष्टकृच्छ्रगहनेभ्यःकण्वचिकीर्षाया
मितिवक्तव्यं कण्वंपापंसत्रादयोवृत्तिविषयेपापार्थाः तेभ्योद्वितीयांतेभ्यश्चिकीर्षायांक्यङ् पापंचिकीर्षतीत्य
स्वपदविग्रहः सत्रायतेकक्षायतेइत्यादि कर्मणोरोमंथतपोभ्यांवर्तिचरोः रोमंथतपोभ्यांकर्मभ्यांक्रमेण
वर्तनायांचरणेचार्थेक्यङ्स्यात् रोमंथंवर्तयतिरोमंथायते हनुचलनइतिवक्तव्यं चर्वितस्याकृष्यपुनश्च

वर्णेइत्यर्थः नेहकीटोरोमंथंवर्तयति अपानप्रदेशान्निस्सृतंद्रव्यमिहरोमंथः तदभ्यतीत्यर्थ इतिकैयटः वर्त्तुलं-
करोतीत्यर्थः इतिन्यासकारहरदत्तो तपसःपरस्मैपदंच तपश्चरतितपस्यति बाष्पोष्मभ्यामुद्वमने आभ्यांक
र्मभ्यांक्यङ्स्यात् बाष्पमुद्वमतिबाष्पायते ऊष्मायते फेनाच्चेतिवक्तव्यं फेनायते शब्दवैरकलहाभ्रकण्वमे
घेभ्यःकरणे एभ्यः कर्मभ्यः करोत्यर्थेक्यङ्स्यात् शब्दंकरोतीतिशब्दायते पक्षेतत्करोतीतिणिजपीष्यत इ
तिन्यासः शब्दयति सुदिनदुर्दिननीहारेभ्यश्चसुदिनायते सुखादिभ्यःकर्तृवेदनायां सुखादिभ्यःकर्मभ्यो वे
दनायामर्थेक्यङ्स्याद्वेदनाकर्तुरेवचेत्सुखादीनिस्युः सुखंवेदयते सुखायते कर्तृग्रहणंकिंपरस्यसुखंवेद
यते नमोवरिवश्चित्रङःक्यच् करणइत्यनुवृत्तेः क्रियाविशेषेपूजायांपरिचर्यामाश्चर्येच नमस्यतिदेवान्पू
जयतीत्यर्थः वरिवस्यतिगुरून्शुश्रूषतइत्यर्थः चित्रीयते विस्मयतइत्यर्थः विस्मापयतइत्यन्ये पुच्छभांडची
वराण्णिङ् पुच्छादुदसनेव्यसनेपर्यसनेच विविधंविरुद्धंवोत्क्षेपणं व्यसनंउत्पुच्छयते विस्मयतइत्यर्थः
विस्मापयतइत्यन्ये भाण्डात्समाचयने संभांडयते भांडानिसमाचिनोतिराशीकरोतीत्यर्थः समभांडयत
चीवरादर्जनेपरिधानेच संचीवरयतेभिक्षुः चीवराण्यर्जयतिपरिधत्तेवेत्यर्थः मुंडमिश्रश्लक्ष्णलवणव्र-
तवस्त्रहलकलकृततूस्तेभ्योणिच् कृञर्थेमुंडं करोति मुंडयति व्रताद्भोजनतन्निवृत्त्योः पयःशूद्रान्नंवाव्र
तयति वस्त्रात्समाच्छादने संवस्त्रयति हल्यादिभ्योग्रहणे हलिकल्योरदंतत्वंचनिपात्यते हलिंकलिंगृ
ण्हाति हलयति कलयति महद्धलंहलिः परत्वाद्वृद्धौसत्यामपीष्ठवद्भावेनाग्गेवलुप्यते अतःसन्वद्भावदी
र्घौन अजहलत् अचकलत् कृतंगृण्हाति कृतयति तूस्तानिविहंतीतिवितूस्तयति तूस्तंकेशाइत्येके जटी

भूताः केशाइत्यन्येपापमित्यपरे मुंडादयः सत्यापेत्यत्रैव पठितुंयुक्ताः प्रातिपदिकाद्धात्वर्थइत्येवसिद्धेकेषांचि
द्ग्रहणंसाक्षेपेऽपिणिजर्थं मुंडयति मिश्रयत्यन्नं श्लक्ष्णयतिवस्त्रं लवणयतिव्यंजनं हलकलयोरर्थार्थं सत्य
स्यआपुगर्थं केषांचित्तुप्रपंचार्थं सत्यंकरोत्याचष्टेवासत्यापयति अर्थवेदयोरप्यापुग्वक्तव्यः अर्थापयति वे-
दापयति पाशंविमुंचतिविपाशयति रूपंपश्यतिरूपयति वीणयोपगायति उपवीणयति तूलेनानुकुष्णा
तिअनुतूलयति तृणाग्रंतूलेनानुघट्टयतीत्यर्थः श्लोकैरुपस्तौति उपश्लोकयति सेनयाअभियाति अभिषे
णयति उपसर्गात्सुनोतीतिषः अभ्यषेणयत् प्राक्सितादितिषः अभिषिषेणयिषति स्थादिष्वभ्यासेतिषः
लोमान्यनुमार्ष्टि अनुलोमयति त्वचसंवरणेघः त्वचंगृण्हातित्वचयति वर्मणासन्नह्यतिसंवर्मयति वर्णंगृ
ण्हातिवर्णयति चूर्णैरवध्वंसते अवचूर्णयति इष्ठवदित्यतिदेशात्पुंवद्भावादयः एनीमाचष्टे एतयति दरद
माचष्टेदारदयति पृथुंप्रथयति दृढोऽसत्यांपूर्ववाटिलोपः अपिप्रथत् अपप्रथत् मृदुंम्रदयति अमिम्रदत्
अमम्रदत् भृशंकृशंदृढंभ्रशयति क्रशयति द्रढयति अबभ्रशत् अचक्रशत् अदद्रढत् परिव्रढय पर्यवव्र
ढत् ऊढिमाख्यत् औजिढत् ढत्वादीनामसिद्धत्वाद्धतिशब्दस्यद्वित्वं पूर्वत्रासिद्धीयमद्विर्वचनइतित्वनित्य
मित्युक्तं ढिइत्यस्यद्वित्वमित्यन्ये औडिढत् ऊढमाख्यत् औजढत् औडढत् ओःपुयण्जीतिवर्गप्रत्याहारज
ग्रहोलिंगं द्वित्वेकार्येणावन्नआदेशोनेत्यू नयतावुक्तं प्रकृत्यैकाच्चु वृद्धिपुकौ स्वापयति त्वांमांवाआचष्टे त्वा
पयति मापयति मपर्यंतस्यत्वमोपररूपात्पूर्वंनित्यत्वाट्टिलोपः वृद्धिःपुक् त्वादयति मादयतिइतितुन्याय्यं अं
तरंगत्वात्पररूपेकृतेप्रकृत्यैकाजितिप्रकृतिभावात् नचप्रकृतिभावोभाष्येप्रत्याख्यातइतिभ्रमितव्यं भाष्य

स्यप्रेष्ठाद्युदाहरणविशेषेअन्यथासिद्धिपरत्वात् युवां मां वा युष्मयति अस्मयति श्वानमाचष्टेशावयति नस्तद्धितइतिटिलोपःप्रकृतिभावस्तुन येननाप्राप्तिन्यायेनटेरित्यस्यैवबाधकोहिसः भत्वात्संप्रसारणं अन्येतुनस्तद्धितइतिनेहातिदिश्यते इष्ठनितस्यादृष्टत्वात् ब्रह्मिष्ठइत्यादौपरत्वाट्टेरित्यस्यैवप्रवृत्तेः तेनशुनयतीतिरूपमाहुः विद्वांसमाचष्टेविद्वयति अंगवृत्तपरिभाषयासंप्रसारणंनेत्येके संप्रसारणेवृद्धावावादेशेचविदावयतीत्यन्ये नित्यत्वाट्टिलोपात्प्राक्संप्रसारणं अंतरंगत्वात्पूर्वरूपंटिलोपः विदयतीत्यपरे उदंचमाचष्टेउदीचयति उदैचिचत् प्रत्यंचंप्रतीचयति प्रत्यचिचत् इकोऽसवर्णइतिपक्षेप्रतिअचिचत् सम्यंचंसमीचयति सम्यचिचत् समिअचिचत् तिर्यंचमाचष्टे तिराययति अंचेष्टिलोपेनापहारेऽपिबहिरंगत्वेनासिद्धत्वात्तिरसस्तिरिः असिद्धवदत्रेतिचिणोलुङ्न्यायेनप्रथमटिलोपोऽसिद्धः अतःपुनष्टिलोपोन अंगवृत्तपरिभाषयावा चङिअग्लोपित्वादुपधाह्रस्वोन अतितिरायत् सध्र्यंचमाचष्टेसध्राययति अससध्रायत् विष्वद्र्यंचंअविविषद्रायत् देवद्र्यंचं अदिदेवद्रायत् अदद्र्यंचंआददद्रायत् अदमुयंचंअदमुआययति आददमुआयत् अमुमुयंचंअमुमुआययति चङिआमुमुआयत् भुवंभावयति अबीभवत् भ्रुवंअबुभ्रवत् श्रियंआशिश्रियत् गांअजूगवत् रायंअरीरयत् नावंअनूनवत् स्वभ्वंस्वाशश्वत् स्वःस्वयति असस्वत् असिस्वत् बहून्भावयति बहयतीत्यन्ये स्रग्विणंस्रजयति संज्ञापूर्वकत्वान्नवृद्धिः श्रीमतींश्रीमंतंवाअशिश्रयत् पयस्विनीं पयसयति इहटिलोपोन तदपवादकस्यलुकःप्रवृत्तत्वात् स्थूलंस्थवयति दूरंदवयति कथंतर्हिदूरयत्यवनतेविवस्वतीति दूमनति अयतेवादूरात् दूरात्तंकुर्वतीत्यर्थः युवानंयवयति कनकयति युवाल्पयोरितिवाकन् अंतिकंनेदयति बाढंसाधयति

प्रशस्यंप्रशस्ययति इहश्रज्यौन उपसर्गस्य पृथक्कृतेः र्ज्ज्यापयति वर्षयति प्रियंप्रापयति स्थिरंस्थापयति
स्फिरंस्फापयति उरुंवरयति वारयति बहुलंबंहयति गुरुंगरयति तृप्रंत्रपयति दीर्घंद्राघयति वृंदारकंवृंदय
ति इतिनामधातुप्रक्रिया कंड्वादिभ्योयक् एभ्योधातुभ्योनित्यंयक्स्यात्स्वार्थे धातुभ्यः किं प्रातिपदिकेभ्यो-
माभूत् द्विधाहिकंड्वादयः धातवःप्रातिपदिकानिच कंडूञ्गात्रविघर्षणे कंडूयति कंडूयते मंतुअपराधे रोषइ
त्येके मंतूयति चंद्रस्त्वजितमाह मंतूयते वल्गुपूजामाधुर्ययोः वल्गूयति असुउपतापे असअसूञ्इत्येके
असयति असूयति असूयते लेट्लोट्धौर्त्ये पूर्वभावेस्वप्नेच दीप्तावित्येके लेट्यति लोट्यति लेटिता लोटिता
लेलादीप्तौ इरस्इरज्इरञ्ईर्ष्यायां इरस्यति इरज्यति हलिचेतिदीर्घः ईर्यति ईर्यते इषस्प्रभातीभावे वे
दधौर्त्येस्वप्नेच मेधाआशुग्रहणे मेधायति कुषुभक्षेपे कुषुभ्यति मगधपरिवेष्टने नीचदास्यइत्यन्ये तंतस्पं
पस्दुःखे सुखदुःखतत्क्रियायां सुखयति दुःखयति सुखंदुःखंचानुभवतीत्यर्थः सपरपूजायां अररआराक
र्मणि भिषज्चिकित्सायां भिष्णज् उपसेवायां इषुधशरधारणे चरणवरणगतौ चुरणचौर्ये तुरणत्वरायां
भुरणधारणपोषणयोः गद्गदवाक्स्खलने एलाकेलाखेलाविलासे इलेत्यन्ये लेखास्खलनेच अदंतोऽयमि
त्यन्ये लेखयति लिट्अल्पकुत्सनयोः लिट्यति लाटजीवने ह्रणीङ्रोषेलज्जायांच महीङ्पूजायां महीयते
पूजांलभतइत्यर्थः रेखाश्लाघासादनयोः द्रवस्परितापपरिचरणयोःतिरस्अंतर्द्धौ अगदनीरोगत्वे उर-
स्बलार्थःउरस्यति बलवान्भवतीत्यर्थः तरणगतौ पयस्प्रसृतौ संभूयस्प्रभूतभावे अंबरसंबरसंभर
णे आकृतिगणोऽयं इतिकंड्वादयः कंडूयतेःसन् सन्यङोरितिप्रथमस्यैकाचोद्वित्वेप्राप्ते कंड्वादेस्तृतीयस्ये

तिवान्यं कंडूयियिषति क्यजंतात्सन् यथेष्टंनामधातुषु आद्यानांत्रयाणामन्यतमस्यद्वित्वमित्यर्थः अजादेस्त्वा
द्येनरस्य पुपुत्रीयिषति पुत्रीयियिषति अशिश्वीयिषति अश्वीयियिषति नदराणांसंयुक्तानामचः परस्यैवद्वि
त्वनिषेधः इंद्रीयतेःसन् द्रीशब्दयिशब्दयोरन्यतरस्यद्वित्वं इंदिद्रीयिषति इंद्रीयियिषति चिचंद्रीयिषति चंदिद्री
यिषति चंद्रीयियिषति प्रियमाख्यातुमाचक्षाणंप्रेरयितुंवेच्छति पिप्रापयिषति प्रापिपयिषति प्रापयियिष
ति उरूंविवारयिषति वारिरयिषति वारयियिषति बाढंसिसाधयिषतीत्यादिरूपत्रयं षत्वंतुनास्ति आदेशो-
यःसकारइत्युक्तेः यङ्सन्ण्यंतात्सन् बोभूयिषयिषति यङ्णिच्सन्नंताण्णिच् बोभूययिषतीत्यादि इति-
प्रत्ययमाला अनुदात्तङित आत्मनेपदं आस्ते शेपे भावकर्मणोः बभूवे अनुबभूवे कर्तरिकर्मव्यति
हारे क्रियाविनिमयेद्योत्येकर्तर्यात्मनेपदंस्यात् व्यतिलुनीते अन्यस्ययोग्यंलवनंकरोतीत्यर्थः श्नसोरल्लोपः
व्यतिस्ते व्यतिषाते व्यतिषते तासस्त्योर्लोपः व्यतिसे धिच व्यतिध्वे हएति व्यतिहे व्यत्यसे व्यत्यास्त व्यतिषात
व्यतिराते व्यतिभाते व्यतिबभे नगतिहिंसार्थेभ्यः व्यतिगच्छंति व्यतिघ्नंति प्रतिषेधे हसादीनामुपसंख्यानं
हसादयोहसप्रकाराः शब्दक्रियाः व्यतिहसंति व्यतिजल्पंति हरतेरप्रतिषेधः संप्रहरंतेराजानः इतरेतरान्यो
न्योपपदाच्च परस्परोपपदाच्चेतिवक्तव्यं इतरेतरस्यान्योन्यस्यपरस्परस्यवाव्यतिलुनंति नेर्विशः निविश
ते परिव्यवेभ्यः क्रियः अकर्त्रभिप्रायार्थमिदं परिक्रीणीते विक्रीणीते अवक्रीणीते विपराभ्यांजेः विजय
ते पराजयते आङोदोनास्यविहरणे आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थेवर्तमानादात्मनेपदंस्यात्
विद्यामादत्ते अनास्येतिकिं मुखंव्याददाति आस्यग्रहणमविवक्षितं विपादिकांव्याददाति पादस्फोटोवि

पादिका नदीकूलंव्याददाति परांगकर्मकान्ननिषेधः व्याददते पिपीलिकाः पतंगस्यमुखं क्रीडोऽनुसंपरिभ्य
श्च चादाङः अनुक्रीडते संक्रीडते परिक्रीडते आक्रीडते अनोः कर्मप्रवचनीयान्न उपसर्गेणसमासाहचर्यात्
माणकमनुक्रीडति तेनसहेत्यर्थः तृतीयार्थइत्यनोः कर्मप्रवचनीयत्वं समोऽकूजने संक्रीडते कूजनेतु संक्रीड
तिचक्रं आगमेःक्षमायां ण्यंतस्येदंग्रहणं आगमयस्वतावत् मात्वरिष्ठा इत्यर्थः शिक्षेर्जिज्ञासायां धनुषिशि-
क्षते धनुर्विषयेज्ञानेशक्तोभवितुमिच्छतीत्यर्थः आशिषिनाथः आशिष्येवेतिनियमार्थंवार्तिकमित्युक्तं सर्पि
षोनाथते सर्पिर्मेस्तादित्याशास्त इत्यर्थः कथंतर्हिनाथसेकिंसुपतिंनभर्तृतामिति नाधसइतिपाठ्यं हरतेर्गत-
ताच्छील्ये गतंप्रकारः पैतृकमश्वाअनुहरंते मातृकंगावः पितुर्मातुश्च गतंप्रकारं सततंपरिशीलयंतीत्यर्थः ता
च्छील्येकिं मातुरनुहरति किरतेर्हर्षजीविकाकुलायकरणेषुवाच्यं हर्षादयोविषयाः तत्रहर्षोविक्षेपस्यकार
णं इतरेफले अपाच्चतुष्पाच्छकुनिष्वालेखने अपात्किरतेःसुट्स्यात् सुडपिहर्षादिष्वेववक्तव्यः अपस्किर
तेवृषोहृष्टः कुक्कुटोभक्षार्थी श्वाआश्रयार्थीच हर्षादावितिकिं अपकिरतिकुसुमं इहतङ्स्फुटोन हर्षादिमात्र-
विवक्षायांयद्यपितङ्प्राप्तस्तथापिसुडभावेनेष्यतइत्याहुः गजोपकिरत्यंभः आङिनुपृच्छ्योः आनुते आपृ
च्छते शपउपालंभे आक्रोशार्थात्स्वरितेतो ऽकर्तृगेः पिफलेशपथरूपेऽर्थेआत्मनेपदंवक्तव्यमित्यर्थः कृष्णा
यशपते समवप्रविभ्यस्थः संतिष्ठते स्थाघ्वोरिच्च समस्थित समस्थिषातां समस्थिषत अवतिष्ठते प्रतिष्ठ-
ते वितिष्ठते आङःप्रतिज्ञायामुपसंख्यानं शब्दंनित्यमातिष्ठते नित्यत्वेनप्रतिजानीतइत्यर्थः प्रकाशनस्थे
याख्ययोश्च गोपीकृष्णायतिष्ठते स्वाशयंप्रकाशयतीत्यर्थः संशय्यकर्णादिषुतिष्ठतेयः कर्णादीन्निर्णेतृत्वे

नाश्रयतीत्यर्थः **उदोऽनूर्ध्वकर्मणि** मुक्तावुत्तिष्ठते अनूर्ध्वेकिं पीठादुत्तिष्ठति ईहायामेव नेह ग्रामाच्छतमुत्पति
ष्ठति **उपान्मंत्रकरणे** आग्नेय्याग्नीध्रमुपतिष्ठते मंत्रकरणेकिम् भर्तारमुपतिष्ठतियौवनेन उपाद्देवपूजासंगत
तिकरणमित्रकरणपथिष्विति वाच्यं आदित्यमुपतिष्ठते कथंतर्हि स्तुत्यंस्तुतिभिरर्थ्याभिरुपतस्थेसरस्वतीश्रि
देवतात्वारोपात् नृपस्य देवतांशत्वाद्वा गंगायमुनामुपतिष्ठते उपश्लिष्यतीत्यर्थः रथिकानु पतिष्ठते मित्रीकरो
तीत्यर्थः पंथास्रुघ्नमुपतिष्ठते प्राप्नोतीत्यर्थः वालिप्सायामितिवक्तव्यं भिक्षुकः प्रभुमुपतिष्ठते उपतिष्ठतीतिवा
लिप्सयोपगच्छतीत्यर्थः **अकर्मकाच्च** उपात्तिष्ठतेरकर्मकादात्मनेपदंस्यात् भोजनकालेउपतिष्ठतेसन्निहितो
भवतीत्यर्थः **उद्विभ्यांतपः** अकर्मकादित्येव उत्तपते वितपते दीप्यतइत्यर्थः **स्वांगकर्मकाच्चेतिवक्तव्यं** स्वमंगं
स्वांगं नत्वद्रवमितिपरिभाषितं उत्तपते वितपतेवा पाणिं नेह सुवर्णमुत्तपति संतापयति विलापयतिवाइत्यर्थः
चैत्रो मैत्रस्य पाणिमुत्तपतिसंतापयतीत्यर्थः **आङोयमहनः** आयच्छते आहते अकर्मकात्स्वांगकर्मकादित्येव
नेह परस्यशिरआहंति कथंतर्हि आजघ्ने विषमविलोचनस्य वक्ष इति भारविः आहध्वं मा रघूत्तममिति भट्टिश्च
प्रमादएवायमिति भागवृत्तिः शाप्येत्यध्याहारोवा ल्यब्लोपे पंचमीति तुल्यबंतंविनैव तदर्थावगतिर्यत्र तद्विष
यकं भेत्तुमित्यादितु मुनेर्नाध्याहारोवा रक्तः समीपमेत्येतिवा आत्मनेपदेष्वन्यतरस्यां हनोवधादेशोवास्यात्ल
ङि आवधिष्ट आवधिषातां **हनःसिच्** किस्यात् अनुनासिकलोपः आहत आहसातां आहसत **गंधनेच** गंधने
सिचः किस्यात् गंधनंसूचनं परदोषाविष्करणं उदायत गंधनेकिं उदायंस्तपादं आकृष्टवानित्यर्थः **समोगम्यृ-**
**च्छिभ्यां** अकर्मकाभ्यामित्येव संगच्छते **वागमः** गमःपरोझलादिलिङ्सिचौवाकितौस्तः संगसीष्ट समगत सम

गंस्त समृच्छिष्यते अकर्मकाभ्यांकिं ग्रामंसंगच्छति विदिप्रच्छिस्वरतीनामुपसंख्यानं वेत्तेरेवग्रहणं संवि
त्ते वेत्तेर्विभाषा वेत्तेःपरस्यझादेशःस्यातोरुडागमोवास्यात् संविद्रते संविदते संपृच्छते संस्वरते अर्तिश्रु
दृशिभ्यश्चेतिवक्तव्यं अर्तीतिद्वयोर्ग्रहणं अङ्विधौत्वियर्तेरेवेत्युक्तंमासमृत मासमृषातां मासमृषत समा
र्त समार्षातां समार्षतेतिचप्वादेः इयर्तेस्तु मासमरत मासमरेतां मासमरंतेति समारत समारेतां समारं
तेतिच संश्रृणुते संपश्यते अकर्मकादित्येव अतएवरक्षांसीतिपुरापिसंश्रृणुमहइतिमुरारिप्रयोगः प्रामादि
कइत्याहुः अध्याहारोवेतिकथयन्त्यइति अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनांकथमकर्मकतेतिचेच्छृ
णु धातोरर्थांतरेवृत्ते धात्वर्थेनोपसंग्रहात् प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिकाक्रिया वहतिभारं नदीवहति
स्यंदतेइत्यर्थः जीवति नृत्यति प्रसिद्धेर्यथा मेघोवर्षति कर्मणोऽविवक्षातोयथा हितान्नयः संश्रृणुते सकिंप्र
भुः उपसर्गादस्यत्यूह्योर्वेतिवाच्यं अकर्मकादितिनिवृत्तं बंधंनिरस्यति निरस्यते समूहति समूहते उपस
र्गास्त्रिस्वऊहतेः यादौक्किङितिह्रस्वः समुह्यात् अग्निंसमुह्य निसमुपविभ्योह्वः निह्वयते स्पर्द्धायामाङः
कृष्णश्चाणूरमाह्वयते स्पर्द्धायांकिं पुत्रमाह्वयति गंधनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनो
पयोगेषुकृञः गंधनंहिंसा नत्कुरुते सूचयतीत्यर्थः सूचनंहिप्राणवियोगानुकूलत्वाद्धिंसैवअवक्षेपणं
भर्त्सनं श्येनोवर्त्तिकामुदाकुरुते भर्त्सयतिइत्यर्थः हरिमुपकुरुते सेवतइत्यर्थः परदारान् प्रकुरुते तेषुस
हसाप्रवर्तते एधोदकस्योपस्कुरुते गुणमाधत्ते गाथाः प्रकुरुते प्रकथयति शतमुपकुरुते धर्मार्थविनियुं
क्ते एषुकिं घटंकरोति अधेःप्रसहने प्रसहनंक्षमाऽभिभवश्च षहमर्षणेऽभिभवेचेतिपाठात् शत्रुमधिकु

रुते क्षमतइत्यर्थः अभिभवतीतिवा वेःशब्दकर्मणः स्वरान्विकुरुते उच्चारयतीत्यर्थः शब्दकर्मणःकिं चित्तंविक
रोतिकामः अकर्मकाच्च वेःकृञइत्येव छात्राविकुर्वते विकारंलभंते संमाननोत्संजनाचार्यकरणज्ञानभृति
विगणनव्ययेषुनिञः अत्रोत्संजनज्ञानविगणनव्ययानयतेर्वाच्याः इतरेप्रयोगोपधायः तथाहि शास्त्रेनय
ते शास्त्रस्थंसिद्धांतंशिष्येभ्यःप्रापयतीत्यर्थः तेनचशिष्यसमाननंफलितं उत्संजने दंडमुन्नयते उत्क्षिपतीत्य
र्थः माणवकमुपनयते विधिनाआत्मसमीपंप्रापयतीत्यर्थः उपनयनपूर्वकेणाध्यापनेनाहिउपनेतर्याचार्यत्वं
क्रियते ज्ञानेतत्त्वंनियते निश्चिनोतीत्यर्थः कर्मकारानुपनयते भृतिदानेनस्वसमीपंप्रापयतीत्यर्थः विगणनं
ऋणादेर्निर्यातनं करंविनयते राज्ञेदेयंभागंपरिशोधयतीत्यर्थः शतंविनयते धर्मार्थेविनियुंक्तइत्यर्थः क
र्तृस्थेचाऽशरीरेकर्मणि नियःकर्तृस्थेकर्मणियदात्मनेपदंप्राप्तंतच्छरीरावयवभिन्नएवस्यात् सूत्रेशरीरशब्दे
नतदवयवोलक्ष्यते क्रोधंविनयते अपगमयति तत्फलस्यचित्तप्रसादस्यकर्तृगत्वात्स्वरितञित इत्येवसिद्धे
नियमार्थमिदं तेनेहन कुंडंविनयति कथंविगणय्यनयंतिपौरुषमितिकर्तृगामित्वाविवक्षायांभविष्यति वृत्ति
सर्गतायनेषुक्रमः वृत्तिरप्रतिबंधः ऋचिक्रमतेबुद्धिर्नप्रतिहन्यतइत्यर्थः सर्गउत्साहः अध्ययनायक्रमते उत्सहते
क्रमंतेऽस्मिन्शास्त्राणि स्फीतानिभवंतीत्यर्थः उपपराभ्यां वृत्त्यादिष्वाभ्यामेवक्रमेर्नतूपसर्गांतरपूर्वात् उपक्रम
ते पराक्रमतेनेह संक्रामति आङउद्गमने आक्रमतेसूर्यः उदयतइत्यर्थः ज्योतिरुद्गमनइतिवाच्यंनेह आ
क्रामतिधूमोहर्म्यतलात् वेःपादविहरणे साधुविक्रमतेवाजी पादविहरणेकिं विक्रामतिसंधिः द्विधाभवतिस्फु
टतीत्यर्थः प्रोपाभ्यांसमर्थाभ्यां समर्थौतुल्यार्थौ शकंध्वादित्वात्पररूपं प्रारंभेअनयोस्तुल्यार्थता प्रक्रमते

उपक्रमते समर्थाभ्यां किं प्रक्रामति गच्छतीत्यर्थः **अनुपसर्गाद्वा** क्रामति क्रमते अप्राप्तविभाषेयं वृत्त्यादौ तु
नित्यमेव **अपह्नवे ज्ञः** शतमपजानीते अपलपतीत्यर्थः **अकर्मकाच्च** सर्पिषो जानीते सर्पिषा उपायेन प्रव
र्तत इत्यर्थः **संप्रतिभ्यामनाध्याने** शतं संजानीते अवेक्षत इत्यर्थः शतं प्रतिजानीते अंगीकरोतीत्यर्थः अ
नाध्यान इति योगो विभज्यते तत्सामर्थ्यादकर्मकाच्चेति प्राप्तिरपि वार्यते मातरं मातुर्वा संजानाति कर्मणः
शेषत्वविवक्षायां षष्ठी **भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः** उपसंभाषोपमंत्रणे धातोर्वा
च्ये इतरे प्रयोगोपाधयः शास्त्रे वदते भासमानो ब्रवीतीत्यर्थः उपसंभाषोपसांत्वनं भृत्यानुपवदते सांत्वय
तीत्यर्थः ज्ञाने शास्त्रे वदते यत्ने क्षेत्रे वदते विमतौ क्षेत्रे विवदंते उपमंत्रणमुपच्छंदनं उपवदते प्रार्थयत
इत्यर्थः **व्यक्तवाचां समुच्चारणे** मनुष्यादीनां संभूयोच्चारणे वदेरात्मनेपदं स्यात् संप्रवदंते ब्राह्मणाः नेह
संप्रवदंति खगाः **अनोरकर्मकात्** व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् अनुवदते क
ठः कलापस्य अकर्मकात्किं उक्तमनुवदति व्यक्तवाचां किं अनुवदति वीणा **विभाषा विप्रलापे** विरुद्धोक्ति
रूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् विप्रवदंते विप्रवदंति वा वैद्याः **अवाद्ग्रः** अवगिरते गृणातिस्त्व
वपूर्वो न प्रयुज्यत इति भाष्यं **समः प्रतिज्ञाने** शब्दं नित्यं संगिरते प्रतिजानीत इत्यर्थः प्रतिज्ञाने किं संगिरति
ग्रासं **उदश्चरः सकर्मकात्** धर्ममुच्चरते उल्लंघ्य गच्छतीत्यर्थः सकर्मकात्किं बाष्पमुच्चरति उपरिष्टाद्गच्छ
तीत्यर्थः **समस्तृतीयायुक्तात्** रथेन संचरते **दाणश्च सा चेच्चतुर्थ्यर्थे** संपूर्वाद्दाणस्तृतीयांतेन युक्ता दुक्तं
स्यात् तृतीया चेच्चतुर्थ्यर्थे दास्या संयच्छते पूर्वसूत्रे सम इति षष्ठी तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते

रथेनसमुदाचरते दास्यासंप्रयच्छते उपाद्यमस्करणे स्वकरणंस्वीकारः भार्यामुपयच्छते विभाषोपय
मने यमः सिच्किद्वा विवाहे रामः सीतामुपायत उपायंस्तवा उदवोढेत्यर्थः गंधनांगेउपयमेतु पूर्वविप्रति
षेधान्नित्यमेव कित्वं ज्ञाश्रुस्मृदृशां सनः सन्नंतानामेषांप्राग्वत् धर्मंजिज्ञासते शुश्रूषते सुस्मूर्षते दिदृ
क्षते नानोर्ज्ञः पुत्रमनुजिज्ञासति पूर्वसूत्रस्यैवाऽयंनिषेधः अनंतरस्येतिन्यायात् तेनेह न सर्पिषोऽनुजिज्ञा
सते सर्पिषाप्रवर्तितुमिच्छतीत्यर्थः पूर्ववत्सन इतितङ् अकर्मकाच्चेति केवलाद्विधानात् प्रत्याङ्भ्यां
श्रुवः आभ्यांसन्नंतात्श्रुवउक्तंनस्यात् प्रतिशुश्रूषति आशुश्रूषति कर्मप्रवचनीयात्तुस्यादेव देवदत्तंप्र
तिशुश्रूषते शदेःशितः म्रियतेर्लुङ्लिङोश्च व्याख्यातं पूर्ववत्सनः सनःपूर्वोयोधातुस्तेनतुल्यं सन्नंता
दप्यात्मनेपदंस्यात् एदिधिषते शिशयिषते निविविक्षते पूर्ववत्किं बुभूषति शदेरित्यादिसूत्रत्रयेसनोनेत्यनु
वर्त्यवाक्यभेदेनव्याख्येयं तेनेह न शिशत्सति मुमूर्षति आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य एधांचक्रे प्रोपा
भ्यांयुजेरयज्ञपात्रेषु प्रयुंक्ते उपयुंक्ते स्वराद्यंतोपसर्गादितिवक्तव्यं उद्युंक्ते नियुंक्ते अयज्ञपात्रेषुकिं द्वं
द्वंन्यंचियज्ञपात्राणिप्रयुनक्ति समःक्ष्णुवः संक्ष्णुतेशस्त्रं भुजोऽनवने ओदनंभुंक्ते अभ्यवहरतीत्यर्थः
बुभुजे पृथिवीपालः पृथिवीमेवकेवलां वृद्धोजनोदुःखशतानिभुंक्ते इहोपभोगोभुजेरर्थः अनवनेकिं म
हींभुनक्ति णेरणौयत्कर्मणौ चेत्सकर्तानाध्याने ण्यंतादात्मनेपदंस्यादणौयाक्रियासैवचेत् ण्यंतेनो
च्यतेऽणौयत्कर्मकारकंसचेत्णौकर्तास्यान्नत्वाध्याने णिचश्चेतिसिद्धे अकर्त्रभिप्रायार्थमिदंकर्त्रभि
प्रायेतुविभाषोपपदेनेतिविकल्पेऽणावकर्मकादितिपरस्मैपदेचपरत्वात्प्राप्तेपूर्वविप्रतिषेधेनेदमेवेष्यते

कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणं तथाहि पश्यंतिभवंभक्ताः चाक्षुषज्ञानविषयंकुर्वंतीत्यर्थः प्रे
रणांशत्यागे पश्यतिभवः विषयोभवतीत्यर्थः ततोहेतुमण्णिच्चि दर्शयंतिभवंभक्ताः पश्यंतीत्यर्थः पुनर्ण्य
र्थस्याविवक्षायांदर्शयतेभवः इहप्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्चतुल्योऽर्थः तत्रतृतीयकक्ष्या-
यांनतङ् क्रियासाम्येऽप्यणौकर्मकारकस्यणौकर्तृत्वाभावात् चतुर्थ्यांतुतङ् द्वितीयामादाय क्रियासाम्या
त् प्रथमायांकर्मणोभवस्येहकर्तृत्वाच्च एवमारोहयतेहस्तीत्यप्युदाहणं आरोहंतिहस्तिनंहस्तिपकाः न्यक्
भावयंतीत्यर्थः ततः आरोहतिहस्ती न्यग्भवतीत्यर्थः ततोणिच् आरोहयति आरोहतीत्यर्थः ततः आरोहयते
न्यग्भवतीत्यर्थः यद्वा पश्यंति आरोहंतीतिप्रथमकक्षाप्राग्वत् ततः कर्मणएवहेतुत्वारोपाण्णिच् दर्शयतिभ
वः आरोहयतिहस्ती पश्यतआरोहतश्चप्रेरयतीत्यर्थः ततोणिजर्थांतत्प्रकृतिभ्यांचोपात्तयोरपिप्रेरणयोर्द्व
योस्त्यागेदर्शयते आरोहयतेइत्युदाहरणं अर्थःप्राग्वत् अस्मिन्पक्षेद्वितीयकक्ष्यायांनतङ् समानक्रि
यात्वाभावात् णिजर्थस्याधिक्यात् अनाध्यानेकिं स्मरतिवनगुल्मंकोकिलः स्मरयतिवनगुल्मः उत्कंठापू
र्वकस्मृतेोविषयोभवतीत्यर्थः भीस्म्योर्हेतुभये व्याख्यातं गृधिवंच्योःप्रलंभने प्रतारणेऽर्थेण्यंताभ्याम
भ्यांप्राग्वत् माणवकंगर्द्धयते वंचयतेवा प्रलंभनेकिं श्वानंगर्द्धयति अभिकांक्षामस्योत्पादयतीत्यर्थः अ
हिंवंचयति वर्जयतीत्यर्थः लियःसंमाननशालिनीकरणयोश्च व्याख्यातं मिथ्योपपदात्कृञोऽभ्यासे
णेरित्येव पदंमिथ्याकारयते स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः मिथ्योपपदात्किं पदंसुष्ठुकारयति अ
भ्यासेकिं सकृत्पदंमिथ्याकारयति स्वरितञितःकर्त्रभिप्रायेक्रियाफले यजते सुनुते कर्त्रभिप्राये-

किं ऋत्विजोयजंति ऋन्वंति अपाद्वदः न्यायमपवदते कर्त्रभिप्रायइत्येव अपवदतिणिचश्च कारयते स
मुदाङ्भ्योयमोग्रंथे अग्रंथइतिच्छेदः व्रीहीन्संयच्छते भारमुद्यच्छते वस्त्रमायच्छते अग्रंथेकिं उद्य
च्छतिवेदं अधिगंतुमुद्यमंकरोतीत्यर्थः कर्त्रभिप्रायइत्येव अनुपसर्गात्ज्ञः गांजानीते अनुपसर्गात्किं
स्वर्गंलोकंनप्रजानाति कथंतर्हिभट्टिः इत्थंनृपःपूर्वमवालुलोचेततोऽनुजज्ञेगमनंसुतस्येति कर्मणि
लिट् नृपेणेतिविपरिणामः विभाषोपपदेनप्रतीयमाने स्वरितञितइत्यादिपंचसूत्र्यायदात्मनेपदंवि
हितंनत्समीपोच्चारितेनपदेनक्रियाफलस्यकर्तृगामित्वेद्योतितेवास्यात् स्वयज्ञंयजति यजतेवा स्वंकटं
करोति कुरुतेवा स्वंपुत्रंअपवदतिअपवदतेवा स्वंयज्ञंकारयतिकारयतेवा स्वंव्रीहिंसंयच्छतिसंयच्छ
तेवा स्वांगांजानाति जानीतेवा इत्यात्मनेपदं शेषात्कर्तरिपरस्मैपदं अस्ति अनुपराभ्यांकृञः कर्तृगेऽ
पिफलेगंधनादौचपरस्मैपदार्थमिदं अनुकरोति पराकरोति कर्तरीत्येव भावकर्मणोर्माभूत् नन्वेवमपि
कर्मकर्त्तरिप्रसंगः कार्यातिदेशपक्षस्यमुख्यतयातत्रकर्मवत्कर्मणेत्यात्मनेपदेनपरेणास्यबाधात् शा
स्त्रातिदेशपक्षेकर्त्तरिकर्मेत्यतः शेषादित्यतश्चकर्तृग्रहणद्वयमनुवर्त्यकर्त्तैवयः कर्तानतुकर्मकर्त्ता
तत्रैवेतिव्याख्येयं अभिप्रत्यतिभ्यःक्षिपः क्षिपप्रेरणेस्वरितेत् अभिक्षिपति प्राद्वहः प्रवहति परेर्मृषः
परिमृषति वोजादिकस्यतुपरिमर्षति इहपरेरितियोगंविभज्यवहेरपीतिकेचित् व्याङ्परिभ्योरमः विर
मति उपाच्च यज्ञदत्तमुपरमति उपरमयतीत्यर्थः अंतर्भावितण्यर्थोऽयं विभाषाकर्मकात् उपाद्रमेरक
र्मकात्परस्मैपदंवा उपरमत्युपरमतेवा निवर्तनइत्यर्थः बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणेः ण्यन्तं

तेभ्यः परस्मैपदं स्याण्णिचश्चेत्यस्यापवादः बोधयति पद्मं बोधयति काष्ठानि नाशयति दुःखं जनयति स्मरं
अध्यापयति वेदं श्रावयति शापयंतीत्यर्थः द्रावयति विलापयतीत्यर्थः स्रावयति स्यंदयतीत्यर्थः निगरणचल
नार्थेभ्यश्च निगारयति आशयति भोजयति चलयति कंपयति आदेः प्रतिषेधः आदयते देवदत्तेन गतिबु
द्धीति कर्मत्वमादिखाद्योर्नेति प्रतिषिद्धं निगरणचलनेति सूत्रेण प्राप्तस्यैवायं निषेधः कर्त्रभिप्रायेशेषादि
ति परस्मैपदं स्यादेव आदयत्यन्नं बटुना अणावकर्मकाच्चित्तवत्कर्तृकात् ण्यंतात्परस्मैपदं स्यात् शेते
कृष्णः तं गोपी शाययति नपादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः एभ्यो ण्यंतेभ्यः परस्मैपदं न
पिबतिर्निगरणार्थः इतरे चित्तवत्कर्तृकाकर्मकाः नृतिश्चलनार्थोपि तेन सूत्रद्वयेन प्राप्तिः पाययते दमयते
आयामयते आयासयते परिमोहयते रोचयते नर्त्तयते वादयते वासयते धेट उपसंख्यानं धापयेते शिशुमे
कं समीची अकर्त्रभिप्रायेशेषादिति परस्मैपदं स्यादेव वत्सान्पाययति पयः दमयंती कमनीयतामदं भि
क्षां वासयति वाक्यषः लोहितायति लोहितायते द्युद्भ्यो लुङि अद्युतत् अद्योतिष्ट वृद्भ्यः स्यसनोः
वर्त्स्यति वर्तिष्यते विवृत्सति विवर्तिषते लुटि च क्लृपः कल्प्तासि कल्पितासे कल्प्तासे कल्प्स्यति कल्पि
ष्यते कल्प्स्यते चिक्लृप्सति चिकल्पिषते चिक्लृप्सते इति पदव्यवस्था अथ भावकर्मणोर्लङादयः भाव
कर्मणोरिति तङ् सार्वधातुके यक् धातोर्यक्प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे भावो भावना उ
त्पादना क्रिया सा च धातुत्वेन सकलधातुवाच्या भावार्थक लकारेणानूद्यते युष्मदस्मदोः सामानाधिक
रण्याभावात्प्रथमः पुरुषः तिङ्वाच्यभावनायाः असत्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किंतु एक

वचनमेव तस्यौत्सर्गिकत्वेनसंख्यानपेक्षत्वात् अनभिहिते कर्त्तरि तृतीया त्वयामयाअन्यैश्चभूयतेबभू
वे स्यसिच्सीयुट्तासिषुभावकर्मणोरुपदेशेऽज्झनग्रहदृशांवाचिण्वदिट्च उपदेशेयोऽच्तदंतानांहनादी
नांचचिणीवांगकार्यं वास्यात्स्यादिषुपरेषुभावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च अयमिट्चिण्व
द्भावसन्नियोगविशिष्टत्वात्तदभावेन इहार्धधातुकइत्यधिकृतं सीयुटोविशेषणंनेतरेषामव्यभिचारात्
चिण्वद्भावाद्वृद्धिः भाविता भविता भाविष्यते भविष्यते भूयतां अभूयत भूयेत भाविषीष्ट भविषीष्ट चि
ण्भावकर्मणोः च्लेश्चिण्स्याद्भावकर्मवाचिनितशब्देपरे अभावि अभाविष्यत अभविष्यत तिङोक्त-
त्वात्कर्मणिनद्वितीया अनुभूयते आनंदश्चैत्रेण त्वयामयाच अनुभूयेते अनुभूयंते त्वमनुभूयसे अ
हमनुभूये अन्वभावि अन्वभाविषातां अन्वभविषातांणिलोपः भाव्यते भावयांचक्रे भावयांबभूवे भा
वयामासे इहतशब्दस्यएशिइटएत्वेचकृतेहएतीतिहत्वंन तासिनासाहचर्यादस्तेरपिव्यतिहे इत्यादौ
सार्वधातुकेएवहएतीतिहत्वप्रवृत्तेरित्याहुः भाविता चिण्वदिटआभियत्वेनासिद्धत्वाण्णिलोपः पक्षे
भावयिता भाविष्यते भावयिष्यते भाव्यतां अभाव्यत भाव्येत भाविषीष्ट भावयिषीष्ट अभावि अ-
भाविषातां अभावयिषातां बुभूष्यते बुभूषांचक्रे बुभूषिता बुभूषिष्यते बोभूयते यङ्लुगंतात्तुबोभू
यते बोभवांचक्रे बोभाविता बोभविता अकृत्सार्वेतिदीर्घः स्तूयतेविष्णुः तुष्टुवे स्ताविता स्तोता स्तावि-
ष्यते स्तोष्यते अस्तावि अस्ताविषातां अस्तोषातां गुणोर्तीतिगुणः अर्यते स्मर्यते सस्मरे परत्वान्नित्य
त्वाच्चगुणेरपरेचकृतेऽजंतत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् आरिता अर्ता स्मारिता स्मर्त्ता गुणोर्ती

त्यत्रनित्यग्रहणानुवृत्तेरुक्तत्वान्नेहगुणः संस्क्रियते अनिदितामितिनलोपः स्रस्यते इदितस्तु नंद्यते संप्र
सारणं इज्यते अयङ्यिक्ङिति शय्यते तनोतेर्यकि आकारोऽन्तादेशोवास्यात् तायते तन्यते येविभाषाजा
यते जन्यते तपोऽनुतापेच तपश्च्लेश्चिण्नस्यात्कर्मकर्तर्यनुतापेच अन्वतप्तपापेन पापंकर्तृतेनाभ्या
हतइत्यर्थः कर्मणिलुङ् यद्वापापेनपुंसाकर्त्राअशोचि घुमास्थेतीत्वं दीयते धीयते आदेचउपदेशेऽशित्यत्र
शितीतिकर्मधारयादित्संज्ञकशकारादौनिषेधः एशआदिशित्वाभावात्तस्मिन्नात्वं जग्ले आतोयुक्चि
ण्कृतोः आदंतानांयुगागमःस्याच्चिणिञ्णितिकृतिच दायिता दाता दायिषीष्ट दासीष्ट अदायि अ
दायिषातां स्थाघ्वोरिच्च अदिषातां अधायि अधायिषातां अधिषातां अग्लायि अग्लायिषातां अग्ला
सातां हन्यते अचिण्णलोरित्युक्तेर्हनस्तोन होहंतेरितिकुत्वं घानिता हंता घानिष्यते हनिष्यते आशी
र्लिङि वधादेशस्यापवादश्चिण्वद्भावः आर्धधातुकेसीयुटीतिविशेषविहितत्वात् घानिषीष्ट पक्षेवधिषी
ष्ट अघानि अघानिषातां अहसातां पक्षेवधादेशः अवधि अवधिषातां अघानिष्यत अहनिष्यत नच
स्यादिषुचिण्वदित्यतिदेशाद्वधादेशःस्यादितिवाच्यं अंगस्येत्यधिकारादंगस्यैवातिदेशात् गृह्यते चिण्व
दिटोनदीर्घत्वं प्रकृतस्यवलादिलक्षणस्यैवेटोग्रहोऽलिटीत्यनेनदीर्घविधानात् ग्राहिता ग्रहीता ग्राहि
ष्यते ग्रहीष्यते ग्राहिषीष्ट ग्रहीषीष्ट अग्राहि अग्राहिषातां अग्रहीषातां दृश्यते अदर्शि अदर्शिषातां सिचः
कित्वादम्न अदृक्षातां गिरतेर्लुङि ध्वमिचतुरधिकंशतं तथाहि चिण्वदिटोदीर्घोनेत्युक्तं अगारिध्वं ह्लिती
येलिटिवृतोवेतिवादीर्घः अगरीध्वं अगरिध्वं एषांत्रयाणांलत्वं दत्वंढलत्वंचेतिपंचवैकल्पिकानि

इत्थंषण्णवतिः लिङ्सिचोरितिविकल्पादिडभावेउश्चेतिकित्वं इत्वं रपरत्वं हलिचेतिदीर्घः इणःषीध्वमिति
नित्यंढत्वं अगीढ्वं ढ्वमानांद्वित्वविकल्पेअष्टौ उक्तषण्णवत्यासह संकलनयोक्तासंख्येति इट् दीर्घश्चिण्
वदिट्लत्वंढत्वंद्वित्वंत्रिकंतथा इत्यष्टानांविकल्पेनचतुर्भिरधिकंशतं हेतुमण्यंतात्कर्मणिलः यक्णिलो-
पः शम्यते मोह्यासुकुंदेन च्चिण्णमुलोर्दीर्घोऽन्यतरस्यां चिण्परेणमुल्परेचणौमितामुपधायादीर्घोवास्या
त् प्रकृतोमितांह्रस्वएवतुनविकल्पितः ण्यंताण्णौह्रस्वविकल्पासिद्धेः दीर्घविधौह्रिणिचोलोपोनस्थानि
वदितिदीर्घःसिध्यति ह्रस्वविधौतुस्थानिवत्वंदुर्वारं भाष्येतुपूर्वत्रासिद्धेनस्थानिवदित्यवष्टभ्यद्विर्वचनसव
र्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः णाविति जातिपरोनिर्देशः दीर्घग्रहणंचेदंमास्त्वितिनदाशयः शामि
ता शमिता शमयिता शामिष्यते शमिष्यते शमयिष्यते यङंताण्णिच् शंशम्यते शंशामिता शंशमिता शं
शमयिता यङ्लुगंताण्णिच्यप्येवं भाष्यमतेतुयङंतान्चिण्वदिटिदीर्घोनास्तीतिविशेषः ण्यंतत्वाभावेश
म्यतेमुनिनानोदात्तोपदेशस्यमांतस्यानाचमेः उपधायावृद्धिर्नस्याच्चिणिञ्णितिकृतिच अशमि अद
मि उदात्तोपदेशस्येतिकिं अगामि मांतस्यकिं अवादि अनाचमेः किं अचामि अनाचमिकमिवमीनामि
ति वक्तव्यं चिणिआयादयइतिणिङभावे अकामि णिङ्णिचोरप्येवं अवामि वधहिंसायां हलंतः जनि
वध्योश्चेतिनवृद्धिः अवधि जागृोऽविचिण्णल्ङित्स्वित्युक्तेर्नगुणः अजागारि जंभेश्चचिणि नलोपोवा
स्यात् अभाजि अभंजि विभाषाचिण्णमुलोः लभेर्नुमागमोवास्यात् अलंभि अलाभि व्यवस्थितविकल्पा
त्प्रादेर्नित्यंनुम् प्रालंभि द्विकर्मकाणांतु गौणेकर्मणिदुह्यादेः प्रधानेनीहृकृषवहां बुद्धिभक्षार्थयोः

शब्दकर्मकाणांनिजेच्छया प्रयोज्यकर्मण्यन्येषां ण्यंतानां लादयोमताः गौर्दुह्यते पयः अजाग्रामंनीयतेह्रि
यते कृष्यते उह्यते बोध्यते माणवकं धर्मः माणवकोधर्ममितिवा देवदत्तोग्रामंगम्यते अकर्मकाणांकाला
दिकर्मकाणां कर्मणिभावेचलकार इष्यते मासोमासंवा आस्यते देवदत्तेन णिजंतात्तु प्रयोज्येप्रत्ययः मास
मास्यतेमाणवकः इतिभावकर्मप्रक्रिया यदासौकार्यातिशयं द्योतयितुं कर्तृव्यापारोनविवक्ष्यतेतदाकारका
तराण्यपिकर्तृसंज्ञां लभंते स्वव्यापारेस्वतंत्रत्वात् तेनपूर्वंकरणादित्वेऽपिसंप्रतिकर्तृत्वात्कर्त्तरिलकारः
साध्वसिश्छिनत्तिकाष्ठानिपचंति स्थालीपचति कर्मणस्तुकर्तृत्वविवक्षायांप्राक्सकर्मकाअपिप्रायेणाक
र्मकाः तेभ्योभावेकर्तरिचलकाराः पच्यतेओदनेनभिद्यतेकाष्ठेन कर्तरितु कर्मवत्कर्मणातुल्यक्रियः क
र्मस्थयाक्रिययातुल्यक्रियःकर्ताकर्मवत्स्यात् कार्यातिदेशोऽयं तेनयगात्मनेपदंचिण्चिण्वदिटःस्युः क
र्तुरभिहितत्वात्प्रथमापच्यतेओदनः भिद्यतेकाष्ठं अपाचि अभेदि ननुभावेलकारेकर्तुर्द्वितीयास्यात् अस्मा
दतिदेशादितिचेन्नलकारवाच्यएवकर्ताकर्मवत्स्यात् लिङ्याशिष्यङितिद्विलकारकाल्लइत्यनुवृत्तेः भावेप्र
त्ययेनचकर्तुर्लकारेणानुपस्थितेः अतएवकृत्यक्तखलर्थाः कर्मकर्तरिनभवंतिकिंतुभावेएव भेत्तव्यंकुसूलेन
ननुपचिभिद्योः कर्मस्थाक्रियाविक्लृत्तिर्द्विधाभवनंच सैवेदानींकर्तृस्थानतुतत्तुल्या सत्यं कर्मकर्तृत्वावस्था
भेदोपाधिकंतत्समानाधिकरणंक्रियायाः भेदमाश्रित्यव्यवहारः कर्मणेतिकिं करणाधिकरणाभ्यां तुल्यक्रिये
पूर्वोक्तेसाध्वसिश्छिनत्तीत्यादौमाभूत् किंच कर्तृस्थक्रियेभ्योमाभूत् गच्छतिग्रामः आरोहतिहस्ती अधिगन
च्छतिशास्त्रार्थः स्मरतिश्रद्दधातिच यत्रकर्मणिक्रियाकृतोविशेषोदृश्यते यथापक्वेषुतंडुलेषुयथावाच्छिन्ने

षुकाष्ठेषु तत्रकर्मस्थाक्रियानेतरत्र नहिपक्वापक्वतंडुलेष्विवगतागतग्रामेषुवैलक्षण्यमुपलभ्यते करोतिरुत्पा
दनार्थः उत्पत्तिश्चकर्मस्थातेनकारिष्यतेघटइत्यादि यत्नार्थत्वेतुनैतत्सिध्येत् ज्ञानेच्छादिवद्यत्नस्यकर्तृस्थत्वात्
एतेनानुव्यवस्यमानेर्थेइतिव्याख्यातं कर्तृस्थत्वेनयगभावात्श्यन्निरुक्तेआतोखोपेचरूपसिद्धेः ताच्छील्या
दावयंचानश्चत्वात्मनेपदं सकर्मकाणांप्रतिषेधोवक्तव्यः अन्योन्यंस्पृशतः अजाग्रामंनयति दुहिपच्योर्ब
हुलंसकर्मकयोरितिवाच्यं नदुहस्नुनमांयक्चिणौ एषांकर्मकर्तरियक्चिणोनस्तः दुहेरनेनयकएवनि-
षेधः चिण्तुविकल्पेनेष्यते शप्लुक् गोःपयोदुग्धे अचःकर्मकर्त्तरि अजंतात्च्लेःचिण्वास्यात्कर्मकर्त्तरित
शब्देपरे अकारि अकृत दुहश्च अदोहि पक्षेक्सः लुग्वेतिपक्षेलुक् अदुग्ध अधुक्षत उदुंबरःफलंपच्यते सृ-
जियुज्योःश्यंस्तु अनयोःसकर्मकयोःकर्ताबहुलंकर्मवत् यगपवादश्चश्यन्वाच्यइत्यर्थः सृजेःश्रद्धोपपन्ने
कर्त्तर्येवेतिवाच्यं सृज्यतेस्रजंभक्तः श्रद्धयानिष्पादयतीत्यर्थः असर्जि युज्यतेब्रह्मचारीयोगं भूषाकर्म
किरादिसनांचान्यत्रात्मनेपदात् भूषावाचिनांकिरादीनांसन्नंतानांचयक्चिणोचिण्वदिटूचनेतिवा
च्यमित्यर्थः अलंकुरुतेकन्या अलमकृत अवकिरतेहस्ती अवाकीर्ष्ट गिरते अगीर्ष्ट आद्रियते आदृत किरा
दिस्तुदाद्यंतर्गणः चिकीर्षतेकटः अचिकीर्षिष्ट इच्छायाःकर्तृस्थत्वेऽपिकरोतिक्रियापेक्षमिहकर्मस्थक्रि-
यात्वं नरुधः अस्मात्च्लेःचिण्न अवारुद्धगौः कर्मकर्त्तरीत्येव अवारोधिगौर्गोपेन तपस्तपःकर्मकस्यैव
कर्ताकर्मवत्स्यात् विध्यर्थमिदं एवकारस्तुव्यर्थएवेतिवृत्त्यनुसारिणः तप्यतेतपस्तापसः अजर्यतीत्यर्थः
तपोऽनुतापेचेतिचिण्निषेधात्सिच् अतप्त तपःकर्मकस्येतिकिं उत्तपतिसुवर्णंसुवर्णकारः नदुहस्नुनमां

यण्ग्चिणो भ्रस्नुते भास्नाविष्ट भास्नोष्ट नमतेदंडः अनंस्त अंतर्भावितण्यर्थोऽत्रनमिः यक्चिणोः प्रतिषे
धेहेतुमण्णिश्रिब्रूञामुपसंख्यानं कारयते अचीकरत उच्छ्रयतेदण्डः उदशिश्रिय नच्चिण्वदिट्तुस्यादेव
कारिष्यते उच्छ्रायिष्यते ब्रूतेकथा अवोचत भारद्वाजीयाःपठंति णिश्रिग्रंथिब्रूञामात्मनेपदाकर्मका-
णामुपसंख्यानं पुच्छमुदस्यत्यकत्पुच्छयतेगौः अंतर्भावितण्यर्थतायांउत्पुच्छयतेगां पुनःकर्तृत्वविवक्षा
यांउत्पुच्छयतेगौः उदपुच्छत यक्चिणोःप्रतिषेधाच्छपृचङो श्रंथिग्रंथ्योरा धृषीयत्वाण्णिजभावपक्षेग्र
हणं ग्रंथतिग्रंथं श्रंथतिमेखलांदेवदत्तः ग्रंथतेग्रंथः अग्रंथिष्ट श्रंथते अश्रंथिष्ट क्रैयादिकयोस्तु श्रथ्
नीते ग्रथ्नीते स्वयमेव विकुर्वते सैंधवाः वल्गंतीत्यर्थः वेःशब्दकर्मणोःकर्मकात्त्वेतितङ् अंतर्भावितण्य
र्थस्य पुनःप्रेषणात्यागेविकुर्वतेसैंधवाः व्याकारिष्ट व्यकारिषातां व्यकारिषत व्यकृत व्यकृषातां व्यकृषत
कुषिरजोःप्राचांश्यन्परस्मैपदंच अनयोःकर्मकर्त्तरि नयक्किंतुश्यन्परस्मैपदंच आत्मनेपदापवादः
कुष्यति कुष्यतेपादः रज्यतिरज्यतेवस्त्रं यगविषयेतुनास्यप्रवृत्तिः कोषिषीष्ट रङ्क्षीष्ट इतिकर्मकर्तृप्रक्रि
या अभिज्ञावचनेलृट् स्मृतिबोधिन्युपपदेभूतानद्यतनेधातोर्लृट्स्यात् लङोपवादः स्मरसिकृष्णगो
कुलेवत्स्यामः एवंबुध्यसेचेतयसे इत्यादियोगेऽपि तेषामपिप्रकरणाद्विशेनस्मृतौवृत्तिसंभवात् नय-
दि यद्योगेउक्तंन अभिजानासिकृष्णयद्वनेअभुंज्महि विभाषासाकांक्षे उक्तविषयेलृड्वास्याल्लक्ष्यल
क्षणभावेनसाकांक्षश्चेद्भृत्वर्थः स्मरासिकृष्णावनेवत्स्यामः तत्रगाश्चारयिष्यामः अत्रवासोलक्षणंचा
रणंलक्ष्यं पक्षेलङ् यच्छब्दयोगेऽपिनयदीतिबाधित्वापरत्वाद्विकल्पः परोक्षेलिट् चकार उत्तमपुरुषे

चित्तविक्षेपादिनापारोक्ष्यं सुप्तोऽहंकिलविललाप बहुजगदपुरस्तात्तस्यमत्ताकिलाऽहं अत्यंतापन्हवेलिड्
वक्तव्यः कलिंगेष्ववात्सीः नाहंकलिंगान्जगाम हशश्वतोर्लङ्च अनयोरुपपदयोर्लिट्विषयेलङ्स्याच्चाल्लि
ट् इतिहाकरोच्चकारवा शश्वदकरोच्चकारवा प्रश्नेचासन्नकाले प्रष्टव्यः प्रश्नः आसन्नकालेपृच्छ्यमाने
ऽर्थेलिट्विषयेलङ्लिटौस्तः अगच्छत्किं जगामकिं अनासन्नेतु कंसंजघानकिं लट्स्मे लिटोऽपवादः यन
जतिस्मयुधिष्ठिरः अपरोक्षेच भूतानद्यतनेलट्स्यात्स्मयोगे एवंस्मपिताब्रवीति ननौपृष्टप्रतिवचने अ
नद्यतनपरोक्षइतिनिवृत्तं भूतेलट्स्यात् अकार्षीःकिं ननुकरोमिभोः नन्वोर्विभाषा अकार्षीःकिं नकरोमि
नाकार्षं अहंनुकरोमि अहन्वकार्षं पुरिलुङ्चास्मे अनद्यतनग्रहणंमंडूकप्लुत्यानुवर्तते पुराशब्दयोगेभूता
नद्यतनेविभाषालुङ्चाल्लट् नतुस्मयोगे पक्षेयथाप्राप्तं वसंतीहपुराच्छात्राः अवात्सुः अवसन् ऊषुर्वा अ
स्मेकिं यजतिस्मपुरा भविष्यतीत्यनुवर्तमाने यावत्पुरानिपातयोर्लट् यावद्भुंक्ते पुराभुंक्ते निपातावेतौनि
श्चयंद्योतयतः निपातयोःकिं यावद्दास्यतेतावद्भोक्ष्यते करणभूतयापुरायास्यति विभाषाकदाकर्ह्योः
भविष्यति लट्स्यात् कदाकर्हिवाभुंक्ते भोक्ष्यते भोक्तावा किंवृत्तेलिप्सायां भविष्यतिलट्वास्यात् कंक
तरंकतमंवाभोजयसि भोजयिष्यसि भोजयितासिवा लिप्सायांकिं कःपाटलिपुत्रंगमिष्यति लिप्स्यमा
नसिद्धौच लिप्स्यमानेनान्नादिनास्वर्गादेःसिद्धौगम्यमानायांभविष्यतिलट्वास्यात् योऽन्नंददाति
दास्यति दातावा सःस्वर्गंयाति यास्यति यातावा लोडर्थलक्षणेच लोडर्थःप्रैषादिर्लक्ष्यतेयेनतस्मिन्न
र्थेवर्तमानाद्धातोर्भविष्यतिलट्वास्यात् कृष्णश्चेद्भुंक्तेत्वंगाश्चारयपक्षेलुङ्लृटौ लिङ्सिचोर्धर्मोहृ

र्तिके ऊर्ध्वंमुहूर्ताद्भवऊर्ध्वमौहूर्तिकः निपातनात्समासः उत्तरपदवृद्धिश्च ऊर्ध्वमौहूर्तिके भविष्यति लोड
र्थलक्षणे वर्तमानाद्धातोर्लिङ्लिटौ वास्तः मुहूर्तादुपरि उपाध्यायश्चेदागच्छेदागच्छत्यागमिष्यत्यागंतावा
अथत्वंछंदोधीष्व वर्तमानसामीप्ये वर्तमानवद्वा समीपमेव सामीप्यं स्वार्थे ष्यञ् वर्तमाने लडित्यारभ्य उ
णादयोबहुलमितियावद्येनोपाधिना प्रत्ययाउक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वास्युः क
दाआगतोऽसि अयमागमं कदागमिष्यसि एषगच्छामि गमिष्यामि वा आशंसायांभूतवच्च वर्तमानसा
मीप्य इति नानुवर्तते भविष्यतिकाले भूतवद्वर्तमानवच्च प्रत्यया वास्युराशंसायां देवश्चेदवर्षीद्वर्षति व
र्षिष्यति वा धान्यमवाप्स्म वपामः वप्स्यामो वा सामान्यातिदेशो विशेषानतिदेशः तेन लङ्लिटौ न क्षिप्रव
चने लृट् क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति शीघ्रं वप्स्यामः
नेति वक्तव्ये लृट् ग्रहणं लुटोऽपि विषये यथा स्यात् श्वः शीघ्रं वप्स्यामः आशंसावचने लिङ् आशंसावा
चिन्युपपदे भविष्यति लिङ् स्यान्न तु भूतवत् गुरुश्चेदुपेयादाशंसेऽधीयीय आशंसे क्षिप्रमधीयीय ना
नद्यतनवत्क्रियाप्रबंधसामीप्ययोः क्रियायाः सातत्ये सामीप्ये च गम्ये लङ्लुटौ न यावज्जीवमन्नम
दाद्दास्यति वा सामीप्यं तुल्यजातीयेनाऽव्यवधानं येयं पौर्णमास्यतिक्रांता तस्यामग्नीनाधित सोमेना
यष्ट येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते सोमेन यक्ष्यते भविष्यति मर्यादावचनेऽवरस्मिन्
भविष्यति काले मर्यादोक्तावऽवरस्मिन्प्रविभागे नद्यतनवन्न योऽयमध्वागंतव्य आपाटलिपुत्रात्तस्यय
दवरं कौशांव्यास्तत्र सक्तून्पास्यामः कालविभागे चानहोरात्राणां पूर्वसूत्रं सर्वमनुवर्तते अहोरात्र

संबंधिनिविभागेप्रतिषेधार्थमिदंयोगविभागउत्तरार्थः योऽयंवत्सरआगामीतस्ययदवरमाग्रहायण्यास्तत्र युक्ताः अध्येष्यामहे अनहोरात्राणांकिं योऽयंमासआगामीतस्ययोऽवरःपंचदशरात्रः तत्राध्येतास्महे परस्मिन् विभाषा अवरस्मिन्वर्जंपूर्वसूत्रद्वयमनुवर्तते अप्राप्तविभाषेयंयोऽयंसंवत्सरआगामीतस्ययत्परमाग्रहायण्या स्तत्राध्येष्यामहे अध्येतास्महे लिङ्निमित्तेलृङ्क्रियातिपत्तौ भविष्यतीत्येव सुदृष्टिश्चेदभविष्यत्तदासु भिक्षमभविष्यत् भूतेच पूर्वसूत्रंसंपूर्णमनुवर्तते वोताप्योः वाआउताप्योरितिछेदः उताप्योरित्यतःप्राग् भूतेलिङ्निमित्तेलृङ्वेत्यधिक्रियते पूर्वसूत्रंतूताप्योरित्यादौप्रवर्तनइतिविवेकः गर्हायांलडपिजात्वोः आभ्यांयोगेलट्स्यात्कालत्रयेगर्हायां लुङादीन्परत्वादयंबाधते अपिजायांत्यजसिजातुगणिकामादत्सेगर्हि तमेतत् विभाषाकथमिलिङ्च गर्हायामित्येवकालत्रयेलिङ्चाल्लट् कथंधर्मंत्यजेस्त्यजसिवा पक्षेका लत्रयेलकाराः अत्रभविष्यतिनित्यंलृङ्भूतेवा कथंनामसतत्रभवान्धर्ममत्यक्ष्यत् किंवृत्तेलिङ्लृटौ ग- र्हायामित्येव विभाषातुनानुवर्तते कः कतरःकतमोवाहरिंनिंदेत् निंदिष्यतिवा लृङ्प्राग्वत् अनवक्लृप्त्य मर्षयोरकिंवृत्तेऽपि गर्हायामितिनिवृत्तं अनवक्लृप्तिरसंभवाना अमर्षोऽक्षमा नसंभावयामि नमर्षये वा भवान्हरिंनिंदेत् निंदिष्यतिवा कः कतरोवाहरिंनिंदेत् निंदिष्यतिवा लृङ्प्राग्वत् किंकिलास्त्यर्थेषुल ट् अनवक्लृप्त्यमर्षयोरित्येतद्गर्हार्थांचेतियावदनुवर्तते किंकिलेतिसमुदायःक्रोधद्योतकमुपपदं अ- स्त्यर्थाः अस्तिभवतिविद्यतयः लिङोपवादः नश्रद्दधेनमर्षयेवा किंकिलत्वंशूद्रान्नंभोक्ष्यसेअस्ति भवसिविद्यतेवाशूद्रींगमिष्यसि अत्रलृङ्न जातुयदोर्लिङ् यदायद्योरुपसंख्यानं लृटोऽपवादः

जातुयद्यदायदिवात्वादृशोहरिंनिंदेत् नावकल्पयामिनमर्षयामिलृङ् प्राग्वत् यच्चयत्रयोः यच्चयत्रवात्व
मेवंकुर्याः नश्रद्दधेनमर्षयामि गर्हायांच अनवकॢप्त्यमर्षयोरितिनिवृत्तं यच्चयत्रयोगेगर्हायांलिङ् वास्यात्
यच्चयत्रवात्वंशूद्रंयाजयेःअन्याय्यंतत् चित्रीकरणेच यच्चयत्रवात्वंशूद्रंयाजयेः आश्चर्यमेतत् शेषेलृङ्
यदौ यच्चयत्राभ्यामन्यस्मिन्नुपपदेचित्रीकरणेगम्येधातोर्लृङ् स्यात् आश्चर्यमंधोनामकृष्णंद्रक्ष्यति अयदौ
किं आश्चर्यंयदिसोऽधीयीत उताप्योःसमर्थयोर्लिङ् बाढमित्यर्थेऽनयोस्तुल्यार्थता उतअपिवाहन्यादधं
हरिःसमर्थयोःकिं उतदंडःपतिष्यति अपिधास्यतिद्वारं प्रश्नःप्रच्छादनंचगम्यते इतःप्रभृतिलिङ्निमित्ते
लिङ् क्रियातिपत्तौ भूतेऽपिनित्योल्लृङ् कामप्रवेदनेऽकच्चिति स्वाभिप्रायाविष्करणेगम्यमानेलिङ् स्यान्न
तुकच्चिति कामोमेभुंजीतभवान् अकच्चित्तीतिकिंकच्चिज्जीवति संभावनेऽलमितिचेत्सिद्धाप्रयोगे अलम
र्थोऽत्रप्रौढिः संभावनमितिअलमितिचप्रथमयासस्याचविपरिणम्यते संभावनेऽर्थेलिङ् स्यात्तच्चेत्सं
भावनमलमिति सिद्धाप्रयोगेसति अपिगिरिंशिरसाभिंद्यात् सिद्धाप्रयोगेकिं अलंकृष्णोहस्तिनंहनि-
ष्यति विभाषाधातौसंभावनवचनेयदि पूर्वसूत्रमनुवर्तते संभावनेऽर्थे धातावुपपदेऽउक्तेऽर्थेलिङ् वास्यान्न
तुयच्छब्दे पूर्वेणनित्येप्राप्तेवचनंसंभावयामिभुंजीतभोक्ष्यतेवाभवान् अयदिकिं संभावयामियद्भुंजीथा
स्त्वं हेतुहेतुमतोर्लिङ् वास्यात् कृष्णंनमेच्चेत्सुखंयायात् कृष्णंनंस्यतिचेत्सुखंयास्यति भविष्यत्येवेष्य
ते नेहहंतीतिपलायते इच्छार्थेषुलिङ्लोटौ इच्छामिभुंजीत भुंक्तांवा भवान् एवंकामयेप्रार्थयेइत्या
दियोगेबोध्यं कामप्रवेदनइतिवक्तव्यं नेहइच्छन्करोति लिङ्च समानकर्तृकेषुइच्छार्थेषूपपदेषुलि

ङ् स्यात् भुंजीयइतीच्छति इच्छार्थेभ्योविभाषावर्त्तमाने लिङ् स्यात्पक्षेलट् इच्छेत् इच्छति कामयेत कामयते विधिनिमंत्रणेतिलिङ् विधौ यजेत निमंत्रणे इहभुंजीतभवान् आमंत्रणे इहासीत अधीष्टे पुत्रमध्यापयेद्भवान् संप्रश्ने किंभोवेदमधीयीयउततर्कं प्रार्थने भोजनंलभेय एवंलोट् प्रैषातिसर्गप्राप्तकालेषुकृत्याश्च प्रैषोविधिः अतिसर्गः कामचारानुज्ञा भवतायष्टव्यं भवान्यजतां चकारेणलोटोऽनुकर्षणं प्राप्तकालार्थे लिङ्चोर्ध्वमौहूर्तिके प्रैषादयोऽनुवर्तंते मुहूर्तादूर्ध्वंयजेत् यजतां यष्टव्यं स्मेलोट् पूर्वसूत्रस्यविषयेलिङः कृत्यानांचापवादः ऊर्ध्वंमुहूर्ताद्यजतांस्म अधीष्टेच स्मेउपपदेऽधीष्टेलोट्स्यात् त्वंस्म अध्यापय लिङ्यदि यच्छब्देउपपदेकालसमयवेलासुचलिङ् स्यात् कालःसमयोवेलावायद्भुंजीतभवान् अर्हेकृत्यतृचश्च चाल्लिङ् त्वंकन्यांवहेः शकिलिङ्च शक्तौलिङ्स्याच्चात्कृत्याः भारंत्वंवहेः माङिलुङ् माकार्षीः कथंमाभवतु माभविष्यतीति नायंमाङ् किंतुमाशब्दः धातुसंबंधेप्रत्ययाः धात्वर्थानांसंबंधेयत्रकालेप्रत्ययाउक्तास्ततोऽन्यत्रापिस्युः तिङंतवाच्यायाःक्रियायाः प्राधान्यात्तदनुरोधेनगुणभूतक्रियावाचिभ्यःप्रत्ययाः वसन्दर्शभूतेलट् अतीतवासकर्तृकर्तृकंदर्शनमर्थः सोमयाज्यस्यपुत्रोभविता सोमेनयक्ष्यमाणोयःपुत्रस्तत्कर्तृकंभवनं क्रियासमभिहारेलोट् लोटोहिस्वौवाचतध्वमोः पौनःपुन्येभृशार्थेचद्योत्येधातोर्लोट्स्यात् तस्याहिस्वौस्तस्तिङामपवादः तौचहिस्वौक्रमेणपरस्मैपदात्मनेपदसंज्ञौस्तः तिङ्संज्ञौच तध्वमोर्विषयेहिस्वौवास्तः पुरुषैकवचनसंज्ञेतुनानयोरतिदिश्येते हिस्वविधानसामर्थ्यात् तेनसकलपुरुषवचनविषयेपरस्मैपदिभ्योहिःकर्तरि आत्मनेपदिभ्यःस्वोभवकर्मकर्तृषु

समुच्चयेन्यतरस्यां अनेकक्रियासमुच्चयेद्योत्येप्रागुक्तंवास्यात् यथाविध्यनुप्रयोगःपूर्वस्मिन् आद्ये
लोट्विधाने लोट्प्र कृतिभूतएवधातुरनुप्रयोज्यः समुच्चयेसामान्यवचनस्य समुच्चयेलोट्विधौसा-
मान्यार्थस्यधातोरनुप्रयोगः अनुप्रयोगाद्यथाययंलडादयस्तिबादयश्च ततःसंख्याकालयोःपुरुषविशे
षार्थस्यचाभिव्यक्तिः क्रियासमभिहारेद्वेवाच्ये याहियाहीतियाति पुनःपुनरतिशयेनवायानंत्वंतस्यार्थः
एककर्तृकंवर्तमानंयानंयातीत्यस्य इतिशब्दस्त्वभेदान्वयेतात्पर्यग्राहयति एवंयातः यांति यासि याथः या
थ यातयातेतियूयंयाथ याहियाहीत्ययासीत् यास्यतिवा अधीष्वाधीष्वेत्यधीते ध्वंविषयेपक्षेऽधीध्वमधी
ध्वमितियूयमधीध्वे समुच्चयेतुसक्तून्पिबधानाः खादेत्यभ्यवहरति अन्नंभुंक्ष्व दाधिकमास्वादस्वेत्यभ्यव
हरते नध्वमोस्तुपिबतखादतेतिअभ्यवहरथ भुंङ्ध्वमास्वादध्वमित्यभ्यवहरध्वे पक्षेहिस्वौ अत्रसमुच्ची
यमानविशेषाणामनुप्रयोगार्थेनसामान्येनाभेदान्वयः पक्षेसक्तून्पिबति धानाःखादति अन्नंभुंक्ते दाधि
कमास्वादते एतेनपुरीमवस्कंदलुनीहिनंदनंमुषाणरत्नानिहरामरांगनाः विगृह्यचक्रेनमुचिद्विषाबली
यइत्थमस्वास्थ्यम हर्निशंदिव इतिव्याख्यातं अवस्कंदनलवनादिरूपाभूतानद्यतनपरोक्षाएककर्तृका अ
स्वास्थ्याक्रियेत्यर्थात् इहपुनःपुनरवस्कंदेत्यादिरर्थइतितुव्याख्यानंभ्रममूलकमेव द्वितीयसूत्रेक्रियासम
भिहारइत्यस्यानुवृत्तेः लोडंतस्यद्वित्वापत्तेश्च पुरीमवस्कंदेत्यादिमध्यमपुरुषैकवचनमित्यपिकेषांचित्
भ्रमएव पुरुषवचनसंज्ञेत्विहनेत्युक्तत्वात् इतिलकारार्थप्रक्रिया इतिश्रीभट्टोजीदीक्षितविरचितायांसि
द्धांतकौमुद्यांतिडंतं धातोः आतृतीयसमासेरधिकारोऽयं तत्रोपपदंसप्तमीस्थं कृदतिङ् वासरूपोऽस्त्रि-

यां परिभाषेयं अस्मिन्धात्वधिकारेऽसरूपोऽपवादः प्रत्ययउत्सर्गस्यबाधकोवास्यात्स्त्र्यधिकारोक्तंविना कृत्याः
अधिकारोऽयंण्वुलःप्राक् कर्तरिकृत् कृत्प्रत्ययःकर्त्तरिस्यात् इतिप्राप्ते तयोरेवकृत्यक्तखलर्थाः एतेभावक
र्मणोरेवस्युः तव्यत्तव्यानीयरः धातोरेतेप्रत्ययाःस्युः तकाररेफौस्वरार्थौ एधितव्यं एधनीयंत्वया भावेऔत्स
र्गिकमेकवचनं क्लीबत्वंच चेतव्यश्चयनीयोवाधर्मस्त्वया वसेस्तव्यत्कर्त्तरिणिच्च वसतीतिवास्तव्यः केलिमर
उपसंख्यानं पचेलिमामाषाःपक्तव्याःभिदेलिमाःसरलाःभेत्तव्याःकर्मणिप्रत्ययः वृत्तिकारकस्तुकर्मकर्त्तरिचा
यमिष्यतइत्याह तद्भाष्यविरुद्धं कृत्यचः उपसर्गस्थान्निमित्तात्परस्याचउत्तरस्यकृत्स्थस्यनस्यणत्वंस्यात्
प्रयाणीयं अचः किंप्रमग्नः निर्विण्णस्योपसंख्यानं अचःपरत्वाभावादप्राप्तेवचनंपरस्यणत्वं पूर्वस्यष्टुत्वंनि
र्विण्णः णेर्विभाषा उपसर्गस्थान्निमित्तात्परस्यण्यंताद्विहितोयः कृत्तत्स्थस्यनस्यणोवास्यात् प्रयापणीयं
प्रयापनीयं ।विहितविशेषणंकिं यकाव्यवधानेयथास्यात् प्रयाप्यमाणंपश्यण त्वेडुरउपसर्गत्वंनेत्युक्तं दुर्या
नंदुर्यापनं हलश्चेजुपधात् हलादेरिजुपधात्कृन्नस्याचःपरस्यणोवास्यात् प्रकोपणीयं प्रकोपनीयं हलःकिं प्रोहणी
यं इजुपधात्किं प्रवपणीयं इजादेःसनुमः सनुमश्चेद्भवतितर्हिइजादेर्हलंताद्विहितोयः कृत्तत्स्थस्यैव प्रेंख
णीयं इजादेःकिं मगिसर्पणे प्रमंगनीयं नुमूग्रहणमनुस्वारोपलक्षणं अट्कुप्वाङितिसूत्रेऽप्येवं तेनेहन प्रे
न्वनं इहतुस्यादेवप्रेंभणं वानिंसनिक्षनिंदां एषांनस्यणोवास्यात्कृतिपरे प्रणिंसितव्यं प्रनिंसितव्यं नभा
भूपूकमिगमिप्यायिवेपां एभ्यःकृन्नस्यणोन प्रभानीयं प्रभवनीयं पूञएवेहग्रहणमिष्यते पूङस्तुप्रवप
णीयः सोमः ण्यंतभादीनामुपसंख्यानं प्राभापनीयं रव्युशाञःशस्ययोर्वेत्युक्तं णत्वप्रकरणोपरित द्बोध्यम्

यत्वस्यासिद्धत्वेनशकारव्यवधानान्नणत्वं प्रख्यानीयं कृत्यल्युटोबहुलं स्नात्यनेनस्नानीयंचूर्णं दीयतेऽ
स्मैदानीयोविप्रः अचोयत् अजंताद्धातोर्यत्स्यात् चेयं जेयं अजग्रहणंशक्यमकर्तुं योगविभागोऽप्येवं तव्य
दादिषेवयतोऽपिरूपठत्वात् ईद्यतियतिपरे आतईत्स्यात् गुणः देयं ग्लेयं नकिशासिचत्तियातिजनिभ्योय
द्वाच्यः तक्यं शास्यं चत्यं यत्यं जन्यं जनेर्यद्विधिःस्वरार्थः ण्यतापिरूपसिद्धेः नचवृद्धिप्रसंगः जनिवध्योश्चेति
निषेधात् हनोवायद्वधश्चवक्तव्यः वध्यः पक्षेवक्ष्यमाणोण्यत् घात्यः पोरदुपधात् पवर्गांतादडुपधाद्यत्स्या
त् ण्यतोऽपवादः शप्यं लभ्यं नानुबंधकृतमसारूप्यं अतोनण्यत् तव्यदादयस्तुस्युरेव आङोयि आङ्पर
स्यलभेर्नुमस्याद्यादौप्रत्ययेविवक्षते नुमिकृते ऽदुपधत्वाभावाण्ण्यदेव आलंभ्योगौः उपात्प्रशंसायां उप
लंभ्यःसाधुः स्तुत्योकिं उपलब्धुंशक्यउपलभ्यः शकिसहोश्च शक्यं सह्यं गदमदचरयमश्चानुपसर्गे गद्यं
मद्यं चर्यं यम्यं चरेराङिचागुरौ आचर्योदेशःगंतव्यइत्यर्थः अगुरौकिं आचार्योगुरुः यमेर्नियमार्थं सोपस
र्गान्माभूदिति प्रयाम्यं निपूर्वात्स्यादेव तेनतत्रनभवेद्धिनियम्यमितिवार्तिकप्रयोगात् एतेनानियम्यस्यना
युक्तिः त्वयानियम्यानतुदिव्यचक्षषेत्यादिव्याख्यातं नियमेसाधुरितिवा अवद्यपण्यवर्यागर्ह्यपणित
व्यानिरोधेषु वदेर्नञिउपपदेवदःसुपीतियत्क्यपोःप्राप्तयोर्यदेव सोऽपिगर्ह्यायामेवेत्युभयार्थंनिपातनं
अवद्यंपापं गर्ह्येकिं अनुद्यंगुरुनाम तद्धिनगर्ह्यंवचनानर्हंच आत्मनामगुरोर्नामनामातिकृपणस्यच
श्रेयस्कामोनगृण्हीयात्ज्येष्ठापत्यकलत्रयोरितिस्मृतेः पण्यागौः व्यवहर्तव्येत्यर्थः पाण्यमन्यत् स्तुत्यर्ह
मित्यर्थः अनिरोधोऽप्रतिबंधःतस्मिन्विषयेवृङोयत् शतेनवर्या कन्या वृत्यान्यावृत्यंकरणं वहंत्यतेनेति

वत्स्यं शकटं करणं किं वात्स्यं वोढव्यं अर्यः स्वामिवैश्ययोः ऋगतौ अस्माद्यत् ण्यतोऽपवादः अर्यः स्वामी वैश्यो
वा अनयोः किं आर्यो ब्राह्मणः प्राप्तव्य इत्यर्थः उपसर्या काल्या प्रजने गर्भग्रहणे प्राप्तकाला चेदित्यर्थः उपसर्या
गौः गर्भाधानार्थं वृषभेणोपगंतुं योग्येत्यर्थः प्रजने काल्येति किं उपसार्या काशी प्राप्तव्येत्यर्थः अजर्यं संगतं
नञ्पूर्वाज्जीर्यतेः कर्त्तरि यत् संगतं चेद्विशेष्यं नजीर्यतीत्यजर्यं तेन संगतमार्येण रामाजर्यं कुरु द्रुतमिति भ
ट्टिः मृगैरजर्यं जरसोपदिष्टमदेहबंधाय पुनर्बबंधेत्यत्र संगतमिति विशेष्यमध्याहार्यं संगतं किं अजरि
ता कंबलः भावे तु संगतकर्तृकेऽपि ण्यदेव अजार्यं संगतेन वदः सुपि क्यप् च उत्तरसूत्रादिह भाव इत्यपकृ
ष्यते वदेर्भावे क्यप् स्याच्चाद्यत् अनुपसर्गे सुप्युपपदे ब्रह्मोद्यं ब्रह्मवद्यं ब्रह्मवेदः तस्य वदनमित्यर्थः कर्म
णि प्रत्ययावित्येके उपसर्गे तु ण्यदेव अनुवाद्यं अपवाद्यं भुवो भावे क्यप् स्यात् ब्रह्मणो भावो ब्रह्मभूयं सु
पीत्येव भव्यं अनुपसर्ग इत्येव प्रभव्यं हनस्त च अनुपसर्गे सुप्युपपदे हंतेर्भावे क्यप् स्यात् तकारश्चांतादेशः
ब्रह्मणो हननं ब्रह्महत्या स्त्रीत्वं लोकात् एतिस्तुशास्वृदृजुषः क्यप् एभ्यः क्यप् स्यात् ह्रस्वस्य पिति कृति तु
क् इत्यः स्तुत्यः शास इदङ्हलोः शिष्यः वृ इति वृञो ग्रहणं न वृङः वृङः स्तु वार्या ऋत्विजः आदृत्यः जुष्यः पुनः क्यबु
क्तिः परस्यापि ण्यतो बाधनार्था अवश्यस्तुत्यः शंसिदुहिगुहिभ्यो वेति काशिका शस्यं शंस्यं दुह्यं दोह्यं गुह्यं
गोह्यं प्रशास्यस्य श्रः ईडवंदवृशंसदुहां ण्यत इति सूत्रद्वयबलाच्छंसेः सिद्धं इतरयोस्तु मूलं मृग्यं आङ्पूर्वाद
ञ्जेः संज्ञायामुपसंख्यानं अंजूव्यक्तिम्रक्षणादिषु बाहुलकात्करणे क्यप् अनिदितामिति नलोपः आ
ज्यं ऋदुपधाच्चाक्लृपिचृतेः वृत् वृत्यं वृध् वृध्यं क्लृपिचृत्योस्तु कल्प्यं चर्त्यं तपरकरणं किं कृत् कीर्त्यं अनि

त्यण्यंताश्चुरादयइति णिजभावेण्यत् णिजंतात्तुयदेव ईचरवनः चात्क्यप् आङ्कुणः खेयं इच्चेतिन्हस्वःसुपठः
भृञोऽसंज्ञायां भृत्याःकर्मकराःभर्तव्याइत्यर्थः क्रियाशब्दोऽयंनतुसंज्ञा समश्चबहुलं संभृत्याः संभार्याः असं
ज्ञायामेवविकल्पार्थमिदंवार्त्तिकं असंज्ञायांकिं भार्यानामक्षत्रियाः अथकथंभार्यावधूरिति इहापिसंज्ञायांस
मजेतिक्यपाभाव्यं संज्ञापर्युदासस्तुपुंसिचरितार्थःसत्यं बिभर्त्तेर्भृइतिदीर्घोता ऌकादेर्वाण्यत् क्यप्तुभ
रतेरेवतदनुबंधग्रहणेइतिपरिभाषया मृजेर्विभाषा मृजेःक्यब्वास्यात् पक्षेण्यत् मृज्यः चजोःकुघिण्य
तोः चस्यजस्यचकुत्वंस्यात्घितिण्यतिचप्रत्ययेपरे मृजेर्वृद्धिः मार्ग्यः न्यंक्कादीनांच कुत्वंस्यात्न्यंकुःना
यंचेरित्युप्रत्ययः राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः एतेससप्त क्यबंतानिपात्यंते राज्ञासो
तव्योऽभिषवद्वारानिष्पादयितव्यः यद्वालतात्मकः सोमोराजासस्सूयतेकंडयतेऽत्रेत्यधिकरणेक्यप् निपा
तनाद्दीर्घः राजसूयः राजसूयं अर्धर्चादिः सरत्याकाशेसूर्यः कर्तरिक्यप् निपातनादुत्वं यद्वाषूप्रेरणेतुदादिः
सुवतिकर्मणिलोकंप्रेरयति क्यपोरुट् मृषोपपदाद्वदेः कर्मणिनित्यंक्यप् मृषोद्यंविशेष्यनिघ्नोऽयं उच्छ्रायसौं
दर्ययुगुणामृषोद्याः रोचतेरुच्यः गुपेरादेःकत्वंचसंज्ञायां सुवर्णरजतभिन्नंधनंकुप्यं कृष्टेस्वयमेवपच्यंतेकृष्ट
पच्याः कर्मकर्त्तरि शुद्धेतुकर्मणि कृष्टपाक्याः नव्यथते अव्यथ्यः भिद्योद्ध्यौनदे भिदेरुज्झेश्चक्यप् उज्झेर्धत्वं
च भिनत्तिकूलंभिद्यः उज्झत्युदकमुद्ध्यः नदेकिं भेत्ता उज्झिता पुष्यसिद्ध्यौनक्षत्रे अधिकरणेक्यप्निपात्यते
पुष्यंत्यस्मिन्नर्थाःपुष्यः सिध्यंत्यस्मिन्सिध्यः विपूयविनीयजित्यामुंजकल्कहलिषु पूञ्नीञ्जिभ्यःक्य
प् विपूयोमुंजः रज्वादिकरणायशोधयितव्यइत्यर्थः विनीयःकल्कः पिष्टऔषधविशेषइत्यर्थः पापमितिवा

जित्योहलिः बलेनकृष्टव्यइत्यर्थः कृष्टसमीकरणार्थंस्थूलकाष्ठं अन्यत्तु विपव्यं विनेयं जेयं प्रत्यपिभ्यांग्रहे श्छंद
सीतिवक्तव्यंप्रतिगृह्यं अपिगृह्यं लोकेतुप्रतिग्राह्यं पदास्वैरि बाह्यापक्ष्येषुच अवगृह्यं प्रगृह्यंपदं अस्वैरी
परतंत्रः गृह्यकाः शुकाः पंजरादिबंधेनपरतंत्रीकृताइत्यर्थः बाह्यायां ग्रामगृह्यासेना ग्रामाद्बहिर्भूतेत्यर्थः
स्त्रीनिर्देशात्पुन्नपुंसकयोर्न पक्षेभवः पक्ष्यः दिगादित्वाद्यत् आर्यैर्गृह्यतेआर्यगृह्यः तत्पक्षाश्रितइत्यर्थः वि
भाषाकृवृषोः क्यप्स्यात् कृत्यं वृष्यं पक्षे ऋहलोर्ण्यत् ऋवर्णांताद्धलंताच्च धातोर्ण्यत्स्यात् कार्यं वर्ष्यं युग्यं
चपत्रे पत्रंवाहनं युग्योगौः अत्रक्यप् कुत्वंचनिपात्यते अमावस्यदन्यतरस्यां अमोपपदाद्वसेरधिकरणेण्य
त् वृद्धौसत्यांपाक्षिकोन्हस्वश्चनिपात्यते अमासहवसतोऽस्यांचंद्रार्कौअमावस्या अमावास्या ऋहलोर्ण्यत्
चजोरितिकुत्वं पाक्यं पाणौसृजेर्ण्यद्वाच्यः ऋदुपधलक्षणस्यक्यपोऽपवादः पाणिभ्यांसृज्यतेपाणिसर्ग्यार
ज्जुः समवपूर्वाच्च समवसर्ग्या नक्वादेः क्वादेर्धातोश्चजोः कुत्वंन गर्ज्यं वार्त्तिककारस्तुचजोरितिसूत्रेनिष्ठाया
मनिटइतिपूरयित्वानक्वादेरित्यादिप्रत्याचख्यौ तेनअर्जितर्जिप्रभृतीनांनकुत्वंनिष्ठायांसेट्वात् ग्रुचुग्लुचुप्र
भृतीनांतुक्वादित्वेऽपिकुत्वंस्यादेव सूत्रमतेतुयद्यपिविपरीतंप्राप्तंतथापियथोत्तरंमुनीनांप्रामाण्यं अजि
व्रज्योश्च नकुत्वं समाजः परिव्राजः भुजन्युब्जौपाण्युपतापयोः एतयोरेतौनिपातौ भुज्यतेऽनेनेतिभुजः पा
णिः हलश्चेतिघञ् न्युब्जंत्यस्मिन्निन्नितिन्युब्जः उपतापोरोगः पाण्युपतापयोः किंभोगः समुद्गः प्रयाजानुयाजौ
यज्ञांगे एतौनिपातौयज्ञांगे पंचप्रयाजाः त्रयोऽनुयाजाः यज्ञांगेकिं प्रयागः अनुयागः वंचेर्गतौ कुत्वंन वंच्यंग
तौकिं वंक्यंकाष्ठं कुटिलीकृतमित्यर्थः ओकउचःके उचेर्गुणकुत्वेनिपात्येतेकेपरे ओकः शकुंतवृषलो इगु

पधलक्षणःकुः घञासिद्धेअंतोदात्तार्थमिदं ण्यआवश्यके कुत्वंन अवश्यपाच्यं यजयाचरुचप्रवचर्चश्च
ण्येकुत्वंन याज्यं रोच्यं प्रवाच्यं ग्रंथविशेषः ऋच्च् अर्च्यं ऋदुपधत्वेऽपत एवज्ञापकाण्ण्यत् त्यजेश्च त्याज्यम्
त्यजिपूज्योश्चेतिकाशिका तत्रपूजेर्ग्रहणंचिंत्यंभाष्या नुक्तत्वात् ण्यत्प्रकरणेत्यजेरुपसंख्यानमितिहिभाष्यं
वचोऽशब्दसंज्ञायां वाच्यं शब्दाख्यायांतुवाक्यं प्रयोज्यनियोज्यौशक्यार्थे प्रयोक्तुंशक्यः प्रयोज्योनियो
ज्योभृत्यः भोज्यंभक्ष्ये भोग्यमन्यत् ण्यत्प्रकरणे लपिदभिभ्यांचेतिवक्तव्यं लाप्यं दृभिर्धातुषपठितोऽपि
वार्तिकबलात्स्वीकार्यः दाभ्यः ओरावश्यके उवर्णांताद्धातोर्ण्यत्स्यादावश्यंभावेद्योत्ये लाव्यं पाव्यं आसुयु
वपिरपिलपित्रपिचमश्च सुञ् आसाव्यं युमिश्रणे याव्यं वाप्यं राप्यं लाप्यं त्राप्यं चाम्यं आनाय्योऽनित्ये आ
ङ्पूर्वान्नयतेर्ण्यदायादेशश्चनिपात्यते दक्षिणाग्निविशेषएवेदं सहिगार्हपत्यादानीयतेअनित्यश्च सततम
प्रज्वलनात् आनेयोऽन्यः घटादिः वैश्यकुलादेरानीतोदक्षिणाग्निश्च प्रणाय्योऽसंमतो सम्मतिःप्रीतिविषयी-
भवनंकर्मव्यापारः तथाभोगेष्वादरोऽपिसंमतिः प्रणाय्यश्चोरः प्रीत्यनर्हइत्यर्थः प्रणाय्योंऽतेवासी विरक्तइत्य
र्थःप्रणेयोऽन्यः पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु मीयतेऽनेनपाय्यंमानंण्यत् धा
त्वादेःपत्वंच आतोयुगितियुक् सम्यङ्नीयतेहोमार्थमग्निंप्रतीतिसान्नाय्यंहविर्विशेषःण्यदायादेशः समोदी
र्घश्चनिपात्यते निचीयतेऽस्मिन् धान्यादिनिकाय्योनिवासः अधिकरणेण्यत् आयूधात्वादेःकत्वंचनिपात्यते
धीयतेऽनयासमिदितिधाय्याऋक् क्रतौकुंडपाय्यसंचाय्यौ कुंडेनपीयतेऽस्मिन्सोमःकुंडपाय्यःक्रतुः संचीय
तेसौसंचाय्यः अग्नौपरिचाय्योपचाय्यसमूह्याः अग्निधारणार्थेस्थलविशेषएतेसाधवःअन्यत्रतुपरिचेयं

उपचेयं संवाह्यं चित्याग्निचित्येच चीयतेऽसौ चित्योऽग्निः अग्नेश्चयनमग्निचित्या प्रैषातिसर्गप्राप्तकालेषु कृत्या
श्च त्वयागंतव्यंगमनीयंगम्यं इहलोटाबाधामाभूदितिपुनःकृत्यविधिः स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्ने-
तिज्ञापयति तेनक्तल्युट्तुमुन्खलर्थेषु नेतिसिद्धं अर्हेकृत्यतृचश्च स्तोतुमर्हस्तुत्यःस्तुतिकर्मस्तोता स्तुतिक
र्ता लिङ्बाधामाभूदिति कृत्यतृचोर्विधिः भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्यावा एते कृत्यं
ताः कर्तरिवानिपात्यंते पक्षेतयोरेवेति सकर्मकात्कर्मणि अकर्मकात्तुभावेज्ञेयाः भवतीतिभव्यः भव्यमनेनवा गा
यतीतिगेयः साम्नामयं सामाने नचेत्यादि शकिलिङ्च शक्तौलिङ्स्यात् चात्कृत्याः वोढुंशक्योवोढव्यः वहनी
योवाह्यः लिङ्बाधामाभूदितिकृत्योक्तिः लाघवादनेनैवज्ञापनसंभवे प्रैषादिसूत्रे कृत्याश्चेतिकृत्यजं अर्हेकृ
त्यतृचोर्ग्रहणंच इतिकृत्यप्रक्रिया ण्वुल्तृचौ धातोरेतेस्तः कर्तरिकृदितिकर्त्रर्थे युवोरनाकौ कारकः कर्ता
वोढुमर्होवोढा कारिका कर्त्री गाङ्कुटेतिङित्वं कुटिता अञ्णिदित्युक्तेर्नेङित्वं कोटकः विजइट् विजिता हन
स्तोऽचिण्णलोः घातकः आतोयुक् दायकः नोदात्तोपदेशस्येतिनवृद्धिः शमकोदमकः अनिटस्तु नियामकः
जनिवध्योश्च जनकः वधहिंसायांवधकः रधिजभोरचि रंधकः जंभकः नेट्यलिटिरधेः रधिता रद्धा मस्जि
नशोरितिनुम् मंक्ता नंष्टा नशिता रभेरशब्लिटोः रंभकः रब्धा लभेश्च लंभकः लब्धा तीषसहेतिवेट् एषिता ए
ष्टा सहिता सोढा दरिद्रातेरालोपः दरिद्रिता ण्वुलिन दरिद्रायकः कृत्यल्युटइत्येवसूत्रमस्तु यत्रविहितास्ततो
ऽन्यत्रापिस्युरित्यर्थात् एवंचबहुलग्रहणंयोगविभागेनकृन्मात्रस्यार्थव्यभिचारार्थं पादाभ्यांह्रियतेपादहा
रकः कर्मणिण्वुल् क्रमेः कर्तर्यात्मनेपदविषयात्कृतइण्निषेधोवाच्यः प्रक्रंता कर्तरीतिकिं प्रक्रमितव्यम्

आत्मनेपदेतिकिं संक्रमिता अनन्यभावेविषयशब्दः तेनानुपसर्गाद्वेतिविकल्पार्हस्यननिषेधः क्रमितातदर्ह
त्वमेवतद्विषयत्वंतेनक्रंतेत्यपीतिकेचित् गमेरिडित्यत्रपरस्मैपदग्रहणंतङानयोरभावंलक्षयति संजिगमि
षिता एवंनवृद्भ्यश्चतुर्भ्यः विवृत्सिता यङंताण्णवुल् अल्लोपस्यस्थानिवत्वान्नवृद्धिः पापचकः यङ्लुगंतात्तुपा
पाचकः नंदिग्रहिपचादिभ्योल्युणिन्यचः नंद्यादेर्ल्युः ग्रहादेर्णिनिः पचादेरच्स्यात् नंदयतीतिनंदनः जन
मर्दयतीतिजनार्दनः मधुसूदनः विशेषेणभीषयतीतिविभीषणः लवणः नंद्यादिगणेनिपातनान्नणत्वं ग्रा
ही स्थायी मंत्री विशयी वृद्ध्यभावोनिपातनात् विषर्या इहषत्वमपि परिभावी परिभवी पाक्षिकोवृद्ध्यभावो
निपात्यते पचादिराकृतिगणः शिवशमरिष्टस्यकरे कर्मणिघटोऽठजितिसूत्रद्वयेन करोतेर्घटेश्चाच्प्रयो
गात् अच्प्रत्ययेपरेयङ्लुग्विधानाच्च केषांचित्पाठस्त्वनुबंधासंजनार्थः केषांचित्स्वपंचार्थः केषांचिद्बाधकबा
धनार्थः पचतीतिपचः नदट् चोरट् देवट् इत्यादयष्टितः नदी चोरी देवी दीव्यतेरिगुपधेतिकः प्राप्तः जारभ
राश्वपचा अनयोःकर्मण्यण्प्राप्तः न्यंक्वादिषुपाठात् श्वपाकोऽपि यङोचिचेतिलुक् नधातुलोपइतिगुण वृ
द्धिनिषेधः चेक्रियः नेन्यः लोलुवः पोपुवः मरीमृजः चरिचलिपति वदीनांवाद्वित्वमच्याक् चाभ्यासस्येतिवक्त
व्यं आगमस्यदीर्घत्वसामर्थ्यादभ्यासन्ह्रस्वोहलादिशेषश्चन चराचरः चलाचलः पतापतः वदावदः हंतेर्घत्वंच
घत्वमभ्यासस्यउत्तरस्यतु अभ्यासाच्चेतिकुत्वं घनाघनः पाटेर्णिलुक्चोक्चदीर्घश्चाभ्यासस्य पाटूपटः पक्षे
चरः चलः पतः वदः हनः पाटः रात्रेः कृतीतिवाममुम् रात्रिंचरोरात्रिचरः इगुपधज्ञाप्रीकिरःकः एभ्यःकःस्यात्
क्षिपः लिखः बुधः कृशः ज्ञः प्रीणातीतिप्रियः किरतीतिकिरः वासरूपविधिनाण्वुल्तृचावपिक्षेपकः क्षेप्ता आ

तश्चोपसर्गे कः स्यात् श्याव्यधेतिणस्यापवादः सुग्लः प्रज्ञः पाघ्राध्माधेट्दृशः शः पिबतीतिपिबः जिघ्रः धमः ध
यः धयाकन्याधेटष्टित्वात्स्तनंधयीतिरवशीवडीपूमासः रवशोऽन्यत्रनेष्यतइतिहरदत्तः पश्यतीतिपश्यः घ्रः
संज्ञायांन व्याघ्रादिभिरितिनिर्देशात् अनुपसर्गाल्लिंपविंदधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च लिंपः
विंदः धारयः पारयः वेदयः उदेजयः चेतयः सातिः सुखार्थः सौत्रो हेतुमण्यंतः सातयः शासरूपन्यायेनक्विं
बपि सात्परमात्मा सात्वंतोभक्ताः षह मर्षणेचुरादिः हेतुमण्ण्यंतोवा साहयः अनुपसर्गात्किं प्रलिंपः नौलिं
पेर्वाच्यः निलिंपादेवाः गवादिषुविंदेः संज्ञायां गोविंदः अरविंदं ददातिदधात्योर्विभाषा शः स्यात् ददः दधः
पक्षेवक्ष्यमाणोणः अनुपसर्गादित्येव प्रदः प्रधः ज्वलितिकसंतेभ्योणः इतिशब्दआद्यर्थः ज्वलादिभ्यः कसं
तेभ्योणः स्याद्वापक्षेऽच् ज्वालः ज्वलः चालः चलः अनुपसर्गादित्येव उज्ज्वलः तनेरुपसंख्यानं इहानुपस-
र्गादितिविभाषेतिचनसंबध्यते अवतनोतीत्यवतानः श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वस
श्च श्यैङ्प्रभृतिभ्योऽवस्यतेश्चनित्यंणः स्यात् श्यैङोऽवस्यतेश्चादंतत्वात्सिद्धेपृथग्ग्रहणमुपसर्गेकंबाधितुं
अवश्यायः आत् दायः धायः व्याधः स्रुगतौ आङ्पूर्वः संपूर्वश्च आस्रावः संस्रावः अत्यायः अवसायः अव-
हारः लेहः श्लेषः श्वासः दुन्योरनुपसर्गे णः स्यात् दुनोतीतिदावः नीसाहचर्यात्सानुबंधकात्दुनोतेरेवणः
दवतेस्तुपचाद्यच् दवः नयतीतिनायः उपसर्गेतु प्रदवः प्रणयः विभाषाग्रहः णोवापक्षेऽच् व्यवस्थितविभाषे
यं तेनजलेचरेग्राहः ज्योतिषिग्रहः भवतेश्चेतिकाशिका भवोदेवः संसारश्च भावाः पदार्थाः भाव्यमनेतुप्रा
प्यर्थाच्चुरादिण्ण्यंतादच् भावः गेहेकः गेहेकर्तरिग्रहेः कः स्यात् गृह्णातिधान्यादिकमितिगृहं तात्स्थ्याद्गृहाः

दाराः शिल्पिनि ष्वुन् क्रियाकौशलं शिल्पं तद्वति कर्तरि ष्वुन् स्यात् नृतिखनिरंजिभ्य एव नर्तकः नर्तकी खन
कः खनकी असिअकेनेच रंजेर्नलोपो वाच्यः रजकः रजकी भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् रंजेस्तु क्वुन्
शिल्पिसंज्ञयोरिति क्वुन् टाप् रजिका पुंयोगे तु रजकी गस्थकन् गायतेस्थकन् स्यात् शिल्पिनि कर्तरि गा
थकः ण्युट् च गायनः टित्वान्ङीप् गायनी हश्च व्रीहिकालयोः हाकोहाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि जहा
त्युदकमिति हायनो व्रीहिः जहाति भावानिति हायनो वर्षं जिहीते प्राप्नोतीति वा प्रुसृल्वः समभिहारे वुन्
समभिहारग्रहणेन साधुकारित्वं लक्ष्यते प्रवकः लवकः सरकः आशिषि च आशीर्विषयार्थवृत्तेर्धातोर्वुन्
स्यात् कर्तरि जीवतात् जीवकः नंदतात् नंदकः आशीः प्रयोक्तृधर्मः आशासितुः पित्रादेरियमुक्तिः कर्म-
ण्यण् कर्मण्युपपदे धातोरण्प्रत्ययः स्यात् उपपदसमासः कुंभं करोतीति कुंभकारः आदित्यं पश्यतीत्यादाव
नभिधानान्न शीलिकामिभक्ष्याचरिभ्यो णः अणोऽपवादार्थं वार्तिकं मांसशीला मांसकामा मांसभक्षा-
कल्याणाचारा ईक्षिक्षमिभ्यां च सुखप्रतीक्षा बहुक्षमा कथं तर्हि गंगाधरभूधरादयः कर्मणः शेषत्वविव-
क्षायां भविष्यति ह्वावामश्च कापवादः स्वर्गह्वायः तंतुवायः धान्यमायः आतोऽनुपसर्गे कः आदंताद्धातो
रनुपसर्गात्कर्मण्युपपदे कः स्यान्न त्वण् गोदः पार्ष्णित्रं अनुपसर्गे किं गोसंदायः कविधौ सर्वत्र संप्रसारणिभ्यो
डः ब्रह्मजिनाति ब्रह्मज्यः सर्वत्रग्रहणादातश्चोपसर्गे आह्वः प्रह्वः सुपि स्थः सुपि इति योगो विभज्यते सुपि
उपपदे आदंतात्कः स्यात् द्वाभ्यां पिबतीति द्विपः समस्थः विषमस्थः ततः स्थः सुपि तिष्ठतेः कः स्यात् आरं
भसामर्थ्याद्भावे आखूनामुत्थानमाखूत्थः प्रष्ठोऽग्रगामिनि प्रतिष्ठत इति प्रष्ठो गौः अग्रतो गच्छतीत्यर्थः

अग्रेकिं प्रस्थः अंबांबगोभूमिसव्यापद्वित्रिकुशेकुशंकंगुमुंजिपुंजिपरमेबर्हिर्दिव्यग्निभ्यःस्थः स्थइतिक
प्रत्ययांतस्यानुकरणंषष्ठ्यर्थेप्रथमा एभ्यःस्थस्यसस्यषःस्यात् अंबष्ठः द्विष्ठःत्रिष्ठः इतऊर्ध्वंकर्मणिइति सुपि
इतिद्वयमनुवर्तते तत्राकर्मकेष्वपीत्यस्यसंबंधः तुंदशोकयोःपरिमृजापनुदोः तुंदशोकयोःकर्मणोरुपपद
योःआभ्यांकःस्यात् आलस्यसुखाहरणयोरितिवक्तव्यं तुंदंपरिमार्ष्टिइतितुंदपरिमृजोऽलसः शोकापनुदः
सुखस्याहर्त्ता अलसादन्यत्रतुंदपरिमार्जएव यस्तुसंसारासारत्वोपदेशेनशोकमपनुदतिसशोकापनोदः
कप्रकरणेमूलविभुजादिभ्यउपसंख्यानं मूलानिविभुजतिमूलविभुजोरथः आकृतिगणोऽयं महीध्रः कु
ध्रः गिलतीतिगिलः प्रदोज्ञः दारूपाज्ज्ञानातेश्चप्रोपसृष्टात्कर्मण्युपपदे कःस्यादणोऽपवादः सर्वप्रदः पथिप्रज्ञः
अनुपसर्गादित्युक्तेः प्रादन्यस्मिन्सतिनकः गोसंप्रदायः समिख्यः गोसंख्यः गापोष्टक् अनुपसर्गाभ्यामाभ्यां
टक्स्यात्कर्मण्युपपदे सामगः सामगी उपसर्गेतुसामसंगायः पिबतेः सुरासीध्वोरितिवाच्यं सुरापीसीधुपी
अन्यत्रक्षीरपाब्राह्मणी सुरांपातिरक्षतीतिसुरापा हरतेरनुद्यमनेऽच् अंशहरः अनुद्यमनेकिं भारहारः श
क्तिलांगलांकुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानं शक्तिग्रहः लांगलग्रहः सूत्रेचधार्येऽर्थेसूत्रग्र
हः यस्तुसूत्रंकेवलमुपादत्तेनतुधारयतितत्राणेव सूत्रग्रहः वयसिच उद्यमनार्थंसूत्रं कवचहरः कुमारः
आङिताच्छील्ये पुष्पाण्याहरतितच्छीलःपुष्पाहरः ताच्छील्येकिं भारहारःअर्हः अर्हतेरच्स्यात्कर्मण्युप
पदेअणोऽपवादः पूजार्हाब्राह्मणी स्तंबकर्णयोरमिजपोः हस्तिसूचकयोरितिवक्तव्यं स्तंबेरमतेस्तंबे
रमोहस्ती ततुरुषेकृतीतिहलदंतादितिवाडेरलुक् कर्णेजः सूचकः शमिधातोःसंज्ञायां शंभवः शंवदः

पुनर्धातुग्रहणंबाधकविषयेऽपिप्रवृत्त्यर्थं कृञोहेतुत्वादिषुटोमाभूत् शंकरानामपरिव्राजिका तच्छीला अधि करणेशेतेः खेशेते खशयः पार्श्वादिषूपसंख्यानं पार्श्वाभ्यांशेतेपार्श्वशयः पृष्ठशयः उदरशयः उत्तानादिषु क र्तृषु उत्तानःशेतेउत्तानशयः अवमूर्धशयः अवनतोमूर्द्धायस्यसअवमूर्धा अधोमुखःशेतेइत्यर्थः गिरौडश्छं दसि गिरौशेतेगिरिशः कथंतर्हिगिरिशमुपचचार प्रत्यहंसासुकेशीति गिरिरस्त्यास्तीतिविग्रहेलोमादि त्वाच्छः चरेष्टः अधिकरणेउपपदे कुरुचरः कुरुचरी भिक्षासेनादायेषुच भिक्षांचरतीतिभिक्षाचरः से नाचरः आदायेतिल्यबंतं आदायचरः कथंप्रेक्ष्यस्थितांसहचरीमिति पचादिषुचरडितिपाठात् पुरोऽग्र तोऽग्रेषुसर्त्तेः पुरःसरः अग्रतःसरः अग्रमग्रेणाग्रेवासरतिअग्रेसरः सूत्रेअग्रेइतिएदंतत्वंचनिपात्यते क थंतर्हियूथंतदग्रसरगर्वितकृष्णसारमितिबाहुलकादितिहरदत्तः पूर्वेकर्त्तरि कर्तृवाचिनिपूर्वशब्देउप पदेसरतेष्टःस्यात् पूर्वःसरतिपूर्वसरः कर्तरिकिं पूर्वंदेशंसरतीतिपूर्वसारः कृञोहेतुताच्छील्यानुलोम्ये षु एषुद्योत्येषुकरोतेष्टःस्यात् अतःकृकमीतिसः यशस्करीविद्या श्राद्धकरः वचनकरः दिवाविभानिशाप्र भाभास्कारांतानंतादिबहुनांदीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजंघाबाह्वहर्यत्तद्धनुः रुःष्षु एषुकृञष्टःस्यादहेत्वादावपि दिवाकरः विभाकरः निशाकरः कस्कादित्वात्सः भास्करः बहुकरः बहुश ब्दस्यवैपुल्यार्थसंख्यापेक्षयापृथग्ग्रहणं लिपिलिबिशब्दौपर्यायौ संख्या एककरः द्विकरः कस्कादित्वादहस्क रः नित्यंसमासेऽनुत्तरपदस्थस्येतिषत्वं धनुष्करः अरुष्करः किंयत्तद्बहुषुकृञोऽज्विधानमितिवार्त्तिकं किं करा यत्करा तत्करा हेत्वादौटंबाधित्वापरत्वादच् पुंयोगेङीष् किंकरी कर्मणिभृतौ कर्मशब्देउपपदेकरो

नेष्टः स्यात् कर्मकरो भृतकः कर्मकारोऽन्यः नशब्दश्लोककलहगाथावैरचाटुसूत्रमंत्रपदेषु एषु हृञ्प्रत्योन हेत्वादिषुप्राप्तः प्रतिषिध्यते शब्दकारइत्यादि स्तंबशकृतोरिन् व्रीहिवत्सयोरितिवक्तव्यं स्तंबकरिः व्रीहिः शकृत्करिर्वत्सः व्रीहिवत्सयोः किं स्तंबकारः शकृत्कारः हरतेर्दृतिनाथयोः पशौ दृतिनाथयोरुपपदयोर्हृञ इन् स्यात् पशौकर्त्तरि दृतिंहरति दृतिहरिः नाथं नासारज्जुं हरतीति नाथहरिः पशौ किं दृतिहारः नाथहारः फलेग्रहिरात्मंभरिश्च फलानि गृण्हाति फलेग्रहिः उपपदस्यैदंतत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते आत्मानं बिभर्तीत्यात्मंभरिः आत्मनोमुमागमः भृञ इन् चात् कुक्षिंभरिः चांद्रास्त्वात्मोभरकुक्षिष्विति पेठुः ज्योत्स्नाकरंभमुदरंभरयश्च कोशइतिमुरारिः एजेः खश् ण्यंतादेजेः खश्स्यात् अरुर्द्विषदजंतस्य मुम् अरुषो द्विषतोऽजंतस्य च मुमागमः स्यात् खिदंते उत्तरपदे नत्वव्ययस्य शिलाच्छबादि जनमेजयतीतिजनमेजयः वातशुनीतिलशर्द्धेषजधेट्तुदजहातिभ्यः खश् उपसंख्यानं वातमजामृगाः खित्यनव्ययस्य खिदंते परे पूर्वपदस्य ह्रस्वः स्यात् ततोमुम् शुनिंधयः तिलंतुदः शर्द्धंजहामाषाः शर्द्धोपानशब्दः तं जहतीतिविग्रहः जहातिरंतर्भावितण्यर्थः नासिकास्तनयोर्ध्माधेटोः स्तने धेटइतिवक्तव्यं नासिकायां ध्मश्चेति वाच्यम् स्तनंधयतिइतिस्तनंधयः धेटष्टित्वात्स्तनंधयी नासिकंधमः नासिकंधयः नाडीमुष्ट्योश्च एतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश्स्यात् यथासंख्यं नेष्यते नाडिंधमः नाडिंधयः मुष्टिंधमः मुष्टिंधयः घटीखाखरीषूपसंख्यानं घटिंधमः घटिंधयः इत्यादि खारीपरिमाणविशेषः खरीगर्द्दभी उदिकूलेरुजिवहोः उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मणि उपपदे खश्स्यात् कूलमुद्रुजति कूलमुद्रुजः कूलमुद्वहः व

हाभ्रेलिहः वहः स्कंधः तंलेढीतिवहंलिहोगौः अदादित्वाच्छब्लुक् खशोङित्वान्नगुणः अभ्रंलिहोवायुः
परिमाणेपचः प्रस्थंपचास्थाली खारिंपचः कटाहः मितनखेच मितंपचाब्राह्मणीनखंपचायवागूः प
विरन्नतापवाची विध्वरुषोस्तुदः विधुंतुदः मुमिद्कृतेसंयोगांतस्यलोपः अरुंतुदः असूर्यललाटयो
र्दृशितपोः असूर्यमित्यसमर्थसमासः दृशिनानयःसंबंधात् सूर्यंनपश्यंत्यसूर्यंपश्याराजदाराः ल
लाटंतपः सूर्यः उग्रंपश्येरंमदपाणिंधमाश्च एतेनित्यंनेउग्रमितिक्रियाविशेषणंतस्मिन्नुपपदेदृशेः
खशस्यात् उग्रंपश्यतीत्युग्रंपश्यः इराउदकंतेनमाद्यतिदीप्यतेअबिंधनत्वादितिइरंमदोमेघज्योतिः इ
हनिपातनात्श्यन्न पाणयोध्मायंतेऽस्मिन्नितिपाणिंधमोऽध्वाअंधकाराद्यावृतइत्यर्थः यत्रहिसर्पाद्यप
नोदनायपाणयःशब्दयंते प्रियवशेवदःखच् प्रियंवदः वशंवदः गमेःसुपिवाच्यः असंज्ञायामिदंमितं
गमोहस्ती विहायसोविहच खच्चडिद्वाच्यः विहंगमः विहंगः भुजंगमः भुजंगः द्विषत्परयोस्तापेः ख
च्स्यात् खचिन्हस्वः खच्परेणौउपधायान्हस्वःस्यात् द्विषंतंपरंवातापयतिद्विषंतपः परंतपः घटघ
टीग्रहणाल्लिंगविशिष्टपरिभाषाअनित्या तेनेहन द्विषतींतापयतीतिद्विषतीतापः वाचियमोव्रते
वाक्शब्देउपपदेयमेःखच्स्यात्व्रतेगम्येवाचंयमपुरंदरौच वाक्पुरोरमंतत्वंनिपात्यते वाचंयमोमौ
नव्रती व्रतेकिं अशक्त्यादिनावाचंयच्छतीतिवाग्यामः पूःसर्वयोर्दारिसहोः पुरंदारयतीतिपुरंदरः
सर्वंसहः साहिग्रहणमसंज्ञार्थं भगेचदारेरितिकाशिका बाहुलकेनलब्धमित्याहुः भगंदारयतीतिभगं
दरः सर्वकूलाभ्रकरीषेषुकषः सर्वंकषः खलः कूलंकषानदी अभ्रंकषोवायुः करीषंकषावात्या मे

यर्तिभयेषुकृञः मेघंकरः ऋतिंकरः भयंकरः भयशब्देनतदंतविधिः अभयंकरः क्षेमप्रियमद्रेऽण्च ।
कृञोऽण्स्याच्चात्खच् क्षेमंकरः क्षेमकारः प्रियंकरः प्रियकारः मद्रंकरोमद्रकारः वेतिवाच्येऽण्ग्रहणंहे
त्वादिषुटोमाभूदिति कथंतर्हि ल्यारंभाः क्षेमकराइति कर्मणःशेषत्वविवक्षायांपचाद्यच् आशितेभुवः
करणभावयोः आशितेशब्देउपपदेभवतेःखच्स्यात् आशितोभवत्यनेनजाशितंभवओदनः आशि
तस्यभवनमाशितंभवः संज्ञायांभृतॄवृजिधारिसहितपिदमः विश्वंबिभर्तीतिविश्वंभरः विश्वंभरा
रथंतरंसाम इहरथेनतरतीतिव्युत्पत्तिमात्रंनत्ववयवार्थानुगमः पतिंवराकन्या शत्रुंजयोहस्ती युगंध
रःपर्वतः शत्रुंसहः शत्रुंतपः अरिंदमः दमिःशमनायांतेनसकर्मकइत्युक्तं मतांतरेत्वंतर्भावितण्यर्थोऽत्र
दमिः गमश्च सुतंगमः अंतात्यंताध्वदूरपारसर्वानंतेषुडः संज्ञायामितिनिवृत्तं एषुगमेर्डःस्यात् डित्व
सामर्थ्यादभस्यापिटेर्लोपः अंतंगच्छतीत्यंतगः सर्वत्रपन्नयोरुपसंख्यानं सर्वत्रगः पन्नंगच्छतीतिप
न्नगःपन्नमितिपद्यतेःक्तांतंक्रियाविशेषणं उरसोलोपश्च उरसागच्छतीत्युरगः सुदुरोरधिकरणे सुखेनग
च्छत्यत्रसुगः दुर्गः अन्यत्रापिगच्छतइतिवक्तव्यं ग्रामगः डेचविहायसोविहादेशोवक्तव्यः विहगः आ
शिषिहनः शत्रुंवध्याच्छत्रुहः आशिषिकिं शत्रुघातः दारावाहनोऽणंतस्यचटःसंज्ञायां दारुशब्दउपपदे
आङ्पूर्वाद्धंतेरण् टकारश्चांतादेशोवक्तव्यइत्यर्थः दार्वाघाटः चारौवाचार्वाघाटः कर्मणिसमिच कर्मण्यु
पपदे संपूर्वाद्धंतेरुक्तंवेत्यर्थः वर्णान्संहंतीतिवर्णसंघाटः वर्णसंघातः पदसंघाटः पदसंघातः अपेःक्ले
शतमसोः अपपूर्वाद्धंतेर्डःस्यात् अनाशीरर्थमिदं क्लेशापहःपुत्रः तमोऽपहःसूर्यः कुमारशीर्षयो-

र्णिनिः कुमारघाती शिरसः शीर्षभावो निपात्यते शीर्षघाती लक्षणे जायापत्योष्टक् हंतेष्टक्स्याल्लक्षणवति
कर्तरि जायाघ्नो ना पतिघ्नी स्त्री अमनुष्यकर्तृके च जायाघ्नास्तिलकालकाः पतिघ्नी पाणिरेखा पित्तघ्नं घृतं अ
मनुष्यकर्तृके किं आखुघातः शूद्रः अथ कथं बलभद्रः प्रलंबघ्नः शत्रुघ्नः इत्यादि मूलविभुजादित्वात्सिद्धं चौर-
घातो नगरघातो हस्तीति तु बाहुलकादणि शक्तौ हस्तिकपाटयोः हंतेष्टक् स्याच्छक्तौ द्योत्यायां मनुष्यकर्तृ
कार्थमिदं हस्तिघ्नो ना कपाटघ्नश्चोरः कवाटेति पाठांतरं पाणिघताडघौ शिल्पिनि हंतेष्टक् टिलोपो घत्वं च नि
पात्यते पाणिताडयोरुपपदयोः शिल्पिनि किं पाणिघातः ताडघातः राजघ उपसंख्यानं राजानं हंतीति रा
जघः आढ्यसुभगस्थूलपलितनग्नांधप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् एषु च्व्यर्थेष्वच्व्यंतेषु कर्म-
सूपपदेषु कृञः ख्युन् स्यात् अनाढ्यमाढ्यं कुर्वंत्यनेन आढ्यंकरणं अच्वौ किं आढ्यीकुर्वंत्यनेन इह प्रति
षेधसामर्थ्याल्ल्युडपि नेति काशिका भाष्यमते तु ल्युट् स्यादेव अच्वावित्युत्तरार्थं कर्तरि भुवः खिष्णुच्खुक
ञौ आढ्यादिषु च्व्यर्थेष्वच्व्यंतेषु भवतेरेतौ स्तः अनाढ्यः आढ्यो भवत्याढ्यंभविष्णुः आढ्यंभावुकः स्पृशो
ऽनुदके क्विन् घृतस्पृक् कर्मणीति निवृत्तं मंत्रेण स्पृशतीति मंत्रस्पृक् ऋत्विक् दधृगिति व्याख्यातं त्यदादिषु
दृशोऽनालोचने कञ्च समानान्ययोरिति वाच्यं सदृक् सदृशः अन्यादृक् अन्यादृशः क्सोऽपि वाच्यः ता
दृक्षः सदृक्षः अन्यादृक्षः सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् एभ्यः क्विप् स्यादु
पसर्गे सत्यसति च सुप्युपपदे द्युसत् उपनिषत् अंडसूः प्रसूः मित्रद्विट् प्रद्विट् मित्रध्रुक् प्रध्रुक् गोधुक् प्रधुक् अ
श्वयुक् प्रयुक् वेदवित् निवित् इत्यादि अग्रग्रामाभ्यां नयतेर्णो वाच्यः अग्रणीः ग्रामणीः भजो ण्विः सुप्युप

सर्गेचोपपदेभजेर्ण्विः स्यात् अंशभाक् प्रभाक् अदोऽनन्ने विट्स्यात् आममत्ति आमत् सस्यात् अनन्नेकिं अन्नादः क्रव्येच अदेर्विट् पूर्वेणैवसिद्धेवचनमण्बाधनार्थमिदं क्रव्यात् आममांसभक्षकः कथंतर्हिक्रव्यादोऽपआशरइति पक्कमांसशब्देउपपदेअण् उपपदस्यक्रव्यादेशः पृषोदरादित्वात् दुहःकब्घश्च कामदुघाअन्येभ्योऽपिदृश्यंते छंदसीतिनिवृत्तं मनिन्क्वनिप्वनिप्विजेतेप्रत्ययाधातोःस्युः नेड्वशिकृति वशादेःकृतइण्नस्यात् शॄसुशर्मा प्रातरित्वा विड्वनोरनुनासिकस्यात् अनुनासिकस्यात्स्यात् विजायतइति विजावा ओणृअवावा विच् रोट् रेट् सुगण् क्विप्च अयमपिदृश्यते सत्सूद्विषेतिल्वस्यैवप्रपंचः उखास्रत् पर्णध्वत् वाहभ्रट् अंतःपदांतस्थानितेर्नस्यणत्वंस्यात् उपसर्गस्थान्निमित्तात्परश्चेत् हेमाण् शासइदितीत्वं मित्राणिशास्तीतिमित्रशीः आशासःक्वौ उपधायाइत्वंवाच्यं आशीः इत्वोत्वे गीः पूः इस्मन्त्रन्क्विषुच एषुच्छादेर्ह्रस्वःस्यात् तनुच्छत् अनुनासिकस्यक्वीतिदीर्घः मोनोधातोः प्रशान् प्रतान् च्छ्वोःशूडित्यूठ् अक्षद्यूः ज्वरत्वरेत्यूठ् जूःजुरौ तूः स्रूः ऊः वृद्धिः जनानवतीतिजनौः जनावौ जनावः मूः सुवौ सुवः सुमूः सुम्वौ सुम्वः राल्लोपः मुर्च्छा मूःमुरौ मुरः धुर्वी धूः गमःक्वौ अनुनासिकलोपःस्यात् अंगगत् गमादीनामितिवक्तव्यं परीतत् संयत् क्रनत् ऊङ्चगमादीनामितिवक्तव्यं लोपश्च अग्रेगूः अग्रेभ्रूः स्थःकच चात्क्विप् शंस्थः शंस्था शमिधातोरित्यचं बाधितुंसूत्रं सुप्यजातौणिनिस्ताच्छील्ये अजात्यर्थेसुपिधातोर्णिनिःस्यात्ताच्छील्येद्योत्ये उष्णभोजी शीतभोजी अजातौकिं ब्राह्मणानामंत्रयिता ताच्छील्येकिं उष्णंभुंक्ते कदाचित् इहवृत्तिकारेणोपसर्गेभिन्नएवसुपिणिनिरितिव्याख्यायउत्प्रतिभ्यामाङिसर्त्तेरुपसंख्यानमितिपठितं हरदत्तमाधवादिभिश्चतदेवानुसृतं एतच्चभा-

थ्यविरोधादुपेक्ष्यं प्रसिद्धश्चोपसर्गेणिनिः सबभूवोपजीविनां अनुयायिवर्गः पतत्यधोधामविसारि नवंचनी
याः प्रभवोऽनुजीविभिरित्यादौ साधुकारिण्युपसंख्यानं ब्रह्मणिवदः अताच्छील्यार्थंवार्त्तिकद्वयं साधुदायी
ब्रह्मवादी कर्त्तर्युपमाने णिनिः स्यात् उपपदार्थः कर्ता प्रत्ययार्थस्यकर्तुरुपमानं उष्ट्रइवक्रोशतीत्युष्ट्रक्रोशी
ध्वांक्षरावी अताच्छील्यार्थंजात्यर्थंचसूत्रं कर्त्तरिकिं अपूपानिवभक्षयतिमाषान् उपमानेकिं उष्ट्रःक्रोशति व्र-
ते णिनिःस्यात् स्थंडिलशायी बहुलमाभीक्ष्ण्ये पौनःपुन्येद्योत्ये सुप्युपपदेणिनिःस्यात् क्षीरपायिणः उशीनराः
मनःस्रूपि मन्यतेर्णिनिःस्यात् दर्शनीयमानी आत्ममानेखश्च स्वकर्मकेमननेवर्तमानान्मन्यतेःसुपिखश्चस्या-
च्चाणिणिनिः पंडितमात्मानंमन्यतेपंडितमन्यः पंडितमानी खित्यनव्ययस्य कालिंमन्या अनव्ययस्यकिं दिवा
मन्या इचएकाचोऽम्प्रत्ययवच्च इजंतादेकाचोऽम्स्यात्सचस्वाद्यम्वल्लिवदंतेपरे औतोम्शसोः गांमन्यः वाम्
शसोःस्त्रियंमन्यः स्त्रीमन्यः नृनरंमन्यःभुवंमन्यः श्रियमात्मानंमन्यतेश्रिमन्यंकुलंभाष्यकारवचना छ्रीशब्द
स्यन्हस्वोसुममोरभावश्च भूते अधिकारोऽयं वर्तमानेलडितियावत् करणेयजः करणेउपपदेभूतार्थाद्यजेर्णि
निःस्यात्कर्त्तरि सोमेनेष्टवान् सोमयाजी अग्निष्टोमयाजी कर्मणिहनः पितृव्यघाती कर्मणीत्येतत्सहेचेतिया
वदधिक्रियते ब्रह्मभ्रूणवृत्रेषुक्विप् एषुकर्मसूपपदेषु हंतेर्भूतेक्विप्स्यात् ब्रह्महा भ्रूणहा क्विप्चेत्येवसिद्धेनि-
यमार्थमिदं ब्रह्मादिष्वेवहंतेरेवभूतएवक्विबेवेति चतुर्विधोऽत्रनियमइतिकाशिका ब्रह्मादिष्वेवक्विबेवेति
द्विविधोनियमइतिभाष्यं सुकर्मपापमंत्रेषुकृञः सोकर्मादिषुकृञः क्विप्स्यात् त्रिविधोऽत्रनियमइतिका-
शिका सुकृत् कर्मकृत् पापकृत् मंत्रकृत् पुण्यकृत् क्विबेवेतिनियमात्कर्मकृतवानित्यत्राणन कृञएवेति

नियमात् मंत्रमधीतवान् मंत्राध्यायः अत्र नक्विप् भूत एवेतिनियमात् मंत्रं करोति करिष्यतिवेतिविवक्षायांन-
क्विप् स्यादिष्वेवेतिनियमाभावादन्यस्मिन्नुपपदे क्विप् शास्त्रकृत् भाष्यकृत् सोमेसुञः सोमसुत् चतुर्विधोऽ
त्रनियमइतिकाशिका एवमुत्तरसूत्रेऽपि अग्नौचेः अग्निचित् कर्मण्यग्न्याख्यायां कर्मण्युपपदे कर्मण्ये-
वकारके चिनोतेः क्विप् अग्न्याधारस्थलविशेषस्याख्यायां श्येनइवचितः श्येनचित् कर्मणीनिविक्रियः
कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात् कुत्सितग्रहणं कर्तव्यं सोमविक्रयी घृतविक्रयी दृशेःक्वनिप्
कर्मणिभूतइत्येव पारंदृष्टवान् पारदृश्वा राजनियुधिकृञः क्वनिप्स्यात् युधिरंतर्भावितण्यर्थः राजानं
योधितवान् राजयुध्वा राजकृत्वा सहेच कर्मणीतिनिवृत्तं सहयुध्वा सहकृत्वा सप्तम्यांजनेर्डः सरसिजं
मंदुरायांजातोमंदुरजः ङ्यापोरितिह्रस्वः पंचम्यामजातौ जातिशब्दवर्जिते पंचम्यंते उपपदे जनेर्डः स्यात् सं
स्कारजः अदृष्टजः उपसर्गेचसंज्ञायां प्रजास्यात्संततौ जने अनौकर्मणि अनुपूर्वाज्जनेः कर्मण्युपपदे डः-
स्यात् पुमांसमनुरुध्यजाता पुमनुजा अन्येष्वपिदृश्यते अन्येष्वप्युपपदेषु जनेर्डः स्यात् अजः द्विजः ब्राह्मण
जः अपिशब्दः सर्वोपाधिव्यभिचारार्थः तेनधात्वंतरादपिकारकांतरेष्वपि क्वचित् परितः खाता परिखा क्तक्तव
तूनिष्ठा एतौनिष्ठासंज्ञौस्तः निष्ठा भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् तत्र तयोरेवेतिभावकर्मणोः क्तः कर्तरिकृदि
तिकर्तरिक्तवतुः उकावितौ स्नातंमया स्तुतस्त्वया विष्णुः विष्णुर्विश्वंकृतवान् निष्ठायामण्यदर्थे ण्यदर्थोभाव
कर्मणीततोऽन्यत्र निष्ठायांक्षियोदीर्घः स्यात् क्षियोदीर्घात् दीर्घात्क्षियोनिष्ठातस्यनः स्यात् क्षीणः क्षीणवान्
भावकर्मणोस्तु क्षितः कामोमया श्युकः किति श्रितः श्रितवान् भूतः भूतवान् क्षुतः ऊर्णोतेर्णुवद्भावोवाच्यः

तेनएकाच्त्वान्नेट् ऊर्णुतः नुतः वृत्तः रदाभ्यांनिष्ठातोनः पूर्वस्यचदः रेफदकाराभ्यांपरस्यनिष्ठातस्यनःस्यात् नि
ष्ठापेक्षयापूर्वस्य धातोर्दकारस्यन्च शॄहिंसायांॠतइत् रपरत्वं णत्वं शीर्णः बहिरंगत्वेनण्डेरसिद्धत्वान्नेहरू
तस्यापत्यंकार्त्तिः भिन्नः छिन्नः संयोगादेरातोधातोर्यण्वतः निष्ठातस्यनःस्यात् द्राणः ग्लानः ल्वादिभ्यः एक
विंशतेर्लूञादिभ्यःप्राग्वत् लूनःज्या ग्रहिज्या जीनः दुग्वोर्दीर्घश्च दुगतो दूनः टुदुउपतापेइत्ययं तुनगृह्यते
साधुबंधकत्वात् मृदुतयादुतयेतिमाघः गूनः पूञोविनाशे पूनायवाः विनष्टाइत्यर्थः पूतमन्यत् सिनोते-
र्ग्रासकर्मकर्तृकस्य सिनोग्रासः ग्रासेतिकिं सितापाशेनसूकरी कर्मकर्तृकेतिकिं सितोग्रासोदेवदत्तेन ओदि
तश्च भुजोभुग्नः टुओश्वी उच्छूनः ओहाक् प्रहीणः स्वादयओदितइत्युक्तं सूनः सूनवान् दूनः ओदिन्मध्ये
डीङः पाठसामर्थ्यान्नेट् उड्डीनः द्रवमूर्तिस्पर्शयोःश्यः द्रवमूर्तौकाठिन्येस्पर्शेचार्थेश्येङःसंप्रसारणंस्यान्नि
ष्ठायां श्योऽस्पर्शे श्येङोनिष्ठातस्यनःस्यादस्पर्शेऽर्थे हलइतिदीर्घः शीनंघृतं अस्पर्शेकिं शीतंजलं द्रवमूर्ति
स्पर्शयोरितिकिं संश्यानोवृश्चिकः शीतात्संकुचितइत्यर्थः प्रतेश्च प्रतिपूर्वस्यश्यःसंप्रसारणंस्यान्निष्ठायां
प्रतिशीनः विभाषाभ्यवपूर्वस्य श्यःसंप्रसारणंवास्यात् अभिश्यानंघृतं अभिशीनं अवश्यानोऽवशीनोवृश्चि
कः व्यवस्थितविभाषेयं तेनेहनसमवश्यानः अंचोऽनपादाने अंचोर्निष्ठातस्यनःस्यान्नत्वपादाने यस्य
विभाषा यस्यक्वचिद्विभाषेड्विहितस्ततोनिष्ठाया इण्नस्यात् उदितोवेतित्क्वायांवेट्कत्वादिहनेट् समक्नः
अनपादानेकिं उदक्तमुदकंकूपात् नत्वस्यासिद्धत्वात्प्रश्चेतिषत्वेप्राप्ते निष्ठादेशःषत्वस्वरप्रत्ययेड्विधि
षुसिद्धोवाच्यः वृक्णः वृक्णवान् परिस्कंदःप्राच्यभरतेषु पूर्वेणमूर्द्धन्येप्राप्तेतदभावोनिपात्यते परिस्कंदः

प्राच्येतिकिं परिष्कंदः परिस्कंदः परेश्चेतिविकल्पः स्तन्भेरितिषत्वेप्राप्ते प्रतिस्तब्धनिस्तब्धौच अत्रषत्वंनस्यात्
दिवोविजिगीषायां दिवोनिष्ठातस्यनःस्यादविजिगीषायां द्यूनः विजिगीषायांतुद्यूतं निर्वाणोऽवाते अ
वातेतिच्छेदः निपूर्वाद्वातेर्निष्ठातस्यनत्वंस्याद्वातश्चेत्कर्त्तानानिर्वाणोऽग्निर्मुनिर्वा वातेतुनिर्वातोऽवातः
शुषःकः निष्ठाइत्येव शुष्कः पचोवः पक्वः क्षायोमः क्षामः स्त्यःप्रपूर्वस्य प्रात्स्त्यःसंप्रसारणंस्यान्निष्ठायाम्
प्रस्त्योऽन्यतरस्यां निष्ठानस्यमोवास्यात् प्रस्तीमः प्रस्तीतः प्रात्किं स्त्यानः अनुपसर्गात्फुल्लक्षीबकृशो
ल्लाघाः ञिफला फुल्लः निष्ठातस्यलत्वंनिपात्यते क्तवतेरेकदेशस्यापीदंनिपातनमिष्यते फुल्लवान् क्षी
बादिषुक्तप्रत्ययस्यैवतलोपः तस्यासिद्धत्वात्प्रासस्येटोऽभावश्चनिपात्यते क्षीबोमत्तः कृशस्तनुः उल्ला
घोनीरोगः अनुपसर्गात्किं आदितश्च आकारेतोनिष्ठायाइण्नस्यात् तिन्च चरफलोरतउत्स्यात्तादौकि
ति प्रफुल्लितः प्रक्षीबितः प्रकृशितः प्रोल्लाघितः कथंतर्हि लोध्रद्रुमंसानुमतःप्रफुल्लमिति फुल्लविसकुने
पचाद्यच् सूत्रंतुफुल्लतादिनिवृत्त्यर्थं उत्फुल्लसंफुल्लयोरुपसंख्यानं नुदविदोंदत्राघ्राह्रीभ्योऽन्यतरस्यां
एभ्योनिष्ठातस्यनोवा नुन्नः नुत्तः विदविचारणे रौधादिकएवगृह्यते उंदिनापरेणसाहचर्यात् विन्नःवित्तः
वेत्तेस्तुविदितः विद्यते विन्नःउंदी श्वीदितोनिष्ठायां श्वयतेरीदितश्चनिष्ठायाइण्न उन्नःउत्तः त्राणः त्रातः
घ्राणः घ्रातः ह्रीणः ह्रीतः नध्याख्यापॄमूर्च्छिमदां एभ्योनिष्ठातस्यनत्वंनस्यात् ध्यातः ख्यातः पूर्त्तः रान्
ल्लोपः मूर्त्तः मत्तः वित्तोभोगप्रत्यययोः विंदतेर्निष्ठातस्यनिपातोऽयंभोग्येप्रतीतेचार्थे वित्तं धनं वित्तःपुरु
षः अनयोःकिं विन्नः विभाषागमहनेतिक्वसोवेट्कत्वादिहनेट् भित्तंशकलं भिन्नमन्यत् ऋणमाध

मर्ण्ये ऋधातोः क्तेतकारस्यनत्वंनिपात्यते आधमर्ण्यव्यवहारे ऋतमन्यत् स्फायः स्फीनिष्ठायां स्फीतः
इण्निष्ठायां निरःकुषोनिष्ठायांइट् स्याद् यस्यविभाषेतिनिषेधेप्राप्तेपुनर्विधिः निष्कुषितः वसतिक्षु-
धोरिट् आभ्यांक्त्वानिष्ठयोर्नित्यमिट् उषितः क्षुधितः अंचेः पूजायां पूजार्थादंचेः क्त्वानिष्ठयोरिट् स्या
त् अंचितः गतौतुअक्तः लुभोऽविमोहने लुभः क्त्वानिष्ठयोरिट् स्यान्नतुगार्द्ध्ये लुभितः गार्द्ध्येतु लुब्धः
क्लिशः क्त्वानिष्ठयोः इड्वास्यात् क्लिशउपतापे नित्यंप्राप्ते क्लिशूविबाधने अस्यक्त्वायांविकल्पेसिद्धे निष्ठा
यांनिषेधेप्राप्तेविकल्पः क्लिशितः क्लिष्टः पूङश्च पूङः क्त्वानिष्ठयोरिट् स्यात् पूङः क्त्वाच पूङः क्त्वानिष्ठाच
सेट् किन्नस्यात् पवितः पूतः क्त्वाग्रहणमुत्तरार्थं नोपधादित्यत्रहिक्त्वैवसंबध्यते निष्ठाशीङ्स्विदिमिदि
क्ष्विदिधृषः एभ्यः सेण्निष्ठाकिन्नस्यात् शयितः शयितवान् अनुबंधनिर्देशोयङ्लुकनिवृत्त्यर्थः शे-
श्यितः शेश्यितवान् आदिकर्मणिनिष्ठावक्तव्या आदिकर्मणिक्तः कर्त्तरिच आदिकर्मणियः क्तः सकर्त्तरि-
स्याच्चाद्भावकर्मणोः विभाषाभावादिकर्मणोः भावेआदिकर्मणिच आदितोनिष्ठायाइट् वास्यात्
प्रस्वेदितश्चैत्रः प्रस्वेदितंतेन ञिष्विदेतिभ्वादिरत्रगृह्यते ञिद्भिः साहचर्यात् स्विद्यते स्तुस्विदितइत्येव
ञिमिदाञिक्ष्विदादिवादीभ्वादीन्च प्रमेदितः प्रमेदितवान् प्रक्ष्वेदितः प्रक्ष्वेदितवान् प्रधर्षितः प्रधर्षितवा
न् प्रधर्षितंतेन सेट्किं प्रस्विन्नः प्रस्विन्नंतेनेत्यादि मृषस्तितिक्षायां सेट्निष्ठाकिन्नस्यात् मर्षितः म
र्षितवान् क्षमायांकिं अपमृषितंवाक्यं अविस्पष्टमित्यर्थः उदुपधाद्भावादिकर्मणोरन्यतरस्यां उदु
पधात्पराभावादिकर्मणोः सेण्निष्ठावाकिन्नस्यात् द्युतितं द्योतितं मुदितंमोदितंसाधुना प्रद्युतितः प्र

द्योतितः प्रमुदितः प्रमोदितः साधुः उवुपधात्किं विदितं भावेति किं रुचितं कार्षापणं सेट्किं कुष्टं शब्दविकर
णोप्यएवेष्यते तेनेहन गुध्यतेर्गुधितं निष्ठायांसेटि णेर्लोपः स्यात् भावितः भावितवान् श्वीदितइतिनेट्
संप्रसारणं शूनः दीप्तः गुहू गूढः वनु तनु वतः ततः पतेः सनिवेट् क्त्वादिडभावे प्राप्ते द्वितीयाश्रितेति सू
त्रे निपातनादिट् पतितः सेऽसिचीतिवेट् क्त्वासिद्धे रुतस्यादौ त्वामीदित्त्वेना नित्यत्वज्ञापनाद्वा तेन धावित
मिभराजधियाइत्यादिसिद्धं यस्यविभाषेत्यत्र एकाच इत्येव दरिद्रितः क्षुब्धस्वांतध्वांतलग्नम्लिष्टवि
रिब्धफांटबाढानिमंथनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु क्षुब्धादीन्यष्टावनिट्कानिनिपात्यं
ते समुदायेनमंथादिषुवाच्येषु द्रवद्रव्यसंपृक्ताः सक्तवोमंथः मंडनदंडश्च क्षुब्धोमंथश्चेत् स्वांतंमनः ध्वांतं
तमः लग्नंसक्तं निष्ठानत्वमपिनिपातनात् म्लिष्टमविस्पष्टं विरिब्धः स्वरः म्लेच्छरेभ्योः अनयोरुपधाया इत्वम
पिनिपात्यते फांटमनायाससाध्यः कषायविशेषः माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फांटमि
तिवेदभाष्येआह बाढंभृशं अन्यत्रतुक्षुभितं क्षुब्धोराजेतितु आगमशास्त्रस्यानित्यत्वात् स्वनितं ध्व
नितं गलितं म्लेच्छितं विरेभितं फणितं वाहितं धृषिशसीवैयात्ये एतौनिष्ठायामविनयेएवानिटौस्तः धृ
ष्टोविशस्तः अन्यत्र धर्षितः विशसितः भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति अतएवनियमार्थमिदंसू
त्रमिति वृत्तिः धृषेरादित्वेफलंचिंत्यमिति हरदत्तः माधवस्तु भावादिकर्मणोरवैयात्येविकल्पमाह धृष्टं
धर्षितं प्रधृष्टः प्रधर्षितः दृढः स्थूलबलयोः स्थूले बलवतिचनिपात्यते दृहदृहिवृद्धौ क्तस्येडभावः तस्य
ढत्वंहस्यलोपः इदितोनलोपश्च दृहितोदृंहितोऽन्यः प्रभोपरिवृढः वृहवृहिवृद्धौ निपातनं प्रागवत् परि

दृंहितः परिदृंहितोऽन्यः कृच्छ्रगहनयोः कषः कषोनिष्ठायाइण्नस्यादेतयोरर्थयोः कष्टंदुःखंतत्कारणंच स्यात्कष्टं
कृच्छ्रमाभीलं कष्टोमोहः कष्टंशास्त्रंदुरवगाहमित्यर्थः कषितमन्यत् घुषिरविशब्दने घुषिर्निष्ठायामनिट्स्यात्
घुष्टारज्जुः अविशब्दनेकिं घुषितंवाक्यंशब्देनप्रकटीकृताभिप्रायमित्यर्थः अर्देःसंनिविभ्यः एतत्पूर्वादर्देर्निष्ठा
याइण्नस्यात् समर्णः न्यर्णः व्यर्णः अर्दितोऽन्यः अभेश्चाविदूर्ये अभ्यर्णंनातिदूरंआसन्नंवा अभ्यर्दितमन्यत्
णेरध्ययनेवृत्तं ण्यंताद्वृत्तेःक्तस्येडभावोणिलुक्च अधीयमानेऽर्थे वृत्तंछंदः शास्त्रेणसंपादितमधीतमितिया
वत् अन्यत्रतु वर्त्तितारज्जुः शृतंपाके श्रातिश्रपयत्योःक्ते शृभावोनिपात्यते क्षीरहविषोःपाके शृतंक्षीरं स्वयमे
वविक्लिन्नंपक्वंवेत्यर्थः क्षीरहविर्भ्यामन्यत्तु श्राणं श्रपितं वादांतशांतपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः एतेणिचिनि
ष्ठांतावानिपात्यंते पक्षेदमितः शमितः पूरितः दासितः स्पाशितः छादितः ज्ञपितः रुष्यमत्वरसंघुषास्वनां ल्भ्यो
निष्ठायाइड्वास्यात् रुष्टः रुषितः आंतः अमितः तूर्णः त्वरितः अस्यादित्वे फलंमंदं संघुष्टः संघुषितः अस्वांतः अ
स्वनितः हृषेर्लोमसु हृषेर्निष्ठायाइड्वास्याल्लोमसुविषये हृष्टं हृषितंलोम विस्मितप्रतिघातयोश्च हृष्टोहृ
षितोमैत्रोविस्मितः प्रतिहतोवेत्यर्थः अन्यत्रतुहृषुअलीके ऊदित्वान्निष्ठायांनेट् हृषतुष्टौ इट् अपचितश्च चा
यतेर्निपातोऽयं अपचितः अपचायितः प्यायःपी वास्यान्निष्ठायां व्यवस्थितविभाषेयं तेनस्वांगेनित्यं पीनंमुं
खं अन्यत्रतुप्यानः पीनःस्वेदःसोपसर्गस्यन प्रप्यानः आङ्पूर्वस्यांधूधसोःस्यादेव आपीनोंऽधुः आपीनमूधः
ल्हादोनिष्ठायां ह्रस्वःस्यात् प्रल्हन्नः द्यतिस्यतिमास्थामित्तिकिति एषामिकारोंऽतादेशःस्यात्तादौकिति ईत्वद
त्वयोरपवादः दितः सितः मामाङ्मेङ् मितः स्थितः शाच्छोरन्यतरस्यां शितः शातः छितः छातः व्यवस्थित

विभाषात्वाङ्क्रतेविषयेश्यतेर्नित्यं शंसितं व्रतं सम्यक्संपादितमित्यर्थः संशितोब्राह्मणः व्रतविषयकधत्नवानि
त्यर्थः दधातेर्हिः नादोकितिअभिहितं निहितं दोदद्घ्योः घुसंज्ञकस्यदाइत्यस्यदथ्स्यात्तादौकिति चर्त्वं दत्तः
घोःकिं दातः तांतोवायमादेशः नचैवंविदत्तमित्यादावुपसर्गस्यदस्तीतिदीर्घापत्तिः तकारादौतद्विधानात् दां-
तोवाधांतोवा नचदांतत्वेनिष्ठानत्वंधांतत्वेझषस्तथोरितिधत्वंशंक्यंसन्निपातपरिभाषाविरोधात् अचउप-
सर्गात्तः अजंतादुपसर्गात्परस्यदाइत्यस्यघोरचस्तः स्यात्तादौकितिचर्त्वं प्रत्तः अवत्तः अवदत्तं विदत्तंचप्रदत्तंचा
दिकर्मणि सुदत्तमनुदत्तंचनिदत्तमितिचेष्यते चशब्दाद्यथाप्राप्तं दस्ति इगंतोपसर्गस्यदीर्घस्याद्दादेशोयस्तकार
स्तदादावुत्तरपदे स्वरिचेति चर्त्वमाश्रयात्सिद्धं नीतं सूक्तं घुमास्थेतीत्वं धेट् धीतं गीतं पीतं जनसनेत्यात्वं जातं
सातं खातं अदोजग्धिर्ल्यप्तिकिति ल्यबितिलुप्तसप्तमीकं अदोजग्धिः स्याल्ल्यपितादौकितिच इकारउच्चारणा
र्थः धत्वं झरोझरि जग्धः आदिकर्मणिक्तःकर्तरिच प्रकृतः कटंसः प्रकृतकटस्तेन निष्ठायामण्यदर्थइतिदीर्घः
क्षियोदीर्घादितिणत्वं प्रक्षीणःसः वाक्रोशदैन्ययोः क्षियोनिष्ठायांदीर्घोवास्यादाक्रोशेदैन्येच क्षीणायुर्भवक्षि
तायुर्वा क्षीणोऽयंतपस्वीक्षितोवा निनदीभ्यांस्नातेःकौशले आभ्यांस्नातेः सस्यषः स्यात्कौशलेगम्ये निष्णा-
तःशास्त्रेषु नदीष्णः सुपीतिकः सूत्रंप्रतिष्णातं प्रतेःस्नातेःषत्वं प्रतिष्णातंसूत्रंशुद्धमित्यर्थः अन्यत्रप्रतिस्नातं
कपिष्ठलोगोत्रे कपिष्ठलोनामयस्यकापिष्ठलिःपुत्रः गोत्रेकिं कपीनांस्थलंकपिस्थलं विकुशमिपरिभ्यःस्थ
लं एभ्यःस्थलस्यसस्यषःस्यात् विष्ठलं कुष्ठलं शमिष्ठलं परिष्ठलं गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरु
हजीर्यतिभ्यश्च एभ्यःकर्त्तरिक्तःस्याद्भावकर्मणोश्च गंगांगतः गंगांप्राप्तः ग्लानःसः लक्ष्मीमाश्लिष्टोहरिः शेष

मधिशयितः वैकुंठमधिष्ठितः शिवमुपासितः हरिदिनमुपोषितः राममनुजातः गरुडमारूढः विश्वमनुजीर्णः प
क्षेप्राप्तागंगातेनेत्यादि क्तोऽधिकरणेचध्रौव्यगतिप्रत्यवसानार्थेभ्यः एभ्योऽधिकरणेक्तःस्याच्चाद्यथाप्राप्तम्
ध्रौव्यं स्थैर्यं मुकुंदस्यासितमितमिदंयातंरमापतेः भुक्तमेतदनंतस्येत्यूचूर्गोप्योदिदृक्षवः पक्षेआसेरकर्मक
त्वात्कर्त्तरिभावेच आसितोमुकुंदः आसितंतेन गत्यर्थेभ्यःकर्त्तरिकर्मणिच रमापतिरिदंयातः तेनेदंयातं भु
जेःकर्मणि अन्नंतेनेदंभुक्तं कथंभुक्ताब्राह्मणाइति भुक्तमस्त्येषामितिमत्वर्थीयोऽच् वर्तमानइत्यधिकृत्य ञि
तःक्तः ञिक्ष्विदा क्ष्विण्णः ञिइंधी इद्धः मतिबुद्धिपूजार्थेभ्यश्च मतिरिहेच्छा बुद्धेःपृथगुपादानात् राज्ञांमत
इष्टः तैरिष्यमाणइत्यर्थः बुद्धः विदितः पूजितः अर्चितः चकारोऽनुक्तसमुच्चयार्थः शीलितोरक्षितः क्षांतः आक्रु
ष्टोजुष्टइत्यादि नपुंसकेभावेक्तः क्लीबत्वविशिष्टेभावेकालसामान्येक्तःस्यात् जल्पितं शयितं हसितं सुयजो
र्ङ्वनिप् सुनोतेर्यजतेश्चङ्वनिप्स्यात् सुत्वा सुत्वानौ यज्वा यज्वानौ जीर्यतेरतृन् भूतइत्येव जरन् जरंतौ
वासरूपन्यायेननिष्ठापि जीर्णोजीर्णवान् छंदसिलिट् लिटःकानज्वा क्वसुश्च इहभूतसामान्ये छंदसि
लिट् तस्यविधीयमानौ क्वसुकानचावपिछांदसावितित्रिमुनिमतंकवयस्तुबहुलंप्रयुंजते तंतस्थिवांसंन
गरोपकंठे श्रेयांसिसर्वाण्यधिजग्मुषस्ते इत्यादि वस्वेकाजाद्घसां कृतद्वित्वानामेकाचामादंतानांघसेश्चव
सोरिट्स्यान्नान्येषांआदिवान् आरिवान् ददिवान् जक्षिवान् एषांकिं बभूवान् भाषायांसदवसश्रुवः सदादि
भ्योभूतसामान्येभाषायांलिङ्वास्यात् तस्यचनित्यंक्वसुः निषेदुषीमासनबंधधीरः अध्यूषुषस्तामभवन्जनन
स्य शुश्रुवान् उपेयिवाननाश्वाननूचानश्च एतेनिपात्यंते उपपूर्वादिणोभाषायामपिभूतमात्रेलिङ्वात्तस्यच

नित्यंक्कसुः इट् उपेयिवान् उपेयुषःस्वामपिमूर्तिमग्र्यां उपेयुषी उपेत्यविवक्षितंईयिवान् समीयिवान् नञ्पूर्वाद
भातेः क्वसोरिडभावश्च धृनजयधृतेरनाशकषइतिभारविः अनुपूर्वाद्वचेः कर्त्तरिकानच् वेदस्यानुवचनंकृतवान्
नूचानः विभाषागमहनविदविशां एभ्योवसोरिड्वाजग्मिवान् जगन्वान् जघ्निवान् जघन्वान् विविदिवान्
विविद्वान् विविशिवान् विविश्वान् विशिनासाहचर्याद्विदतेर्ग्रहणं वेत्तेःक्तविविद्वान् दृशेश्च ददृशिवान् द
दृश्वान् लटःशतृशानचावप्रथमासमानाधिकरणे अप्रथमांतेनसामानाधिकरण्येसतीत्यर्थः शबादि
पचंतंचैत्रंपश्य आनेमुक् अदंतांगस्यातोमुमागमःस्यादानेपरे पचमानंचैत्रंपश्य लडित्यनुवर्तमाने
पुनर्लट्ग्रहणमधिकविधानार्थं तेनप्रथमासामानाधिकरण्येऽपिक्वचित् सन्ब्राह्मणः माङ्याक्रोशइति
वाच्यं माजीवन् माङिलुङितिप्राप्ते एतद्वचनसामर्थ्याल्लट् संबोधनेच हेपचन् हेपचमान लक्षणहेत्वोः
क्रियायाः क्रियायाःपरिचायके हेतौचार्थेवर्त्तमानाद्धातोर्लटःश तृशानचौस्तः शयानाभुंजतेयवनाः अर्ज
यन्वसति हरिंपश्यन्मुच्यते हेतुःफलंकारणंच कृत्यचः प्रपीयमाणःसोमः ईदासः आसःपरस्यानस्यईत्स्यात्
आदेःपरस्य आसीनः विदेःशतुर्वसुः वेत्तेःपरस्यशतुर्वसुरादेशोवास्यात् विदन् विद्वान् विदुषी तौसत्
शतृशानचौसत्संज्ञौस्तः लटःसद्वा व्यवस्थितविभाषेयं तेनप्रथमासामानाधिकरण्येप्रत्ययोत्तरपदयोः
संबोधनेलक्षणहेत्वोश्चनित्यं करिष्यंतंकरिष्यमाणंपश्य करिष्यतोऽपत्यंकारिष्यतः करिष्यद्भक्तिः हेकरि-
ष्यन् अर्जयिष्यन् वसति प्रथमासामानाधिकरण्येऽपिक्वचित् करिष्यतीतिकरिष्यन् पूङ्यजोःशानन् व
र्तमाने पवमानः यजमानः ताच्छील्यवयोवचनशक्तिषुचानश् एषुद्योत्येषुकर्तरिचानश् भोगंभुंजा

नः कवचं बिभ्राणः शत्रुं निघ्नानः इङ्धार्योः शत्र कृच्छ्रिणि आभ्यां शतृः स्यादकृच्छ्रिणि कर्त्तरि अधीयन् धारय
न् अकृच्छ्रिणि किं कृच्छ्रेणाधीते धारयति द्विषोऽमित्रे द्विषन् शत्रुः सुञो यज्ञसंयोगे सर्वे सुन्वंतः सर्वे यजमा-
नाः सत्रिणः अर्हः प्रशंसायां अर्हन् आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु क्विपमभिव्याप्य वक्ष्यमाणाः
प्रत्ययाः तच्छीलादिषु कर्तृषु बोध्याः तृन् कर्त्ता कटान् अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्र
पवृतुवृधुसहचर इष्णुच् अलंकरिष्णुरित्यादि णेश्छंदसि वीरुधः पारयिष्णवः भुवश्च छंदसीत्येव भ
विष्णुः कथं तर्हि जगत्प्रभोरप्रभविष्णु वैष्णवमिति निरंकुशाः कवयः चकारोऽनुक्तसमुच्चयार्थः भ्राजिष्णु
रिति वृत्तिः एवं क्षयिष्णुः नैतद्भाष्ये दृष्टं ग्लाजिस्थश्च ग्स्नुः छंदसीति निवृत्तं गिदयं न तु कित् तेन स्थ ईत्वं न
ग्लास्नुः गित्वान्न गुणः जिष्णुः स्थास्नुः चाद्भुवः श्र्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् भूष्णुः दंशेश्छंदस्युप
संख्यानं दङ्क्ष्णवः पशवः त्रसिगृधिधृषिक्षिपेः क्नुः त्रस्नुः गृध्नुः धृष्णुः क्षिप्नुः शमित्यष्टाभ्यो घिनुण्
उकार उच्चारणार्थ इति काशिका अनुबंध इति भाष्यं तेन शमिनितरा शमिनीतरेत्यत्रोगितश्चेति ह्रस्ववि
कल्पः नन्वेवं शमी शमिनावित्यादौ नुम्प्रसंगः झल्ग्रहणमपकृष्य झलंतानामेव तद्विधानात् नोदात्तो
पदेशेति वृद्धिनिषेधः शमी तमी दमी श्रमी क्षमी क्लमी प्रमादी उत्पूर्वान्मदेरलंकृञादिसूत्रेणेष्णुजुक्तो
वासरूपविधिना घिनुणपि उन्मादी ताच्छीलिकेषु वासरूपविधिर्नास्तीति तु प्रायिकं संपृचानुरुधाङ्य-
माङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहद्विषदुषद्रुहदुहयुजा
क्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च घिनुण् स्यात् संपर्की अनुरोधी आयामी

आयासी परिसारी संसर्गी परदेवी संज्वारी परिक्षेपी परिराटी परिवादी परिदाही परिमोही दोषी द्वेषी द्रोही दोही
योगी आक्रीडी विवेकी त्यागी रागी भागी अतिचारी अपचारी आमोषी अभ्याघाती वौ कषलसकत्थस्रंभः
विकाषी विलासी विकत्थी विस्रंभी अपे च लषः चाहो अपलाषी विलाषी प्रे लपसृद्रुमथवदवसः प्रलापी
प्रसारी प्रद्रावी प्रमाथी प्रवादी प्रवासी निंदहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषा
सूञोवुञ् पंचम्यर्थे प्रथमा एभ्यो वुञ् स्यात् निंदकः हिंसकः इत्यादि ण्वुलासिद्धे वुञ्वचनं ज्ञापकं तच्छीलादि
षु वासरूपन्यायेन तृजादयो नेति देविक्रुशोश्चोपसर्गे आदेवकः आक्रोशकः उपसर्गे किं देवयिता क्रोष्टा चल
नशब्दार्थादकर्मकाद्युच् चलनार्थाच्छब्दार्थाच्च युच् स्यात् चलनः चोपनः कंपनः शब्दनः रवणः अक
र्मकात्किं पठिता विद्या अनुदात्तेतश्च हलादेः अकर्मकाद्युच् स्यात् वर्त्तनः वर्द्धनः अनुदात्तेतः किं भविता
हलादेः किं एधिता अकर्मकात्किं वसिता वस्त्रं जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः जुइति सौत्रो
धातुः गतौ वेगे च जवनः चंक्रमणः दंद्रमणः सरणः पूर्वेणासिद्धे पदिग्रहणं लषपतपदेत्युकञा बाधा माभू
दिति तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति तेनालंकृञस्तन्न क्रुधमंडार्थेभ्यश्च क्रोधनः रोष
णः मंडनः भूषणः नयः यकारांताद्युच् न स्यात् क्नूयिता क्ष्मायिता सूददीपदीक्षश्च युज् न सूदिता दीपि
ता दीक्षिता नमिकंपीति रेणयुचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रा
यिकमिति तेन कम्राकमना युवतिः कंप्राकंपना शाखा वा यदि सूदेर्युज् न कथं मधुसूदनः नंद्यादिः लषप
तपदस्थाभूवृषहनकमगमशॄभ्य उकञ् लाषुकः पातुकः इत्यादि जल्पभिक्षकुट्टलुंटवृङः षाकन्

जल्पाकः भिक्षाकः कुट्टाकः लुंटाकः वराकः वराकी प्रजोरिनिः प्रजवी प्रजविनौ जिदृक्षिविश्रीण्वमाव्य
थाभ्यमपरिभूप्रसूभ्यश्च जयी दरी क्षयी विश्रयी अत्ययी वमी अव्यथी अभ्यमी परिभवी प्रसवी स्पृ
हिगृहिपतिदयिनिद्रातंद्राश्रद्धाभ्य आलुच् आद्यास्त्रयश्चुरादावदंताः स्पृहयालुः गृहयालुः पतयालुः
दयालुः निद्रालुः तत्पूर्वोद्रा तदोनांतत्वं निपात्यते तन्द्रालुः शीङो वाच्यः शयालुः दाधेट्सिशदसदोरुः
दारुः धारुः सेरुः शद्रुः सद्रुः सृघस्यदः क्मरच् सृमरः घस्मरः अद्मरः भंजभासमिदो घुरच् भंगुरः भासु
रः मेदुरः विदिभिदिच्छिदेः कुरच् विदुरः भिदुरं छिदुरः इण्नशजिसर्तिभ्यः क्वरप् इत्वरः इत्वरी नश्वरः
जित्वरः सृत्वरः गत्वरश्च गमेरनुनासिकलोपो निपात्यते गत्वरः गत्वरी जागरूकः जागर्तेरूकः स्या
त् जागरूकः यजजपदशां यङः एभ्यो यङंतेभ्य ऊकः स्यात् दशामिति भाविनानलोपेन निर्देशः
यायजूकः जंजपूकः दंदशूकः नमिकंपिस्म्यजसकमहिंसदीपो रः नम्रः कंप्रः स्मेरः जसिर्नञ्पूर्वः
क्रिया सातत्ये वर्तते अजस्रं सततमित्यर्थः कम्रः हिंस्रः दीप्रः सनाशंसभिक्ष उः चिकीर्षुः आशंसुः
भिक्षुः विंदुरिच्छुः वेत्तेर्नुम् इषेश्छत्वं च निपात्यते वेत्ति तच्छीलो विंदुः इच्छतीतीच्छुः क्याच्छंदसि
देवान् जिगातिसुम्नयुः आदृगमहनजनः किकिनौ लिट् च आदंतादृदंताद्गमादिभ्यश्च किकिनौ स्तः छं
दसि तौ च लिड्वत् बभ्रिर्वज्रं पपिः सोमं ददिर्गाः जग्मिर्युवा जघ्निर्वृत्रममित्रियं जज्ञिः भाषायां धाञ्
कृसृगमिजनिनमिभ्यः दधिः चक्रिः सस्रिः जग्मिः जज्ञिः नेमिः सासहिवावहिचाचलिपापतीनामु
पसंख्यानं यङंतेभ्यः सहत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते स्वपितृषोर्नजिङ् स्वप्नक् तृ

ष्णाक् तृष्णजौ तृष्णजः धृषेश्चेतिवाच्यमिति काशिकादौ धृष्णक् शॄवंद्योरारुः शरारुः वंदारुः भियः क्रुक्कु
कनौ भीरुः भीलुकः क्रुकन्नपिवाच्यः भीरुकः स्थेशभासपिसकसोवरच् स्थावरः ईश्वरः भास्वरः पेस्व
रः कस्वरः यश्चयङः यातेर्यङंतात् वरच् स्यात् अतोलोपः तस्ययलोपं प्रतिस्थानिवत्वनिषेधात्
लोपोव्योर्वलीतियलोपः अल्लोपस्यस्थानिवत्वमाश्रित्यातोलोपेप्राप्तेवरेलुप्तंनस्थानिवत् यायावरः भ्रा
जभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् विभ्राट् भाः भासौ धूः धुरौ विद्युत् ऊर्क् पूः पुरौ दृशि ग्र
हणस्यापकर्षाज्जवतेर्दीर्घः जूः जुवौ ग्रावशब्दस्यधातुनासमासः सूत्रेनिपात्यते ततः क्विप् ग्रावस्तुत्
अन्येभ्योऽपिदृश्यते क्विप् छिद् भिद् दृशिग्रहणंविध्यंतरोपसंग्रहार्थं क्वचिद्दीर्घः क्वचिदसंप्रसारणं क्व
चित्द्वे क्वचिध्रस्वः तथाचवार्तिके क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणांदीर्घोऽसंप्रसारणंच क्विब्वची
त्यादिसूत्रेण केषांचित्सिद्धेतच्छीलादौ तृनाबाधामाभूदितिवार्तिकेग्रहणंवक्तिइतिवाक् पृच्छतिइतिप्रा
ट् आयतंस्तौतीतिआयतस्तूः कटंप्रवतेकटप्रूः जूरुक्तः श्रयतिहरिंश्रीः द्युतिगमिजुहोतीनांद्वेच दृशि
ग्रहणादभ्याससंज्ञा दिद्युत् जगत् जुहोतेर्दीर्घश्च जुहूः दृभये अस्यन्हस्वश्च दीर्यतीतिदद्दृत् ध्यायतेःसं-
प्रसारणंच धीः भुवःसंज्ञायांतरयोः मित्रभूर्नामकश्चित् धनिकाधमर्णयोरंतरेयस्तिष्ठतिविश्वासार्थे
सप्रतिभूः विप्रसंभ्योड्वसंज्ञायां एभ्योभुवोडुःस्यान्नतुसंज्ञायां विभुर्व्यापकः प्रभुःस्वामी संभुर्जनिता
संज्ञायांतुविभुर्नामकश्चित् मितंद्र्वादिभ्यउपसंख्यानं मितंद्रवतीतिमितद्रुः शंभुः अंतर्भावितण्यर्थोऽ
त्रभवतिः धःकर्मणिष्ट्रन् धेटोधाञश्चकर्मण्यर्थेष्ट्रन्स्यात् धात्रीजनन्यामलकी वसुमत्युपमातृषु

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे दाबादेः ष्ट्रन्स्यात् करणेऽर्थे दात्यनेनदात्रं नेत्रं
तितुत्रतथसिसुसरकसेषुच एषां दशानां कृत्प्रत्ययानामिण्नस्यात् शस्त्रम् योत्रम् योक्त्रं स्तोत्रं तोत्रं सेत्रं
सेक्त्रं मेढ्रं पत्रं दंष्ट्रा नध्री हलसूकरयोः पुवः पूङ्पूञोः करणे ष्ट्रन्स्यात् तच्चेत्करणं हलसूकरयोरवयवः ह
लस्यसूकरस्यवापोत्रंमुखमित्यर्थः अर्तिलूधूसूखनसहचर इत्रः अरित्रं लवित्रमित्यादि पुवः संज्ञायां
पवित्रं येनाज्यमुत्पूयते यच्चानामिकावेष्टनं कर्तरिचर्षिदेवतयोः पुवइत्रः स्यादृषौ करणे देवतायां कर्त्तरि
ऋषिर्वेदमंत्रः तदुक्तमृषिणेतिदर्शनात् पूयतेऽनेनेतिपवित्रं देवतायांतु अग्निः पवित्रंसहमापुनातु अशो
णादयः कृवापाजिमिस्वदिसाध्यशूभ्यउण् करोतीतिकारुः शिल्पीकारकश्च आतोयुक् वातीतिवायुः पा
युर्गुदं जयत्यभिभवतिरोगानितिजायुरौषधं मिनोतिप्रक्षिपतिदेहेऊष्माणमितिमायुः पित्तं स्वादुः साध्नोति
परकार्यमितिसाधुः अश्नुतेः आशुःशीघ्रं आशुर्व्रीहिः पाटलः स्यात् छंदसीणः मानस्तोकेतनयेमानआयौ
दसनिजनिचरिचटिभ्योञुण् दीर्यतइतिदारुः सुप्रस्थः सानुरस्त्रियां जानु जानुनी इहजनिवध्योश्चेतिन-
निषेधः अनुबंधद्वयसामर्थ्यात् चारुरम्यं चाटुप्रियवाक्यं मृगय्वादित्वात्कुप्रत्ययेचटुइत्यपिकिंजरयोः श्रि
णः किंश्रृणातीतिकिंशारुः सस्यशूकंबाणश्च जरामेतिजरायुः गर्भाशयः त्रोरश्चलः तरंत्यनेनवर्णाइतिता
लु कृकेवचःकश्च कृकेनगलेनवक्तीतिकृकवाकुः कृकवाकुर्मयूरेचसरटेचरणायुधेइतिविश्वः भृमृशी
तृचरित्सरितनिधनिमिमस्जिभ्यउः भरतिबिभर्तिवाभरुः स्वामीहरश्च म्रियंतेऽस्मिन्भूतानिमरुः निर्जल
देशः शेतेशयुरजगरः तरुर्वृक्षः चरंतिभक्षयंतिदेवताइममितिचरुः त्सरुः खड्गादिमुष्टिः तनुःस्वल्पं स्त्रि

यांमूर्तिस्तनुस्तनूः धनुःशस्त्रविशेषः धनुषांच धनुर्विदुः धनुरिवाजनि वक्रमिति श्रीहर्षः मयुः किन्नरः मद्गुः पानीयकाकिकेतिरभसः न्यङ्क्वादित्वात्कुः जश्त्वेन सस्य दः अणश्च लवलेशकणाणवः चात्कटिवदिस्यां कटतिरसानां कटुः वटतीतिवटुः धान्येनित् धान्येवाच्येऽणाउप्रत्ययः स्यात्सचनित्नित्वादाद्युदात्तः प्रियंगवश्चसेऽणावश्चमे व्रीहिभेदस्त्वणुः पुमान् नित्ग्रहणंफलिपाटीत्यादिसूत्रमभिव्याप्यसंबध्यते शॄस्वस्निहित्रप्यसिवसिहनिक्लिदिबंधिमनिभ्यश्च शृणातीतिशरुः शरुरायुधकोपयोः स्वरुर्वज्रं स्नेहुर्व्याधिः चंद्रइत्यन्ये त्रपुसीसं पुंसिभूम्न्यसवःप्राणाः वसुन्हृदेऽग्नौयोक्त्रेऽशौवसुतोयेधनेमणौ हनुर्वक्त्रैकदेशः क्लेदुश्चंद्रः बंधुः मनुः चाद्धिदिअवयवे बिंदुः स्यंदेः संप्रसारणंधश्च देशेनदविशेषेऽब्धौसिंधुर्नासरितिस्त्रियामित्यमरः उंदेरिच्चादेः उनत्तिइंदुः ईषेःकिच्च ईषेरुःस्यात्सचकित् आदेरिकारादेशश्च ईषतेहिनस्तिइषुःशरः इषुर्द्वयोः स्कंदेःसलोपश्च कंदुः सृजेरसुम्च चात्सलोपउप्रत्ययश्च रज्जुः कृतेराद्यंतविपर्ययश्च ककारतकारयोर्विनिमयः तर्कुःसूत्रवेष्टनं नावंचेः न्यंक्वादित्वात्कुत्वं नियतमंचतिन्यंकुर्मृगः फलिपाटिनमिमनिजनांगुक्पटिनाकिधतश्च फलेर्गुक् फल्गु पाटेःपटिः पाटयतीतिपटुः नम्यतेऽनेननाकुः वल्मीकं मन्यतेइतिमधु जायतेइतिजतु वलेर्गुक्च वलसंवरणे वल्गु श्यःकित्सन्वच्च श्यतेरुःस्यात्सचकित्सन्वच्च शिशुर्बालः यातेर्द्वेच यियुरश्वोऽश्वमेधीयः सन्वदितिप्रकृतेत्वेग्रहणमित्वनिवृत्त्यर्थं कुर्भ्रश्च बभ्रुर्मन्यंतरेविष्णौबभ्रूनकुलपिंगलौ चादन्यतोऽपि चक्रुः कर्ताज घ्नुर्हंता पयुःपालकः पृभिदिव्याधिगृधिधृषिभ्यः कुः स्यात् पुरुः भिनत्तिइतिभिदुर्वज्रं ग्रहिज्येतिसंप्रसारणं विरहिणंविध्यतीतिविधुः विधुःशशांकेकर्पूरेत्हृषीकेशेचराक्षसे गृधुःका

मः धृषुर्दक्षः कृग्रोरुश्च करोतीति कुरुः गृणातीति गुरुः अपङ्गुः कृषुस्थः सुषामादिषु चेति षत्वं अग्रष्टुमति कू
लं इष्टु सुष्टु रपेरिच्चोपधायाः अनिष्टं रपतीति रिपुः अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक् धुक्दीर्घहकार
श्च अर्जयति गुणानृजुः सर्वाननविशेषेण पश्यतीति पशुः कंतुः अंधुः कूपः पांशुर्नोनद्येयोरजः तालव्या अपि
दंत्याश्च संबसूकरपांसवः बाधनइति बाहुः स्त्रीपुंसयोर्भुजः पथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च त्रयाणां
कुः संप्रसारणं भ्रस्जेः सलोपश्च पृथुः मृदुः न्यंक्वादित्वात्कुत्वं भृज्जनिनतपसाइति भृगुः लंघिबंह्योर्नलोपश्च
लघुः बालमूललघ्वलमंगुलीनां वालोरत्वमापद्यते रघुर्नृपभेदः बहुः ऊर्णोतेर्नलोपश्च ऊरुः सक्थि महद्
ति न्हस्वश्च उरु महत् श्लिषेः कश्च श्लिष्यतीति श्लिकुः भृत्यः उद्यतो ज्योतिश्च आङ्परयोः खनिशृभ्यां डिच्च
आखनतिइत्याखुः परंशृणातीति परशुः पृषोदरादित्वाद कारलोपात्सर्शुरपि हरिमितयोर्द्रुवः हरिभिर्द्रूयते
हरिद्रुर्वृक्षः मितंद्रवतीति मितद्रुः समुद्रः शतेच शतधाद्रवतीति शतद्रुः बाहुलकात्केवलादपि द्रवत्यूर्ध्वमि-
ति द्रुर्वृक्षः शाखा च तद्वान् द्रुमः खरुशंकुपीयुनीलंगुलिगु पंचैते कुप्रत्ययांता निपात्यंते खनतेरेफश्चांतादेशः
खरुः कामः क्रूरो मूर्खः अश्वश्च शंकुर्नाकीलशल्ययोः पिबतेरीत्वं युगागमश्च पीयुर्वायसः कालः सुवर्णं च
निपूर्वाल्लिगिगतावित्यस्मात्कुर्नेर्दीर्घश्च नीलंगुः कृमिविशेषः शृगालश्च नीलांगुइति पाठांतरं तत्र धातोर
पि दीर्घः लगेसंगे अस्यअतइत्वं च लगतीति लिगुश्चित्तं लिगुर्मूर्खः मृगय्वादयश्च एते कुप्रत्ययांता निपात्यंते
मृगंयातीति मृगयुर्व्याधः देवयुर्धार्मिकः मित्रयुर्लोकयात्राभिज्ञः आकृतिगणोऽयं मंदिवाशिमथिचति
तंक्यंकिभ्यउरच् मंदुरा वाजिशाला वाशुरा रात्रिः मथुरा चतुरः चंकुरो रथः अंकुरः खर्जूरादित्वादं कूरोऽपि

व्यथेः संप्रसारणं किच्च विथुरश्चोररक्षसोः मुकुरदर्दुरौ मुकुरो दर्पणः बाकुलकाम्मकुरोऽपि दृ विदारणे धातो
र्दुत्वमभ्यासस्य रुक्तुटिलोपश्च दर्दुरस्तोयदे भेकेवाद्यभांडाद्रिभेदयोः दर्दुरा चंडिकायां स्यात् ग्रामजाले च
दर्दुरमिति विश्वः मुद्गरादयश्च उरजंता निपात्यंते माद्यतेर्गुक् मद्गुरो मत्स्यभेदः कर्बु वर्णे रुगागमः कर्बुरश्चि
त्ररक्षसोः बध्नातेः खर्जूरादित्वाद्दूरोऽपि बंधूरबंधुरौ स्यातां नम्रसुंदरयोस्त्रिषु इति रंतिदेवः कोकतेर्वा कुकु
कुक्कुरः कुकुरः असेरुरन् असुरः प्रज्ञाद्यण् आसुरः मसेश्च पंचमे पादे मसेरूरन्निति वक्ष्यते मसूरा मसुरा व्री
हिप्रभेदे पण्ययोषिति मसुरा च मसूरो च द्वाविति विश्वः शावशेराप्तौ शृ इत्याश्चर्ये श्वशुरः अविमह्योष्टिष
च् अविषः महिषः अमेर्दीर्घश्च आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि रुहेर्वृद्धिश्च रंकुशंबरयोर्ह
षाः तवेर्णिद्वा तवेति सौत्रो धातुः तविषताविषावब्धौ स्वर्गे च स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च त
विषी बलमिति वेदभाष्यं नञि व्यथेः अव्यथिषोऽब्धिसूर्ययोः अव्यथिषी धरारात्र्योः किलेर्बुकुच किल्बिषं इ
षिमदिमुदिखिदिच्छिदिभिदिमंदिचंदितिमिमिहिमुहिमुचिरुधिबंधिशुषिभ्यः किरच् इषिरोऽग्निः मदिरा सुरा
मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ खिदिरश्चंद्रः छिदिरोऽसिकुठारयोः भिदिरं वज्रं मंदिरं गृहं स्त्रियाम
पि मंदिरा चंदिरो चंद्रहस्तिनो तिमिरं तमः अक्षिरोगश्च मिहिरः सूर्यः मुहिरः कामिमूर्खयोः मुचिरो दाता रु
चिरं रुधिरं बधिरः शुष शोषणे शुषिरं छिद्रं शुष्कमित्यन्ये अशोर्णित् आशिरो वन्हिरक्षसोः अजिरशशिरशि
थिलस्थिरस्फिरस्थविरखदिराः अजेर्व्यभावः अजिरमंगणं शशेरुपधाया इत्वं शशिरः स्याद् द्रुतोर्भेदे तुषारे
शीतलेऽन्यवत् श्रथ मोचने उपधाया इत्वं रेफलोपः प्रत्यये रेफस्य लत्वं शिथिलं स्थास्फाय्योष्टिलोपः स्थिरं

निश्चलं स्फिरंप्रभूतं तिष्ठतेर्वुक्न्ह्रस्वत्वंच स्थविरः खदिरः बाहुलकाच्छीडोबुकून्ह्रस्वत्वंच शिबिरं सलिकल्यनि
महिभडिभंडिशंडिपिंडितुंडिकुकिभूभ्यइलच् सलतिगच्छतिनिम्नमितिसलिलं कलिलः अनिलः महिला पृ
षोदरादित्वान्महेलापि भडइतिसौत्रोधातुः भडिलोभूरसेवको भंडिलोदूतः कल्याणंच शंडिलोमुनिः पिंडिलो
गणकः तुंडिलोमुरवरः कोकिलः भविलोभव्यः बाहुलकात्कुटिलः कमेःपश्च कपिलः गुपादिभ्यःकित् गुपि-
लोराजा निजिलोनिशाकरः गुहिलंवनं मिथिलादयश्च मथ्यंतेरिपवोऽस्यांमिथिलानगरी पथिलः पथिकः प
तिकठिकुठिगडिगुडिदंशिभ्य एरक् पतेरःपक्षीगंताच कठेरः कृच्छ्रजीवी कुठेरःपर्णाशः बाहुलकान्नुम्न गडेरो
मेघः गुडेरोगुडकः दशेरोहिंस्रः कुंबेर्नलोपश्च कुबेरः शदेस्तच शतेरःशत्रुः मूलेरादयश्च एरगंतानिपात्यंते मू
लेरोजटा गुधेरोगोप्ता गुहेरोगोलघातकः मुहेरोमूर्खः कबेरोतच्पश्च कपोतःपक्षी भातेर्डवतुः भातीति
भवान् कठिचकिभ्यामोरन् कठोरश्चकोरः किशोरादयश्च किंपूर्वस्यश्रृणातेष्टिलोपः किमोऽत्यलोपश्चकि
शोरोऽश्वशावः सहोरः साधुः कपिगडिगंडिकटिपटिभ्यओलच् कपीतिनिर्देशान्नलोपः कपोलः गडोलगं
डोलौगुडकपर्यायौकटोलः कटुः पटोलः मीनातेरूरन् मयूरः स्यंदेः संप्रसारणंच सिंदूरः सितनिगमिमसि-
सच्यविधाञ्क्रुशिभ्यस्तुन् सिनोतीतिसेतुः तितुत्रेतिनेट् नंतुः गंतुः मस्तुदधिमंडं सच्यतइतिसक्तुः अर्थे
वादिः ज्वरज्वरेत्यूठ् तत्रकिडितीत्यनुवर्ततइतिमतेतु बाहुलकात् ओतुर्बिडालः धातुः क्रोष्टुः पः किञ्च पिबतीति
पितुः पितुर्वन्हो दिवाकरे अर्तेश्चतुः अर्तेस्तुःस्यात्सचकित् ऋतुःस्त्रीपुष्पकालयोः कमिमनिजनिगाभायाहि
भ्यश्च एभ्यःस्तुःस्यात् कंतुः कंदर्पचित्तयोः मंतुरपराधः जंतुःप्राणी गातुःपुंस्कोकिलेभृंगेगंधर्वेगायनेपिच

भानुरादित्यः यातुरध्वगकालयोः रक्षसि क्लीबे च हेतुः कारणं चायः कीः केतुर्ग्रहपताकयोः आप्नोतेर्ह्रस्वश्च अ
पुः शरीरं वसेस्तुन् वस्तु अगारे णिच्च वेश्म भूर्वास्तुरस्त्रियां कृञः क्रतुः क्रतुर्यज्ञः एधिवह्योश्चतुः एधतुः पु
रुषः वहतुरनड्वान् जीवेरातुः जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे आतृकन् वृद्धिश्च जीवेरित्येव जै
वातृकस्तिंडुभिषगायुष्मत्सु रुषी बले कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः कर्षूः पुंसि करीषाग्नौ कर्षूर्न
द्यां स्त्रियां मता चमूः तनूः धनूः शस्त्रं सर्ज अर्जने सर्जूर्वणिक् खर्ज व्यथने खर्जूः पामा मृजेर्गुणश्च मर्जूः
शुद्धिकृत् वहो धश्च वधूर्जायास्नुषास्त्रीषु कषेश्छश्च कच्छूः पामा णित्कसिपद्यर्तेः कासूः शक्तिः पादूश्चर
णधारिणी आरूः पिंगलः आणोडश्च आडूर्जलप्लववद्द्रव्यं नञि लंबेर्नलोपश्च तुंब्यलाबूः अभेस मरत्समरः के
श्च एरङ् चास्य कशब्दे उपपदे शृणातेः रूः स्यादेरङ् चादेशः कशेरुस्तृणकंदे स्त्री बाहुलकादप्रत्यये कशेरु
क्लीबे पुंसि च त्रो डुट् च तरतेः रूः स्यात्तस्य डुट् तर्दूः स्याद्दारुहस्तकः दरिद्रातेर्यालोपश्च दश्च आश्चयोतस्यो
र्लोपः दर्द्रूः कुष्ठभेदः नृतिशृध्योः कूः नृतूर्नर्तकः शृधूरपानं ऋतेरम् च ऋदिति सौत्रो धातुः ततः कूः रमागमश्च
तनूर्देवनदी सत्यवाक् च अंडू हंभू जंबू कफेलू कर्कंधू दिधिषूः एते कूप्रत्ययान्ता निपात्यन्ते अंडूर्बंधनं दभिग्र
थे निपातनान्नुम् हंभूः अनुस्वाराभावो निपातनादित्येके हन्भूः जनेर्बुक् जंबूः जमु अदने अस्येत्येके बाहु
लकाद्ध्रस्वोऽपि जंबुः कफं लातीति कफेलूः श्लेष्मातकः निपातनादेत्वं कर्कं दधातीति कर्कंधूर्बदरी निपात
नान्नुम् दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः केचित्तु अंडू हंफू जंबू कंबू इति पठन्ति हंफ उत्क्लेशे हंफूः सर्प
जातिः कमेर्बुक् कंबूः परद्रव्यापहारी मृग्रोरुतिः मरुत् गरुत् पक्षः ग्रो मुट् च गिरतेरुतिः स्यात्तस्य च मुट् गर्मुत्

कवर्णतृणविशेषश्च हृषेरुलच् हर्षुलो मृगकामिनोः बाहुलकाच्चटतेः चटुलं शोभनं त्वसरुहियुषिभ्य
इतिः हरित्कुम्भिवर्णे च तृणवाजिविशेषयोः सरिन्नदी रोहिन्मृगविशेषस्य स्त्री युषइति सौत्रो धातुः
ऋषस्य रोहित् पुरुषस्य योषिदिति भाष्यं ताडेर्णिलुक्च ताडयति इति तडित् विद्युत् शमेर्ढः बाहुलका
दित्संज्ञा एयादेश इट् च न शंढः क्लीबः कमेरठः कमठः बाहुलकाज्जरठः रमेर्हिद्धिश्च रामठं हिंगु शमेः खः
शंखः कणेष्ठः कंठः कलस्तृपश्च तृपतेः कलप्रत्ययः चात्तृफतेः तृपला लता तृफला स्यात्फलत्रिके शपेर्बश्च
शबलः वृषादिभ्यः कित् वृषलः पललं बाहुलकाद्गुणः सरलः तरलः कमेर्बुक् कंबलः मुसखंडने मुसलं लंगे
र्वृद्धिश्च लांगलं कुटिकशि कौतिभ्यः प्रत्ययस्य मुट् कुट्मलः कुडेरपि कुड्मलः कश्मलं बाहुलकाद्गुणः कोम
लं मृजेष्टिलोपश्च मलं चुपेरच्चोपधायाः चपलः शकिशम्योर्नित् शकलं शमलं छो गुक् ह्रस्वश्च छगलः प्र
ज्ञादित्वाच्छागलः अमन्ताड्डः दंडः रंडा खंडः मंडः वंडश्छिन्नहस्तः अंडः बाहुलकात्सत्वाभावः षंडः संघातः
तालव्यादिरित्यपरे गंडः चंडः षंडः क्लीबः पंडा बुद्धिः क्रादिभ्यः कित् कवर्गादिभ्यो डः स च कित् कुंडं कांडं गुडः
घुणभ्रमणे घुंडो भ्रमरः स्थाचतिमृजेरालज्वालजालीयचः तिष्ठतेरालच् स्यात् स्थालं स्थाली चतेर्वालञ् चा
त्वालः मृजेरालीयच् मार्जालीयो बिडालः पतिचंडिभ्यामालञ् पातालं नागलोके स्याद्विवरे वडवानल इति
मेदिनी चंडालः प्रज्ञादित्वादणि चांडालोऽपीत्येके तमिविशिबिडिमृणिकुलिकपिपलिपंचिभ्यः कालन् त
मालः विशालः बिडालः मृणालं कुलालः कपालं पलालं पंचाली पतेरंगच् पक्षिणी पतंगः तरत्यादिभ्यश्च तरंगः
लवंगं बिडादिभ्यः कित् बिडंगं मृदंगः कुरंगः बाहुलकाद्गुलंगस्य जोर्वृद्धिश्च सारंगः वारंगः खड्गादिमुष्टिः गन्धाम्यधोः गंगा

अह्ना पुरोडाशः छापूखडिभ्यः कित् छागः पूगः खड्गः बाहुलकात् षिट अनादरे गन्सत्वाभावश्च षिड्गस्तरलः षि
डेगरगद्यतससंभ्रममेवमेकेतिमायः भृञः किन्नुट् च भृङ्गो गन्धिः स्यात्तस्य नुट् च भृंगाः षिड्गालि धूम्याटाः शृ
णातेर्ह्रस्वश्च शृंगं गण शकुनौ नुट् चेत्यनुवर्तते शार्ङ्गः मुदिग्रोर्गग्गौ मुद्गः गर्गः अंडन्कृसृभृवृञः करंडः सरंडः
पक्षी भरंडः स्वामी वरंडो मुखरोगः शॄदृभसोदिः शरत् दरत् हृदयकूलयोः भसज्जघनं दृणातेः पुक् ह्रस्वश्च दृ
षत् त्यजितनियजिभ्यो डित् त्यद् तद् यद् सर्वादयः एतेस्तुट् च एतद् सर्तेरदिः सरट् स्याद्वातमेघयोः वेदभा
ष्ये तु याभिः कृशानुमिति मंत्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातं लंघेर्नलोपश्च लघट् वायुः पारयतेर
जिः पारक् स्वर्णे प्रथः किः संप्रसारणं च पृथक् स्वरादिपाठादव्ययत्वं भियः षुक् ह्रस्वश्च भिषक् पुष्यसिभ्यां
मदिक् पुषितिसौत्रो धातुः युष्मद् अस्मद् अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्यो मन् एभ्यश्च तु दशभ्यो
मन् अर्मश्चक्षूरोगः स्तोमः संघातः सोमः होमः समो र्गमनं धर्मः क्षेम कुशलं क्षोमं भज्ञाघणि क्षोमंच भागः
आदित्यः यामः वामः शोभनदुष्टयोः पद्मं यक्षपूजायां यक्ष्मो रोगराजः नेमः जहातेः सन्वदालोपश्च जिह्मः कुटि
लमंदयोः अवतेष्टिलोपश्च मन्प्रत्ययस्यायं टिलोपः नप्रकृतेः अन्यथा हि हिदित्येव ब्रूयात् ज्वरत्वरेत्यूठि तयो दी
र्घे कृते गुणः चादिपाठादव्ययत्वमित्युज्ज्वलदत्तः तन्न तेषामसत्वार्थत्वात् वस्तुतस्तु स्वरादिपाठादव्ययत्वं
अवतीत्योम् ओं प्रश्नेंऽगीकृतौ रोषतेतिविश्वः ग्रसेरा च ग्रामः अविसिविसिशुषिभ्यः कित् ऊमं नगरं स्यूमो रश्मिः
सिमः सर्वः शुष्मम् अग्निसमीपयोः इषियुधींधिदसिश्याधूसूभ्यो मक् इध्मः कामवसंतयोः ईषीति पाठे दीर्घादिः
युध्मः शरो योद्धा च इध्मः समित् दस्मो यजमानः श्यामः धूमः सूमोऽन्तरिक्षं बाहुलकाद्दीर्मंत्रणं युजिरुचि

तिजांकुश्च युग्मं रुक्मं तिग्मं हंतेर्हिंच हिमं भियःषुग्वा भीमः भीष्मः घर्मः घृधातोर्मक्गुणश्चनिपात्यते ग्रीष्मः ग्र
सतेर्निपातोऽयं प्रथेःषिवन्संप्रसारणंच पृथिवी षवन्नित्येके पृथवीपृथिवीपृथ्वीतिशब्दार्णवः अशुप्रुषिलटि
कणिखटिविशिभ्यः क्वन् अश्वः प्रुषुस्नेहनादौ प्रुष्वः स्याहृतुसूर्ययोः प्रुष्वाजलकणिका लट्वा पक्षिभेदः फलंवा
कण्वंपापं बहुलत्वादित्वेकण्वमपि खट्वा विश्वा इण्शीभ्यांवन् एवोगंता एवएवामरुतःस्मराणां असत्वे-
निपातोऽयं शेवंमित्रायवरुणायसर्वनिघृषरिषलषशिवपट्वप्रह्वेषोअतंत्रे अतर्कर्येतेनिपात्यंते सृतंविश्व
मनेनेतिसर्वः निपूर्वात्घृषेर्गुणाभावोऽपि निघृष्यतेऽनेनेतिनिघृषः खुरः रिष्वोहिंस्रः लष्वोनर्तकः लिषइत्य
न्ये तत्रोपधायाइत्वमपि शेतेऽस्मिन्सर्वमितिशिवःशंभुःशीङोह्रस्वत्वंच पट्वो रथोमूलोकश्च प्रह्वयतइति
प्रह्वः ह्वेञ्आकारवकारयोर्लोपः जहातेरालोपोवा ईर्षेर्वन् ईष्वआचार्यः इषइत्यन्ये अतंत्रेर्किं सत्तो सार
कः बाहुलकाप्सतेर्ह्रस्वः शेवयह्वजिह्वाग्रीवाप्वामीवा शेवइत्यंतोदात्तार्थं यात्यनेनयह्वः ह्रस्वोहुगागम
श्च लिहत्यनयाजिह्वा लस्यजः गुणाभावश्चगिरंत्यनयाग्रीवा ईडागमश्च आप्नोतीत्याप्वावायुः मीङ्मीवा
उदर कृमिः वायुरित्यन्ये कृगृश्रृदृभ्योवः कर्वः कामआखुश्च गर्वः शर्वः दर्वोराक्षसः कनिन्युवृषितक्षिराजिध
न्विद्युप्रतिदिवः योतीतियुवा वृषाइंद्रः तक्षा राजा धन्वा मरुत् धन्वशरासनं द्युवासूर्यः प्रतिदीव्यत्यस्मि
न्नितिप्रतिदिवादिवसः सप्यशूभ्यांतुट्च सप्त अष्ट नञिजहातेः अहः श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्मूर्धन्मज्जन्न-
र्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति एतेत्रयोदशकनिन्प्रत्ययांतानिपात्यंते श्वयतीतिश्वा उक्षा पू
षा प्लिहगतौ इकारस्यदीर्घत्वंच प्लेहतीतिप्लीहा कुक्षिव्याधिः क्लिदूआर्द्रीभावे क्लिद्यति क्लेदाचंद्रः स्निह्यतेर्गुणः

स्नित्यनीनिस्नेहा स्फत्त्द्वंद्वश्च सुत्यंत्यस्मिन्नाहतेमूर्द्धा मुहेरुपधादीर्घः धोंऽतादेशोरमागमश्च मज्जत्यस्थिषुमज्जा
अस्थिसारः अर्यपूर्वोमाङ् अर्यमा विश्वंप्सातिविश्वप्साअग्निः परिजायतेपरिज्माचंद्रोऽग्निश्च जनेरुपधालोपोमश्चां
तादेशः मातरिश्वंतरिक्षेश्वयतिमातरिश्वा धातोरिकारलोपः महपूजायांमहस्यघः अवुगागमश्च मघवाइंद्रः इ
त्युणादिषुप्रथमःपादः हृहम्यामेणुः करेणुः हरेणुर्गंधद्रव्यं हनिकुषिनीरमिकाशिभ्यः क्थन् हतोविषाणंकुष्ठः
नीथोनेता रथः काष्ठं अवेभृञः अवभृथः उषिकुषिगार्तिभ्यस्थन् ओष्ठः कोष्ठं गाथा अर्थः बाहुलकात् शोथः स
र्तेर्णित् सार्थः समूहः जॄवृञ्भ्यामूथन् जरूथंमांसं वरूथोरथगुप्तौना पातॄतुदिवचिरिचिसिचिभ्यस्थक् पीन
थोरविर्घृतंपीथं तीर्थंशास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु अवतारर्षिजुष्टाभःस्त्रीरजः सुचाविश्रुतमितिविश्वः
तुत्थोऽग्निः उक्थंसामभेदः रिक्थं बाहुलकाद्दचेरपि रिक्थमृक्थंधनंवसु सिक्थं अर्तेर्निरि निर्ऋथंसाम निशी
थगोपीथावथाः निशीथोमध्यरात्रः रात्रिमात्रंच गोपीथंतीर्थं अवगथः प्रातस्नातः गश्चोदि उद्गीथः साम्नोभा
वविशेषः समीणः समिथः वह्निः संग्रामश्च तिथपृष्ठगूथयूथप्रोथाः तिजेर्जलोपः तिथोऽनलः कामश्च पृष्ठं गूथं
विष्ठा यूथः समूहः प्रोथमस्त्रीतुरंगास्येप्रोथः प्रस्थितउच्यते स्फायितंचिवंचिशकिक्षिपिक्षुदिसृपितृपिदृपिवं
घुंदिश्विंतिवृत्यजीनीपदिमदिमुदिखिदिछिदिभिदिमंदिचंदिदहिदसिदंभिवसिवाशिशीङ्हसिसिधिशुभि
भ्योरक् एतत्रिंशतोरक् स्यात् वलियलोपः स्फारं न्यंक्वादित्वात्कुत्वं तक्रं वक्रं शक्रः क्षिप्रं क्षुद्रः सृप्रश्चंद्रः तृप्रः
पुरोडाशः दृप्रोबलवान् वंद्रः पूजकः उंदी उंद्रोजलचरः श्वित्रंकुष्ठं वृत्रोरिपौ धनेध्वांतेशैलेचक्रेचदानवे अ
जेर्वी वीरः नीरं पद्रोग्रामः मद्रोहर्षः देशभेदश्च मुद्राप्रत्ययकारिणी खिद्रोरोगः दरिद्रश्च छिद्रं भिद्रं वज्रं मंद्रः

चंद्रः पचाद्यच् चंद्रोऽपि हिमांशुश्चंद्रमाश्चंद्र इंदुः कुमुदबांधवः शशी चंद्रो हिमद्युतिः दह्नोऽग्निः दस्रः श्वैर्वै
ध्यः दभ्रः समुद्रः स्वल्पं च वसेः संप्रसारणं नरपरसृपिसृजिस्पृशिस्पृहिसवनादीनां रेफपरस्य सकारस्य
सृप्यादीनां च मूर्धन्यो न स्यात् पूर्वपदादिति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया तेन शासिवसीति प्राप्तो
ऽपि न उस्रो रश्मिः उस्रा गौः वास्रो दिवसः वास्रं मंदिरं शीरः अजगरः हस्रो मूर्खः सिध्रः शक्त्रं मुसेरक् बाहुलका
त् मुस्रमश्रु चक्रिरम्योरुच्चोपधायाः चुक्रमाम्लद्रव्यं रुम्रोऽरुणः वोकसेः विकुस्रश्चंद्रः अमितम्योर्दीर्घश्च आ
म्रः ताम्रं निंदेर्नलोपश्च निद्रा अर्देर्दीर्घश्च आर्द्रं शुचेरीश्च शूद्रः दुरीणो लोपश्च दुःखेनेयते प्राप्यत इति दूरं कृ
तेश्छः कृच्च कृच्छ्रं क्रूरः रोदेर्णिलुक् च रोदयतीति रुद्रः बहुलमन्यत्रापि संज्ञाछंदसोः णिलुगित्येव वांति पर्णश
दो वातास्ततः पर्णमुचोऽपरे ततः पर्णरुहो वांति ततो देवः प्रवर्षति जोरीच्च जीरः खड्गः ज्यश्चेत्येके सुसूधाञ्गृधि
भ्यः क्रन् सुरः सूरः धीरः गृध्रः शुसिचिमीनां दीर्घश्च शुः सौत्रः शूरः सीरं चीरं मीरः समुद्रः वार्विधेः वीध्रं विमलं
वृधिवपिभ्यां रन् वर्ध्रं चर्म वप्रः प्राकारः ऋज्रेंद्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशक्रशक्लगौर
वन्नेरामालाः रन्नंता एकोनविंशतिः निपातनाद्गुणाभावः ऋज्रो नायकः इदि इंद्रः अंगेर्नलोपश्च अंग्रं वज्रोऽ
स्त्री हीरके पवौ डुवप् उपधाया इत्वं विप्रः कुबिचुंब्योर्नलोपश्च कुब्रमरण्यं चुब्रं मुखं क्षुरविलेखने रेफलोपः
गुणाभावः क्षुरः खुरछेदने रलोपो गुणाभावश्च खुरः भंदेर्नलोपश्च भद्रं उच समवाये चस्य गः उग्रः ञिभी भये
भेरी पक्षे लः भेलः भेलो जलतरणद्रव्यं शकेश्चस्य कः शक्रः पक्षे लः शक्लः गुङ् वृद्धिः गौरोऽरुणे सिते पीते व
नसंभक्तौ वन्नो विभागी इणो गुणाभावः इरा मद्ये च वारिणि मामाने माला समिकसउकन् कसगतौ सम्य

कसंति पलायते जना अस्मादिति संकसुकोदुर्जनः अस्थिरश्च पचिनशोर्णुकन्कनुमौ च पचेकः पाकुकः सूपकारः नशेर्नुम् नशुकः भियःक्रुकन् भीरुकः क्रुन्शिल्पिसंज्ञयोरपूर्वस्यापि रजकः इक्षुकुट्टकः चरकः चषभक्षणे चषकः शुनकः भषकः उदकं रमेरश्च लोवा रमकोविलासी लमकोवा जहातेर्द्वे च जहकस्त्यागी कालश्च ध्मोधमश्च धमकः कर्मकारः हनो वधश्च वधकः बहुलमन्यत्रापि कुहविस्मापने कुहकः कृतकं कृषेर्वृद्धिश्चोदीचां कार्षकः कृषकः उदकंच प्रपंचार्थमिदं वृश्चिकृषोः किकन् वृश्चिकः कृषिकः प्राङिपणिकषः प्रापणिकः पण्यविक्रयी प्राकषिकः परदारोपजीवी मुषेर्दीर्घश्च मूषिकआखुः स्यमेः संप्रसारणंच चाद्दीर्घः सीमिको वृक्षभेदः क्रियइकन् क्रयिकः क्रेता आङिपणिपनिपतिखनिभ्यः आपणिकः आपनिकः इंद्रनीलः किरातश्च आपतिकः श्येनो दैवायत्तश्च आखनिमूषिको वराहश्च श्यास्त्याहृञविभ्य इनच् श्येनः स्त्येनः हरिणः अविनोऽध्वर्युः वृजेः किच्च वृजिनं अजेरज च वीभावबाधनार्थं अजिनं बहुलमन्यत्रापि कठिनं नलिनं मलिनं कुडिनं घतेः यत्पुरुषिदिनं दिवसोऽपिदिनं द्रुदक्षिभ्यामिनन् द्रविणं दक्षिणः दक्षिणा अर्तेः किदिच्च इरिणंशून्यं वेपितुह्योर्ह्रस्वश्च विपिनं तुहिनं तलिपुलिभ्यांच तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु पुलिनं गर्वेरत उच्च गोरादित्वात् ङीष् गुर्विणी गर्भिणी रुहेश्च रोहिणः महेरिनण्च चादिनन् माहिनं महिनं राज्यं क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वांदीर्घोऽसंप्रसारणंच वाक् प्राट् श्रीः स्रवत्यतो घृतादिकमिति स्रूर्यज्ञोपकरणं द्रूर्हिरण्यं कटप्रूः कामरूपी कीटश्च जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियां आप्नोतेर्ह्रस्वश्च आपः अपः अद्भिः अद्भ्यः अपां अप्सु परौ व्रजेः षः पदांते व्रजेः क्विप्दीर्घोऽस्त्तः पदांते तु षश्च परिव्राट् परिव्राजौ हुवः श्लुवच्च जुहूः स्रुवः

कः स्रुवः चिक्कच इकारउच्चारणार्थः कइत् कुलं स्रुक् स्रुर्वच स्रुचश्चसमृदिद तनोतेरनश्चवः तनोतेश्चिकप्रत्ययः
अनोचशब्दादेशश्च त्वक् ग्लानुदिभ्यांडोः ग्लौः नौः च्चिरव्ययं डौरित्येव ग्लोकरोति रुन्भेजंतइति सिद्धेनियमार्थ
मिदं उणादिप्रत्ययांतश्चव्यंतएवेति रातेर्डैः राः रायौ गमेर्डोः गौर्नादित्येवलीवर्दैकिरणक्रतुभेदयोः स्त्रीतुस्या
द्दिशिभारत्यांभूमौचस्रूरभावपि भूस्त्रियोःस्वर्गवज्रांबुरश्मिदृक्बाणलोमसु बाहुलकाद्येतरपिडोः द्यौःस्त्रीस्व
र्गांतरिक्षयोः भ्रमेश्चडूः भ्रूः चातृगमेः अग्रेगूः दमेर्डोसिः दोः दोषौ वणेरिज्यादेशश्च वणिक् स्वार्थेणप् नैगमो
वाणिजोवणिक् वशःकित् उशिगग्नौघृतेऽपिच भ्रस्जउच्च भुरिक् भूमिः जसिसहोरुरिन् जसुरिर्वज्रं सहुरिरा
दित्यः पृथिवीच सुयुरुवृजोयुच्च्सवनश्चंद्रमाः यवनः रवणः कोकिलः वरणः अशेरशच अश्नोतेर्युच्स्या
द्रशादेशश्च रशनाकांची जिह्वावाचीतुदंत्यसकारवान् उंदेर्नलोपश्च ओदनः गमेर्गश्च गमेर्युच्स्यात्गश्चा
देशः गगनं बहुलमन्यत्रापि युच्स्यात् स्यंदनः रोचना रंजेःक्युन् रजनं भूसूधूभ्रस्जिभ्यश्छंदसि भुवनं
सुवनआदित्यः धुवनोवन्हिः निधुवनं रतं भृज्जनमंबरीषंकॄपृवृजिमंदिनिधाञ्भ्यःक्युः किरणः पुरणः
समुद्रः वृजनमंतरिक्षं मंदनं स्तोत्रं निधनं धृषेर्धिषच्चसंज्ञायां धिषणोगुरुः धिषणाधीः वर्तमानेपृषन्महत्
बृहज्जगच्छतृवच्च अतिप्रत्ययांतानिपात्यंते पृषुसेचने गुणाभावः पृषंति बृहत् महान् गमेर्जगादेशः जग
त् संश्चत्तृपद्वेहत् एतेनिपात्यंते पृथक्करणंशतृवद्भावनिवृत्त्यर्थं संचिनोतेः सुट्इकारलोपः संश्चत्कुहकः तृ
पच्छत्रं विपूर्वाद्धंतेष्टिलोपः इतएत्त्वं वेहत्गर्भोपघातिनी छंदस्यसानच्बृहूजृभ्यांशवसानः पंथाः जरसानः
पुरुषः ऋंजिवृद्धिमंदिसहिभ्यःकित् ऋंजसानोमेघः वृधसानः पुरुषः मंदसानोऽग्निर्जीवश्च सहसानोम

यूरोयज्ञश्च अतेरुर्गुणः शकृच्च अर्शसानोऽग्निः संम्यानश्चस्कवः संस्तवानोवाग्मी युधिबुधिदृशःकिच्च युधानः बु
धानः दृशानः लोकपालः हुर्च्छेःसनोलुक्छलोपश्च जुहुराणश्चंद्रमाः श्वितेर्दश्च शिश्विदानःपुण्यकर्मा तृनृतृ
नौशंसिक्षदादिभ्यः संज्ञायांचानिटौ शंसादिभ्यः क्षादादिभ्यश्च क्रमात्तृन्तृचौस्तः तौन्चानिटौ शंस्ता स्तोता शं
स्तरौ शंस्तरः क्षदिः सौत्रो धातुः शकलीकरणेभक्षणे चानुदात्तेत् शतंमेषान्वृक्येचक्षदानमितिमंत्रात् उ
क्षाणंवावेहतंवाक्षदंतेइतिब्राह्मणाच्च क्षत्तास्यात्सारथौ द्वास्थेवैश्यायामपिशूद्रजे बहुलमन्यत्रापि मन्मं
ताहन् हंता नप्तनेष्टृत्वष्टृक्षत्तृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ नपतंत्यनेनेतिनप्ता पौत्रोदौहित्रश्च
नयतेःषुक्गुणश्च नेष्टा त्विषेरित्वोत्वं त्वष्टा होता पोता भ्राजतेर्जलोपश्च भ्राता जायांमातिजामाता मानपू
जायां नलोपः माता पातेराकारस्येत्वं पिता दुहेस्तृच इट्गुणाभावश्च दुहितासावसेर्ऋन् स्वसा यतेर्वृद्धिश्च
याता भार्यास्तुभ्रातृवर्गस्ययातरः स्युःपरस्परं नञिचनंदेः ननंदति ननांदा इहवृद्धिर्नानुवर्त्ततइत्येके न
नांदानुस्वसापत्युर्ननंदानंदिनीचसा दिवेर्ऋः देवा देवरौ देवरः नयतेर्डिच्च ना नरौ नरः सव्येस्थश्छंदसि
अंबांबेत्यत्रस्थास्थिन्स्थूणामुपसंख्यानं सव्येष्ठासारथिः सव्येष्ठरौ अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः अ
एभ्योनिप्रत्ययःस्यात् अरणिरग्नेर्योनिः सरणिः धरणिः धमनिः अमनिः गतिः अशनिः अवनिः तरणिः
बाहुलकाद्रजनिः आङिशुषेःसनश्छंदसि आशुशुक्षणिरग्निर्वातश्च कृषेरादेश्चचः चर्षणिर्जनः अदेर्मु
ट्चअद्मनिरग्निः वृतेश्च वर्तनिः गोवर्द्धनस्तु चात्मुट् वर्त्मनिरित्याह क्षिपेःकिच्च क्षिपणिरायुधं अर्चि-
शुचिहुसृपिछदिछर्दिभ्यइसिः अर्चिर्ज्वाला इदंतोऽप्ययं अग्नेर्भ्राजंतोर्चयः शोचिर्दीप्तिः हविः सर्पिः इ

स्मन्निति न्हस्वः छदिः पटलं छर्दिर्वमनव्याधिः इदंतोऽपि छर्द्यतीसारभ्रूलवान् बृंहेर्नलोपश्च बर्हिर्नाकुशशुष्म
णोः द्युतेरिसिन्नादेश्चजः ज्योतिः वसोरुच्चेः संज्ञायां वसूरोचिर्यज्ञः भुवः कित् भुविः समुद्रः महोधश्च साधि
रनड्वान् पिबतेस्थुक् पाथिः चक्षुः समुद्रयोः जनेरुचिः जनुर्जननं मनेर्धश्छंदसि मधु अर्त्तिपृवपियजितनि
धनितपिभ्योनित् अरुः परुः ग्रंथिः वपुः यजुः तनुः तनुषी तनूंषि धनुरस्त्रियां धनु वंशविशेषेऽपि निर्गुणः
किंकरिष्यति सांतस्योदंतस्यवासरूपं तपुः सूर्याग्निशत्रुषु एतेर्णिच्च आयुः आयुषी चक्षेः शिच्च चक्षेः शि-
त्वात्सार्वधातुकत्वेन ख्याञ् न बाधः चक्षुः मुहेः किच्च मुहुरव्ययं बहुलमन्यत्रापि चक्षुषः परिचक्षुः कृ
गृशृवृञ्चतिभ्यः ष्वरच् कर्वरो व्याघ्ररक्षसोः गर्वरोऽहंकारी शर्वरारात्रिः वर्वरः मारुतो जनः चत्वरम् नौ
सदेः निषद्वरस्तकजं बालः निषद्वरारात्रिः इत्युणादौ द्वितीयः पादः छित्वरछत्वरधीवरपीवरमीवरचीवर
तीवरनीवरगह्वरकट्वरसंयद्वराः एकादशवरच्प्रत्ययांतानिपात्यंते छिदिरुछद अनयोस्तकारोऽन्तादेशः
छिदेर्गुणाभावश्च छित्वरो धूर्तः छत्वरो गृहकुंजयोः धीवरः कैवर्तः पीवरः स्थूलः मीवरोहिंसकः चिनोते
दीर्घश्च चीवरं भिक्षुकप्रावरणं तीवरो जातिविशेषः नीवरः परिव्राट् गाहतेर्न्हस्वत्वं गह्वरं कटेवर्षादेः क
ट्वरं व्यंजनं यमेर्दकारः संयद्वरो नृपः पदेः संपद्वर इत्येके इणसिञ्जिदीङुष्यविभ्यो नक् इनः सूर्येनृपेप
त्यौ सिनः काणः जिनोऽर्हन् दीनः उष्णः ऊनः फेनमीनौ एतौ निपात्येते स्फायतेः स्फेनः मीनः कृष्णेर्वर्णे
कृष्णः बंधेर्ब्रधिबुधी च ब्रध्नः बुध्नः धापॄवस्यज्यतिभ्यो नः धाना ध्याष्टयवे स्त्रियां पर्णं पत्रं पर्णः किंशुकः
वस्नो मूल्ये वेतने च अजेर्वी वेनः अल्प आदित्यः बाहुलकाच्छृणोतेः श्रोणः पंगुः लक्षेरट् च लक्षेश्नु

रादिण्यांतान्नःस्यात्तस्यआडागमश्च चान्मुडित्येके लक्ष्णं लक्ष्मणंनाम्निचिन्हेच लक्ष्णोलक्ष्मणश्चराम
भ्राता लक्ष्णाहंसस्ययोषायांसारसस्यतुलक्ष्मणा वनेरिच्चोपधायाः वेन्नानदीसिवेष्टेयूच् दीर्घोच्चारणसा
मर्थ्यान्नगुणः स्यूनआदित्यः बाहुलकात्केवलोनःऊठ् अंतरंगत्वाद्यण् गुणः स्योनः कृवृजृसिद्रुपन्यनिस्व
पिभ्योनित् कर्णःवर्णः जर्णश्चंद्रेचहरेच सेनाद्रोणः पन्नोनीचैर्गतिः अन्नमोदनः स्वप्नोनिद्रा धेटइच्च धे
नःसिंधुः धेनानदी तृषिशुषिरसिभ्यःकित् तृष्णा शुष्णः सूर्योवन्हिश्च रत्नंद्रव्यं रूजोदीर्घश्च सूनावध-
स्थानं रनेत्तच रमयतीतिरत्नं रास्नासास्नास्थूणावीणाः रास्नागंधद्रव्यं सास्नागोगलकंबलः स्थूणागृहस्तं
भः वीणावल्लकी गादाभ्यामिष्णुच् गोष्णुर्गायनः देष्णुःदाता रुत्सभूभ्यांकृत्नः कृत्स्नंअक्षणसखंडं तिजे
र्दीर्घश्च तीक्ष्णंश्लिषेरच्चोपधायाः श्लक्ष्णं यजिमनिशुंधिदसिजनिभ्योयुच् यज्युरध्वर्युः मन्युर्दैन्येक्रतौक्रु
धिशुंधि शुंध्युरग्निः दस्युस्तस्करः जन्युः शरीरी भुजिमृङ्भ्यांयुक्त्युकौ भुज्युर्भोजनं मृत्युः सर्तेरयुः सरयु
र्नदी अयूरितिपाठांतरं सरयूः पानीविषिभ्यःपः पातिरक्षत्यस्मादात्मानमितिपापं तद्योगात्पापः पुरुषः
वेपःपुरोहितः बाहुलकाद्गुणाभावोनीपोवृक्षविशेषः वेष्पः पानीयं च्युवःकिच्च च्युपोवक्त्रं स्तुवोदीर्घश्च
स्तूपः समुच्छ्रायः कुयुभ्यांनिच्च चात्किन् सूपः बाहुलकादुत्वं शूर्पं कुयुभ्यांच कुर्वंतिमंडूकाअस्मिन्नि
तिकूपः युवंतिबध्नंत्यस्मिन्पशुमितियूपोयज्ञस्तंभः खष्पशिल्पशष्पबाष्परूप पर्पतल्पाः ससपप्रत्ययां
तानिपात्यंते खनतेर्नकारस्यषत्वं खष्पः क्रोधबलात्कारौ शीलतेर्न्हस्वः शिल्पंकौशलं शसुहिंसायां-
निपातनात्षत्वं शष्पंबालतृणंप्रतिभाक्षयश्च बाधतेःपः बाष्पोनेत्रजलोष्मणोः बाष्पंच रौतेर्दीर्घः रू

पंस्वभावेसौंदर्ये पर्पं गृहं बालतृणं पंशुपीठंच तलप्रतिष्ठाकरणे श्रुरादिणिचोलुक् तल्पंशय्याट्टदारेषु स्तनि
हृषिपुषिमदिगदिभ्योणेरित्नुच् अयामंतेतिणेरयादेशः स्तनयित्नुः हर्षयित्नुः पोषयित्नुः गदयित्नुः वावदूकः
मदयित्नुः मदिरा कृहनिभ्यांकृत्नुः कृत्नुः शील्पी हत्नुर्व्याधिः शस्त्रंच गमेःसन्वच्चजिगत्नुः दाभाभ्यांनुः दानुः दा
ता भानुः वनेर्गश्च वग्नुः धेटइच्च धयतिस्तनानितिधेनुः सूवःकित् सूनुः पुत्रेऽनुजेरवौ जहातेर्द्वेतलोपश्च
जन्तुः स्थाणुः स्थाणुः कीलेस्थिरेहरे अजिवृरीभ्योनिच्च अजेर्वीवेणुः वर्णुर्नददेशभेदयोः रेणुर्द्वयोस्त्रियांधूलिः
विषेःकिच्च विष्णुः कृदाधारार्चिकलिभ्यःकः बाहुलकान्नकारस्येलं कर्कोधवलघोटकः दाकोदाता धाकोऽनड्वान्
आधारश्च राकापोर्णमासीअर्कः कल्कः पापाशयेपापेदंभेविट्किट्टयोरपि सृवृभूशुषिमुषिभ्यः कक् सृकउत्प
लवातयोः वृकश्वापदकाकयोः भूकं छिद्रं शुकं मुष्कोऽण्डकोशः शुकवल्कोल्काः शुभेरंतलोपः शुकः कल्कंवल्
कलमस्त्रियांउषदाहेषस्यलःउल्का इण्भीकापाशल्यतिमर्चिभ्यःकन् एकेमुख्यान्यकेवलाः भेकोमंडूकमे-
घयोरितिविश्वमेदिन्यौ काकः पाकः शिशुः शल्कंशकलं अल्कः पथिकः शरीरावयवश्च मर्कः शरीरवायुः नीहः
जहातेःकन्स्यान्नौ निहाकागोधिका नौसदेर्डिच्च निष्कोऽस्त्रीहेम्निपलेतत्पले स्यमेरीट्च स्यमीकोवल्मीकः वृ
क्षभेदश्च इट्ह्रस्वइतिकेचित् स्यमिकः अजियूधूनीभ्योदीर्घश्च वीकः स्याद्वातपक्षिणोः यूका धूकोवायुः नी
कोवृक्षविशेषः ह्रियोरश्चलोवा ह्रीकाल्हीकात्रपामता शकेरुनोंतोऽत्युनयः उनउंतउंतिउनिएतेचत्वारः
स्युः शकुनः शकुंतः शकुंतिः शकुनिः भुवोझिच्च भवंतीवर्तमानःकालः बाहुलकादवेरपि अवंतिः वदेर्वदं
तिः वदंती किंवदंतीजनश्रुतिः कन्युच्क्षिपेश्च चाद्भुवः क्षिपण्युर्वसंतइत्युज्ज्वलदत्तः भुवन्युः स्वामिसूर्ययोः

अनुङ्नदेश्च चात्क्षिपेः नदनुर्मेघः क्षिपणुर्वातः कृवृदारिभ्य उनन् करुणोवृक्षभेदः स्यात्करुणाचकृपाम-
ता वरुणः दारुणं घोरंरलोर्वा तरुणस्तलुनोयुवा क्षुधिपिशिमिथिभ्यः कित् क्षुधुनोम्लेच्छजातिः पिशुनः
मिथुनं फलेर्गुक्च फल्गुनः पार्थः प्रज्ञाघणि फाल्गुनः अशेर्लशश्च लशुनं अर्जेर्णिलुक्च अर्जुनः तृणाख्यायां
चित् चित्वादंतोदात्तः अर्जुनंतृणंअर्तेश्च अरुणः अजियमिशीङ्भ्यश्च वयुनंदेवमंदिरं यमुना शयुनोऽजग-
रः वृतृवदिहनिकमिकषिभ्यः सः वर्षं तर्षः प्लवसमुद्रयोः वत्सः वत्संवक्षः हंसः कंसोऽस्त्रीपानभाजनं कक्षन
क्षत्राप्लुषेरच्चोपधायाः प्लक्षः मनेर्दीर्घश्च मांसं अशेर्देवने अक्षः स्नुवृश्चिकृत्यृषिभ्यः कित् स्नुषा वृक्षः कृत्समुद
कं ऋक्षंनक्षत्रं ऋषेर्जातौ ऋक्षोऽद्रिभेदेभल्लूके उंदिगुधिकुषिभ्यश्च उत्सःप्रस्रवणं गुत्सः स्तबकः कुक्षोजठरं
गृधिपण्योर्दकोच गृत्सः कामदेवः पक्षः अशेःसरः अक्षरं वसेश्च वत्सरः संपूर्वाच्चित् संवत्सरः कृधूमदिभ्यः
कित् बाहुलकान्नषत्वं कृसरःस्यात्तिलौदनं धूसरः मत्सरः मत्सरामक्षिकाज्ञेयामंभरालीचसामता पतेरश्च-
लः पत्सलः पंथाः तन्यृषिभ्यांक्सरन् त्रसरः सूत्रवेष्टनं ऋक्षरः ऋत्विक् पीयुक्पणिभ्यांकालन् ह्रस्वः संप्र-
सारणंच पीयुः सौत्रः पियालोवृक्षभेदः कुणालोदेशभेदः कठिकुषिभ्यांकाकुः कठाकुः पक्षी कुषाकुरग्निः
सूर्यश्च सर्त्तेर्दुक्च सृदाकुर्वातसरितोः वृतेर्वृद्धिश्च वार्त्ताकुः बाहुलकादुकारस्यअत्वं वार्त्ताकं पर्देर्नित्संप्र-
सारणमल्लोपश्च पृदाकुर्वृश्चिकेव्याघ्रेचित्रकेचसरीसृपे सृयुवचिभ्योऽन्युजागूजक्नुचः अन्युच् अगूच्
अक्नुच् एतेक्रमात्स्युः सरण्युर्वातमेघयोः यवागूः वचक्नुर्विप्रवाग्मिनोः आनकः शीङ्भियः शयानकोऽजग-
रः भयानकः आणको लूधूशिंघिधाञ्भ्यः लवाणकं दात्रं धवाणकोवातः शिंघाणकः श्लेष्मा पृषोदरादि

त्वात्पक्षे कलोपः शिंघाणं नासिकामले धाणकोदीनारभायः उल्मुकं दर्विहोमिनः उषदाहे षस्यलः मुकप्रत्ययश्च
उल्मुकं ज्वरदंगारः शृणातेर्विः दर्विः जुहोतेर्मिनिः होमी ह्रियः कुक्ररश्च लोवा -हीकुः ल्हीकुः लज्जावान् हसिमृग्रि
ण्वामिदमिल्लूपूधूर्विभ्यस्तन् दशभ्यस्तन् स्यात् तितुत्रेतिनेट् हस्तः मर्त्तः गर्तः एतः कर्बुरः वातः अंतः दंतः लोतः
स्यादश्रुचिन्हयोः पोतो बालवहित्रयोः धूर्तः बाहुलकात्तुसे दीर्घश्च तूस्तं पापं धूलिर्जटा च नञ्याप इट् च नापि
तः तनिमृङ्भ्यां किच्च ततं मृतं अंजिसृजिभ्यः क्तः अक्तं घृतं सितं डुतनिभ्यां दीर्घश्च दूतः तातः जेर्मुट् चोदात्तः
जीमूतः लोष्टपलितौ लुनातेः क्तः तस्य सुट् धातोर्गुणः लोष्टं पलितं ह्रश्याभ्यामितन् हरितश्येतो वर्णभेदो
रुहेरश्च लोवा रोहितो मृगमत्स्ययोः लोहितं रक्तं पिशेः कित् च पिशितं मांसं श्रुदक्षिस्पृहिगृहिभ्य आय्यः श्रवा
य्यो यज्ञपशुः दक्षाय्यो गरुडो गृध्रश्च गृहयाय्यो गृहस्वामी स्पृहयाय्यः दिधिषाय्यः दधातेर्द्वित्वमित्वं षुक् च
मित्र इव योदिधिषाय्यः वृञ एण्यः वरेण्यः स्तुवः क्सेय्यश्छंदसि स्तुषेय्यं पुरुवर्पसं राजेरन्यः राजन्यो वन्हिः शृ
रम्योश्च शरण्यं रमण्यं अर्तेर्निच्च अरण्यं पर्जन्यः पृषु सेचने षस्य जः पर्जन्यः शक्रमेघयोः वदेराञ्जः वदान्यो दा
तृवाग्मिनोः अमिनक्षियजिवधिपतिभ्योऽत्रन् अमत्रं भाजनं नक्षत्रं यजत्रः वधत्रमायुषं पतत्रं तनूरुहं गडे
रादेश्च कः कडत्रं डलयोरेकत्वस्मरणात्कलत्रं दृञश्चित् वरत्रा चर्ममयी रज्जुः सुविदेः कत्रन् कविदत्रं कुटुंबकं
कृतेर्नुम् च कृंतत्रं लांगलं भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् दशभ्योऽतच् स्यात् भरतः मरतो
मृत्युः दर्शतः सोमसूर्ययोः यजतः ऋत्विक् पर्वतः पचतोऽग्निः अमतो रोगः तमतस्तृष्णापरः नमतः प्रह्वः हर्य
तोऽश्वः पृषिरंजिभ्यां कित् पृषतो मृगो बिंदुश्च रजतं स्खलितः स्खलतेः सलोपः अतच् प्रत्ययांतस्य इत्वं च स्ख

स्तिर्निष्के शशिरः शीङ्शपिरुगमिवंचिजीविप्राणिभ्योऽथः स्तसभ्योऽथःस्यात् शमथोऽजगरः शपथः रवथः
कोकिलः गमथः पथिकः पंथाश्च वंचथः वंदीतिपाठेवंदतेर्वेधतेर्वावंदथः स्तोतास्तुत्यश्च जीवथः आयुष्मान्
प्राणथोबलवान् बाहुलकाच्छमिदमिभ्यां शमथरूकुशमः शांतिर्दांतिस्तु दमथोदमः भृञ्जश्चित् भरथोलोक
पालः रुदिविदिभ्यांङित् रोदितीतिरुदथःशिशुः वेत्तीतिविदथःउपसर्गेवसेः आवसथोगृहं संवसथोग्रा
मः अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् त्रयोदशभ्योऽसच् अततीत्यतसः
वायुरात्माच अवतीत्यवसोराजाभानुश्च चमंत्यस्मिन्निितिचमसः सोमपानपात्रं ताम्यत्यस्मिन्निितितमसः
अंधकारः नमसः अनुकूलं रभसोवेगहर्षयोः लभसोधनंयाचकश्च नमतिनभ्यातिवानभसभाकाशः तप
सश्चंद्रः पक्षीच तमसः पक्षी पनसः कंटकिफलं पणसः पण्यद्रव्यं महसंज्ञानं वेञ्स्तुट्च बाहुलकादात्वा
भावः वेतसः वहियुभ्यांणित् वाहसोऽजगरः यावसस्तृणसंघातः वयश्च वयगतो वायसः काकः दिवःकित्
दिवसं दिवसः कृभृशलिकलिगर्दिभ्योभच् करभः शरभः अष्टपादःशलभः कलभःगर्दभः ऋषिवृषिभ्यांकित्
ऋषभः वृषभः रुषेर्नित्लुश्चरुषहिंसायां अस्मादभच्नित्कित्स्याल्लुषादेशश्च लुषभोमत्तदंतिनि रासि
वल्लिभ्यांच रासभः वल्लभः जॄशॄशिभ्यांझस्त्र्जरंतोमाहिषः वेशंतः पल्वलं रुहिनंदिजीविप्राणिभ्यः षिदा
शिषि रोहंतोवृक्षभेदः नंदंतः पुत्रः जीवंतः औषधं प्राणंतोवायुः षित्वान्ङीष्रोहंती तृभूवहिवसिभा
सिसाधिगडिमंडिजिनंदिभ्यश्च एभ्योदशभ्योझच्स्यात्सचषित् तरंतः समुद्रः तरंतीनौका भवंतः का
लः वहंतोवायुः वसंतोऋतुः भासंतः सूर्यः साधंतोभिक्षुः गडेर्घदादि त्वान्मित्वेन्ह्रस्वः अयामंतेतिणेर

यादेशः गडयंतोजलदः मंडयंतोभूषणं जयंतःशक्रपुत्रः नंदयंतोनंदकः हंतेर्मुट्‌चहिच हेमंतः भदेर्नलोपश्च
भदंतः प्रव्रजितः ऋच्छेररः ऋच्छरावेश्या बाहुलकाज्जर्जरझर्झरादयःअर्तिकमिभ्रमिचमिदेविवासिभ्यश्चि
त् षडभ्योरश्चित्स्यात् अररंकपाटं कमरः कामुकः भ्रमरः चमरः देवरः वासरः कुवःक्रकन् कुररःपक्षिभेदः
अंगिमदिमंदिभ्यआरच् अंगारः मदारोवराहः मंदारः गडेःकड्च कडारः शृंगारभृंगारौ शृभृञ्भ्यामारन्नुट्
मृगुकुन्हस्वश्च शृंगारोरसः भृंगारः कनकालुका कंजिमृजिभ्यांचित् कंजिः सौत्रोधातुः कंजारोमयूरः मार्जा
रः कमेः किदुच्चोपधायाः किदित्यनुवृत्तेरंतोदात्तः कुमारः तुषारादयश्च तुषारः कासारः सहारः आम्रभेदः
दीङोनुट्च दीनारः सुवर्णाभरणं सर्त्तेरपःषुक्च सर्षपः उषिकुटिदलिकचिखजिभ्यःकपन् उष
पो वन्हिसूर्ययोः कुटपाः पानभांडं दलपः प्रहरणं कचपंशाकपत्रं खचपंखजपंघृतं कुणेःसंप्रसारणंच
कुपणं कपश्चार्क्रवर्मणास्य स्वरेभेदः विटपविष्टपविशिपोलपाः चत्वारोऽमीकपन्प्रत्ययांतानिपात्यं
ते विटशब्दे विटपः विशतेरादेः पःप्रत्ययस्यतुट्षत्वं विष्टपंभुवनं विशतेःप्रत्ययादेरित्वं विशिपंमंदि
रं वलतेःसंप्रसारणंच उलपंकोमलंतृणं वृतेस्तिकन् वर्तिका स्तिभिदिलतिभ्यःकित् सौत्रोलतिः स्ति
त्तिका भित्तिकाभित्तिः लत्तिकागोधा इष्यशिभ्यांतकन् इष्टकाअष्टका इणस्तशन्तशसुनो एतशोब्रा
ह्मणः सएवऐतशाः वीपतिभ्यांतनन् वीगत्यादौ वेतनंपतनं दृदलिभ्यांभः दर्भः दल्भः स्याद्दृषिचक्रयोः
अर्त्तिगृभ्यांभन् अर्भः गर्भः इणःकित् इभः असिसंजिभ्यांक्थिन् अस्थि सक्थिः प्लुषिशुषिकुषिभ्यः
क्सिः प्लुक्षिर्वन्हिः शुक्षिर्वातः कुक्षिः अशोर्नित् अक्षिः इषेःक्सुः इक्षुः अवितृस्तृतंत्रिभ्यईः अवीर्नारीरन्

जस्वला तरीः नौः स्तरीर्धूमः तंत्रीर्वीणादेर्गुणः यापोःकित्द्वेच ययीरश्वः पपीःस्यात्सोमसूर्ययोः लक्षेर्मुट् च
लक्ष्मीः इत्युणादिषु तृतीयःपादः वातप्रमीः वातशब्दउपपदेप्रपूर्वान्माधातोरीप्रत्ययःस्यात्सचकित् वा
तप्रमीः अयंस्त्रीपुंसयोः ऋतन्यंजिवन्यंजर्पिमद्यत्यंगिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्णुजिष्ठजितंन्स्य
न्निथिन्नुल्पसासानुकः द्वादशभ्यः क्रमात्स्युः अर्तेः कत्निच् यण बहुसुष्टिः करोऽरत्निः सोऽरत्निः प्रसृतांगु
लिः तनोतेर्यतुच् तन्यतुर्वायुः रात्रिश्च अंजेरलिच् अंजलिः वनेरिष्टुच् वनिष्टुः स्थविरान्त्रं अंजेरिष्ठच्
अंजिष्ठोभानुः अर्पयतेरिसन् आर्पिसोऽग्रमांसं मदेःस्यन् मत्स्यः अतेरिथन् अतिथिः अंगेरुलिः अं
गुलिः कौतेरसः कवसः अचइत्येके कवचं यौतेरासः यवासः दुरालभा कृशेरानुक् कृशानुः श्रेः कान् उत्त
रसूत्रेकित्ग्रहणादत्रकस्यनेत्वं शर्करा पुषःकित् पुष्करं कलश्च पुष्कलं गमेरिनिः गमिष्यतीतिगमी
आङ्णित् आगामी भुवश्च भावी प्रेस्थः प्रस्थायी परमेकित् परमेष्ठी मंथः मंथतेरिनिःकित्स्यात्किला
न्नलोपः मंथाः मंथानौ पतेस्थच पंथाः पंथानौ खजेराकः खजाकःपक्षी बलाकादयश्च बलाका शलाका
पताका पिनाकादयश्च पातेरित्वंनुमच् क्लीबपुंसोःपिनाकःस्यात् शूलशंकरधन्वनोः तडआघाते तडा
कः कषिदूषिभ्यामीकन् कषीकापक्षिजातिः दूषिकानेत्रयोर्मलं अनिहृषिभ्यांकिच्च अनीकं हृषीकं चं
कणः कंकणंच कणशब्दे अस्माद्यङ्लुङंतादीकन् धातोःकंकणादेशश्च घंटिकायांकंकिणीकासैवप्र
तिसरापिच शॄपॄदृजांह्रस्वःरुक्चाभ्यासस्य शर्करीकोहिंस्रः पर्परीकोदिवाकरः बर्बरीकः कुटिलकेशः पर्फ
रीकादयश्च स्फुरस्फुरणे अस्मादीकन् धातोःपर्फरादेशः पर्फरीकं किसलयं दर्दरीकंवादित्रं झर्झरीकं

शरीरं तित्तिडीकोवृक्षभेदः चरेर्नुम्च चंचरीकोभ्रमरः मर्मरीकोहीनजनः कर्करीकागलंतिका पुणतेः पुंड
रीकं पुंडरीकोव्याघ्रोऽग्निर्दिग्गजश्च ईषेः किद्ध्रस्वश्च इषीकाशलाका ऋजेश्च ऋजीकउपहतः सर्त्तेर्नुम्च
सृणीका लालासृडुः कीकन्कंकणौ मृडीकोमृगः मृडंकणःशिशुः अलीकादयश्च कीकन्नंतानिपात्यंते अ
लभूषणादौ अलीकंमिथ्या विपूर्वाद्व्यलीकं विप्रियंखेदश्च वलीकंपटलप्रांते इत्यादि कृतॄभ्यामीषन् करी
षोऽस्त्रीशुष्कगोमये तरीषः तरीता शॄपॄभ्यांकिच्च शिरीषः अर्जेर्ऋजच ऋजीषंपिष्टपचनं अंबरीषः अयन
नंनिपात्यते अविशब्दे अंबरीषः पुमान् भ्राष्ट्रं अमरस्तु क्लीबेऽबरीषंभ्राष्ट्रोना कॄभॄपॄकटिपटिशौटिभ्यई
रन् करीरोवंशांकुरः शरीरं परीरं फलं कटीरः कंदरोजघनदेशश्च पटीरश्चंदनः कंडुकः कामश्च शौटीर
स्त्यागिवीरयोः ब्राह्मणादित्वात्ष्यञिशौटीर्यं वशेःकित् उशीरं कशेर्मुट्च कश्मीरोदेशभेदः कृञउच्च कु
शीरंमैथुनं घसेःकिच्च क्षीरं गभीरगंभीरौ गमेर्भः पक्षेनुम्च विषाविहा स्यतेर्जहातेश्चविपूर्वाभ्यामाप्र
त्ययः विषा बुद्धिः विहास्वर्गः अव्ययेइमे पचएलिमच् पचेलिमोवन्हिरव्योः शीङोधुक्लुक्वलञ्वाल
नः चत्वारः प्रत्ययाःस्युः शीधुमद्यं शीलंस्वभावः शैवलः शैवालः बाहुलकाद्ध्रस्वपोऽपि शेवालंशैवलो
नस्त्रीशैपालोजलनीलिका मृकणिभ्यामूकोकणौ मरूकोमृगः काणूकःकाकः वलेरूकः वलूकः प-
क्षीउत्पलमूलंच उलूकादयश्च वलेःसंप्रसारणमूकश्च उलूकाविंद्रपेचकौ वावदूकोवक्ता भल्लूकः शमेर्बुक्
च शंबुकोजलशुक्तिः शल्मिंडिभ्यामूकण् शालूकंकंदविशेषः मंडूकः नियोमिः नेमिः अर्त्तेरूच्च ऊर्मिः भु
वःकित् भूमिः अश्नोतेरशच रश्मिः किरणोरज्जुश्च दल्मिः दलविदारणे दल्मिरिंद्रायुधं वीज्याज्वरिभ्योनिः

बाहुलकाण्णत्वं वेणिःस्यात्केशविन्यासः प्रवेणीचास्त्रियामुभे ज्यानिः जूर्णिः सृदृषिभ्यांकित् सृणिरंकु
शः वृष्णिःक्षत्रियमेषयोः अंगेर्नलोपश्च अग्निः वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित् वन्हिः श्रेणिः श्रोणिः यो
निर्द्वयोः द्रोणिःग्लानिः हानिः तूर्णिः बाहुलकात्म्लानिः घृणिपृश्निपार्ष्णिचूर्णिभूर्णि एतेपंचनिपात्यंते
घृणिः किरणः स्पृशतेः सलोपः पृश्निरल्पशरीरः पृषेर्ऋ्डिश्च पार्ष्णिःपादतलं चरेरुपधायाऊत्वं चूर्णिः क
पर्दकाशतं बिभर्त्तेरूत्वं भूर्णिः धरणिः वृदृभ्यांविन् वर्विर्घस्मरादर्विः जृभृस्तृजागृभ्यःक्विन् जीर्विः प
शुः शीर्विर्हिंस्रः स्तीर्विरध्वर्युःजागृविर्नृपः दिवोद्वेदीर्घश्चाभ्यासस्य दीदिविः स्वर्गमोक्षयोः कुविधृ-
षिछविस्थविकिकीदिवि कृविस्तंतुवायद्रव्यं धृषिर्नराहः छास्थोर्ह्रस्वत्वंच छविर्दीप्तिःस्थविस्तंतुवायः
दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः बाहुलकात्ह्रस्वदीर्घयोर्विनिमयः चाषेणकिकिदीविना
पातेर्डतिः पतिः शकेर्ऋतिन् शकृत् अमेरातिः अमतिःकालः वहिवस्यर्त्तिभ्यश्चित् वहतिःपवनःवस
तिर्गृहयामिन्योः अरतिः क्रोधः अंचेः कोवा अंकतिःअंचतिर्वातः हंतेरंहच्च हंतेरतिस्यादंहादेश्चधातोः
हंतिदुरितमनयाअंहतिर्दानं प्रादेशनंनिर्वपणमपवर्जनमंहतिः रमेर्नित् रमतिः कालकामयोः
सूङः क्रिः सूरिःअदिशदिभूशुभिभ्यःक्रिन् अद्रिः शद्रिः शर्करा भूरिःप्रचुरं शुभ्रिर्ब्रह्मा वंक्र्यादयश्च
क्रिन्नंतानिपात्यंते वंक्रिर्वाद्यभेदः गृहदारु पार्श्वास्थिच वप्रिःक्षेत्रं अंहिः अंघ्रिश्चरणः तदिः सौत्रोधा
तुः तंद्रिर्मोहः बाहुलकात्तुणः भेरिः राशदिभ्यांत्रिप् रात्रिःशत्रिः कुंजरःअदेस्त्रिनिश्च चात्त्रिप् अत्री
अत्रिणौ अत्रिणः अत्रिः अत्री अत्रयः पतेरत्रिन् पतत्रिः पक्षी सृकृणिभ्यामीचिः मरीचिः कणीचिः

वल्लकीनिनादश्च श्वयतेश्चित् श्वयीचिर्व्याधिः वेञोडिच्च वीचिस्तरंगः नञ्समासे अवीचिर्नरकभेदः ऋह
निभ्यामूषन् अरूषःसूर्यः हनूषोराक्षसः पुरःकुषन् पुरअग्रगमनेपुरुषः अन्येषामपीतिदीर्घः पूरुषः पॄनहि
कलिभ्यउषच् परुषं नहुषः कलुषं पीयेरूषन् पीयइतिसौत्रोधातुः पीयूषं बाहुलकाद्गुणे पेयूषोऽभिनवंपयः
मस्जेर्नुम्च मंजूषा गंडेश्च गंडूषः गंडूषा अर्त्तेररुः अररुः शत्रुः अररू अररवः कुटःकिच्च कुटरुर्वस्त्रगृहं कि
त्वप्रयोजनंचिंत्यं शकादिभ्योऽटन् शकटोऽस्त्रियां कंकिर्गत्यर्थः कंकटः सन्नाहः देवटः शिल्पीकरटइत्यादि
काकेभगंडौकरटौ कृकदिकडिकदिभ्योऽबच् करंबंव्यामिश्रं कदिकडीसौत्रौ कदंबोवृक्षभेदः कडंबोऽग्रभागः
कटंबोवादित्रं कदेर्णित्पक्षिणि कादंबः कलहंसः कलिकर्द्योरमः कलमः कर्दमः कुणिपुल्योःकिंदच् कुणशब्दो
पकरणयोः कुणिंदःशब्दः पुलिंदोजातिविशेषः कुपेर्वावश्च कुपिंदः कुविंदोतंतुवाये नौषंजेर्घथिन् निषंगथिः
आलिंगकः उधेर्नश्चित् उदरथिः समुद्रः सर्त्तेर्णिच्च सारथिः खर्जिपिंजादिभ्यऊरोलचौ खर्जूरः कर्पूरः वल्लूरंशु
ष्कमांसं पिंजूलंकुशवर्तिः लंगेर्वृद्धिश्च लांगूलं कुसूलः कुवश्चवट्दीर्घश्च कुचीचित्रलेखनिका समीणः समी
नः समुद्रः समीचीहरिणी सिवेष्टेरूच्च सूचोदर्भांकुरः सूची शमेर्बन् शंबोमुसलं उल्वादयश्च यन्नंतानिपात्यं
ते उच्चसमवाये चस्यलत्वंगुणाभावश्च उल्बोगर्भः शल्बंताम्रं बिंबं स्थःस्तोंऽबजबकौ तिष्ठतेरंबच् अवकएन्
तौस्तस्तादेशश्च स्तंबोगुच्छस्तृणादीनां स्तबकः पुष्पगुच्छः शाशपिभ्यांददनौ शादोजंबालशष्पयोः शब्दः अ
ब्दादयश्च अवतीत्यब्दः कोतेर्नुम् कुंदः वलिमलितनिभ्यःकयन् वलयं मलयः तनयः वृन्होः षुग्दुकौच वृष
यः आश्रयः हृदयं मिपीभ्यांरुः मेरुः पेरुः सूर्यः बाहुलकात्पिबतेरपि संवत्सरवपुः पारुः पेरुर्वासीर्दिनमणीः

जत्र्वादयश्च जत्रु जत्रुणी अश्रु अश्रुणी रुशातिभ्यांक्रुन् रुरुर्मृगभेदः शातयतीतिशत्रुः मज्ञादौपाठात्प्रस्वत्वं
जनिदाच्युसृवृमदिषसिनमिभृञ्भ्यइत्वन्त्वण्क्विन्शकुस्यदडटादेच्चः जनित्वौमातापितरौ दात्वः दाताच्यौत्वः
गंता अंडजः क्षीणपुण्यश्च सृणिरंकुशः सूर्योवायुश्च वृशः आर्द्रकंमूलकंच मत्स्यः षंढः डित्वाद्दिलोपः नम
तीतिनटः शैलूषः बिभर्तीतिभरटः कुलालोभृतकश्च अन्येभ्योऽपिदृश्यंते येत्वममृतं भृशं कुसेरुंभोमेदेताः
कुसुमं कुसुंभं कुसिदं कुसितोजनपदः सानसिवर्णसिपर्णसितंडुलांकुशचषालेल्वलपल्वलधिष्ण्यश-
ल्याः सनोतेरसिप्रत्ययः उपधावृद्धिः सानसिर्हिरण्यं वृञोनुक्च वर्णसिर्जलं पृपर्णसिर्जलगृहं तडआ
घाते तंडुलाः अकिलक्षणे उशाच् अंकुशः चषेरालः चषालोयूपकंटकः इल्वलः दैत्यभेदः पल्वलं ञिधृषा
ऋकारस्यइकारः धिष्ण्यं शलेर्यः शल्य वापुंसिशल्यंशंकुर्ना मूशक्यविभ्यःक्लः मूलं शक्लः प्रियंवदे अम्लो
रसः बाहुलकादमेरम्लः माछासससिभ्योयः माया छाया सस्यं बाहुलकात्सनोतेःसव्यंद क्षिणवामयोः
जनेर्यक् येविभाषा जन्यमायोधनंयुद्धं जायाभार्या अंघ्न्यादयश्च यगंतानिपात्यंते हंतेर्यक् अडागमः उप
धालोपश्च अघ्न्यः प्रजापतिः अघ्न्यामाहेयी कनादीप्तौ कन्या बवयोरैक्यं बंध्या वंध्या स्नामदिपद्यर्तिपृ
शकिभ्योवनिप् स्नावारसिकः महाशिवः पद्मापंथाः अर्वातुरंगगर्ह्ययोः पर्वग्रंथिः प्रस्तावश्च शक्वाहस्ती ङी-
ब्रो शक्वरी अंगुलिः शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् शीवाअजगरः क्रुश्वासृगालः रुह्वावृक्षः जित्वा-
जेता क्षित्वावायुः सृत्वाप्रजापतिः धृत्वाविष्णुः ध्याप्योःसंप्रसारणं धीवाकर्मकरः पीवास्थूलः अदेर्धच
अध्वा प्रेईरशदोस्तुट्च प्रेत्वाप्रशत्वाचसागरः प्रेत्वरी प्रशत्वरीचनदी सर्वधातुभ्यइन् पचिरग्निः तुडितुं

डिः यलिः वटिः यजिः देवयजिः काशतइतिकाशिः ध्यातिः मल्लिः मल्ली केलिः मसीपरिणामे मसिः बहुकाडु
णः कोटिः हेलिः सूर्यः बोधिः नंदिः कलिः त्वपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च हरिर्विष्णावहाविंद्रेभेके-
सिंहेहयेरवौ चंद्रेकालेप्लवंगेचयमे शालेचकोकिलःइति व्याडिःपेषिर्वज्रं रोहिर्व्रती वर्तिः वेदिः छेदिश्छेत्ता की-
र्तिः इगुपधात्कित् कृषिः ऋषिः शुचिः लिपिः बाहुलकात्बत्वं लिबिः तूलनिष्कर्षेतूलिः तूली कूर्चिका भ्र
मेःसंप्रसारणंच भूमिर्वातः बाहुलकात्भ्रामिः क्रमितमिशातिस्तंभाभतइच्च क्रिमिः संप्रसारणानुवृत्तेः
कृमिरपि तिमिर्मत्स्यभेदः शितिर्मेचकशुक्लयोः स्तिमिः समुद्रः मनेरुच्च मुनिः वर्णेबलिश्चाहिरण्ये च-
र्णिः सौत्रः अस्यबलिरादेशः करोपहारयोः पुंसिबलिः प्राण्यंगजेस्त्रियां हिरण्येतुवर्णिःस्तुवर्णं वसि
वपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्यइञ् वासिः छेदनवस्तुनि वापिः वापी याजिर्यष्टा राजिः
राजी व्राजिर्वातालिः सादिः सारथिः निघातिर्लोहघातिनि वाशिरग्निः वादिर्विद्वान् वारिर्गजबंधिनी
जलेतुक्लीबं बाहुलकाद्धारिः पथिकसंहतौ नहोभश्च नाभिःस्यात्क्षत्रियेपुंसिप्राण्यंगेतुस्त्रियां पुंस्यपीतिके-
चित् कृषेर्वृद्धिश्छंदसि कार्षिः श्वःशकुनौ शारिः शारिका कृञउदीच्यांकारुषु कारिः शिल्पी जनिघसिभ्या
मिण् जनिर्जननं घासिर्भक्ष्यं अग्निश्च अज्यतिभ्यांच आजिः संग्रामः आतिः पक्षी पादेच पदाजिः पदा
तिः अशिपणाय्योरुडायलुकौच अशेरुट् राशिः पुंजः पणायतेरायलुक् पाणिः करः वातेर्डिच्च विःपक्षी
स्त्रियांवीत्यपि प्रेहरतेः कूपे प्रहिःकूपः नौव्योर्यलोपः पूर्वस्यचदीर्घः वेञ् इणस्याद्यलोपश्च नेर्दीर्घश्च
नीविः नीवीवस्त्रग्रंथौमूलधनेच समानेख्यः सचोदात्तः समानशब्देउपपदेख्याइत्यस्मादिण्स्यात्डि

श्च यलोपश्च समानस्य तृदात्तः सइत्यादेशश्च समानंख्यायतेजनेरिति सखा आङिश्रिहनिभ्यां ह्रस्वश्च अश्रिः स्त्रियः पाल्यश्रिकोटयः सर्पे वृत्रासुरेऽप्यहिः अच इः रविः पविः तरिः कविः अविः अलिः खनिकष्यज्यशिवसिसनिसनि ध्वनिग्रंथिचलिभ्यश्च खनिः कषिर्हिंस्रः अजिः असिः वासिर्वस्त्रं वनिरग्निः सनिर्भक्तिर्दानं च ध्वनिः ग्रंथिः चलिः घसुः इतेश्छंदसि वर्तिः भुजेः किच्च भुजिः कृगृशृपृकुटिभिदिछिदिभ्यश्च इः कित्स्यात् किरिर्वराहः गिरिर्गोत्राक्षिरोगयोः गिरिणाकाणः गिरिकाणः शिरिः शलभः हंता च पुरिर्नगरं राजा नदी च कुटिः शाला शरीरं च भिदिर्वज्रं छिदिः परशुः कुंडिकंप्योर्नलोपश्च कुडिदाहे कुडिर्देहः कपिः सर्वधातुभ्यो मनिन् क्रियतेऽनेनेति कर्म भस्म जन्म शर्म स्थामबलं इस्मन्निति ह्रस्वः छद्म सुत्रामा बृंहेर्नोच्च नकारस्याकारः ब्रह्मतत्त्वं तपो वेदः ब्रह्मा विप्रः प्रजापतिः अशिशकिभ्यां छंदसि अश्मा शक्मा हृभृधृसृस्तृशृभ्य इमनिच् हरिमा कालः भरिमा कुटुंबं धरिमा रूपं सरिमा वायुः स्तरिमा तल्पं शरिमा प्रसवः जनिमृङ्भ्यामिमनिच् जनिमा जन्म मरिमा मृत्युः वेञः सर्वत्र छंदसि भाषायां चेत्यर्थः वेमा तंतुवायदंडः अर्धर्चादिः सामनी वेमनी इति वृत्तिः नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् सप्त अमी निपात्यंते म्नायतेऽनेनेति नाम सनोतेर्दीर्घः सीमा सीमानौ सीमानः पक्षेडाप् सीमा सीमे सीमाः वेञ अंत्यस्योत्वं गुणः व्योम रौतेः रोम लोम पाप्म पापं ध्याम परिमाणं तेजश्च मिथुनेमनिः उपसर्गे क्रियेसंबंधेमिथुनं स्वरार्थमिदं सुशर्मा सातिभ्यां मनिन्मनिणौ स्यति साम सामनी सामानि आत्मा हनिमशिभ्यां सिकन् हंसिका हंसयोषिति मक्षिका कोररन् कवरः गिरउडच् गरुडः इंदेः कमिर्नलोपश्च इदं कामयतेऽर्डिमिः किं सार्वधातुभ्यष्ट्रन् वस्त्रं अस्त्रं शस्त्रं इस्मन्निति ह्रस्वत्वं छादनात् छत्रं भ्रस्जिग

मिनमिह निविश्यशांद्दृह्मिश्च भ्राष्ट्रं गात्रं शकटं नांत्रं स्तोत्रं हांत्रं मरणं वेष्टं जगत् आष्ट्रं आकाशं दिवेर्धश्च
द्यौत्रं ज्योतिः उषिखनिभ्यां कित् उष्ट्रः खात्रं खनित्रं मरणं जलाधारश्च सिविमुच्योष्टेरूच्च सूत्रं मूत्रं अमिचि
मिदिशसिभ्यः क्त्रः आत्रं चित्रं मित्रं शस्त्रं पुवोर्ह्रस्वश्च पुत्रः स्त्यायतेड्रट् स्त्री गुधृवीपचिवचियमिसदिक्षदिभ्यः
त्रः गोत्रं स्यान्नामवंशयोः गोत्रा पृथिवी धर्त्रं गृहं वेत्रं पत्त्रं वक्त्रं यंत्रं सत्त्रं क्षत्त्रं हुयामाश्रुभसिभ्यस्त्रन् हो
त्रं यात्रा मात्रा श्रोत्रं भस्त्रा गमेराच्च गात्रं दादिभ्यश्छन्दसि दात्रं पात्रं भूवादिगृभ्यो णित्रन् भावित्रं वादि
त्रं गारित्रं मोदनं चरेर्वृत्ते चारित्रं अशित्रादिभ्य इत्रोत्रौ अशित्रं वहित्रं धरित्री मही नैड्रूः एवमादिभ्य उत्रः
तोत्रं प्रहरणं वृञ्ज्वरूत्रं प्रावरणं अमेर्द्विषति चित् अमित्रः शत्रुः आः समिण्निकषिभ्यां संपूर्वादिणो नि-
पूर्वात्कषेश्चास्यात् स्वरादित्वादव्ययत्वं समया निकषा चितेः कणः कश्च बाहुलकाद्गुणः चिक्कणं स्निग्धं
सूचेः स्मरन् सूक्ष्मं पातेर्डुम्सुन् पुमान् रुचिभुजिभ्यां किष्यन् रुचिष्यमिष्टं भुजिष्यो दासः वसेस्तिः वस्तिर्ना
भेरधो द्वयोः वस्तयः स्युर्दशासूत्रं बाहुलकाच्छसः शास्तिः राजदंडः विंध्यास्त्यमगमस्यतीति अगस्तिः शकं-
ध्वादिः सावसेः स्वस्तिः स्वरादित्वादव्ययत्वं वौतसेः वितस्तिः पदिप्रथिभ्यां नित् पत्तिः प्रथितिः तितुत्रेष्वग्र-
हादीनामिति नेट् दृणातेर्ह्रस्वश्च दृतिः कृतृकृपिभ्यः कीटन् किरीटं शिरोवेष्टनं तिरीटं सुवर्णं कृपीटं कुक्षिवा
रिणोः रुचिकुचिवचिकुटिभ्यः कित् रुचितं मिष्टं कुचितं उचितं परिमितं कुटितं कुटिलं कुटिकुषिभ्यां क्म
लन् कुड्मलं कुट्मलं कुषेर्लश्च कुष्मलं पापं सर्वधातुभ्योऽसुन् चेतः सरः पयः सदः रपेरत एच्च रेपोऽवद्यं अ
शेर्देवने युट् च देवनेक्तौ यशः उब्जेर्बले बलोपश्च ओजः श्वेः संप्रसारणं च शवः शवसी बलपर्यायोऽयं

श्रयतेः स्वांगे शिरः किञ्च श्रयतेः शिर आदेशः असुन्प्रत्ययश्च किञ्च शिरः शिरसी अर्तेरुञ्च उरः व्याधौ सुट्
च अर्शो गुदव्याधिः उदके नुट् च अर्तेरसुन् स्यात् तस्य च नुट् अर्णः अर्णसी इण आगसि एनः रिचेर्घ नेधिश्च
चात्प्रत्ययस्य नुट् धित्वात् कुत्वं रेक्णः रूप वर्णे चायतेरन्ने ह्रस्वश्च चनो भक्तं हृङ्‌शीङ्‌भ्यां रूपस्वांगयोः पुट् न
वर्पो रूपं शेपो गुह्यं स्रुरीभ्यां तुट् च स्रोतः रेतः पातेर्बले जुट् च पाजः पाजसी उदके थुट् च पाथः अन्ने च पाथो
भक्तं अदेर्नुम् धौ च अदेर्भक्ते ऽसुन् नुमागमो धादेशश्च अंधोन्नं स्कंदेश्च स्वांगे स्कंदः स्कंदसी आपः कर्माख्या
यां ह्रस्वो नुट् च वा आपः आप्नः बाहुलकादापः आपसी रूपे जुट् च अब्जो रूपं उदके नुम् भौ च अंभः महेर्दीवि
भश्च नभः इण आगापराधे च आगः पापापराधयोः अमेर्हुक् च अंहः रमेश्च रंहः देशो ह च, रमंते अस्मिन्निति र
हः अंच्यजियुजिभ्यः कुश्च एभ्यो ऽसुन् कवर्णो ऽतादेशश्च अंकश्चिन्ह शरीरयोः अंगः पक्षी योगः समाधिः भर्गः
वेजः भूरंजिभ्यां कित् भुवः रजः वसेर्णित् वासो वस्त्रं चंदेरादेश्च स्थः छंदः पचिवचिभ्यां सुट् च पक्षसी तुस्मृतो
पक्षो वक्षो हृदयं वहिहाधाञ्भ्यश्छंदसि वक्षाः अनड्‌वान् हासाश्चंद्रः धासाः पर्वत इति भाञ्चः वक्तनस्कणि
दित्यनुवर्त्तते न तुसुट् तेन वहेरुपधा वृद्धिः इतरयोरातो युगिति युक् शोणा धृष्णू नृवाहसा श्रोतावहं गृणान-
स्तोमवाहाः विश्वो विहायाः वाजंभरो विहायाः देवो नयः पृथिवी विश्वधायाः आधारयत्पृथिवीं विश्वधायसं
धर्णसिं भूरिधायसमित्यादि इणश्चासिः अयावन्हिः स्वरादिपाठादव्ययत्वं मिथुने ऽसिः पूर्ववच्च सर्वं उपसर्ग वि
शिष्टो धातुर्मिथुनं तत्रसुनो ऽपवादो ऽसिः स्वरार्थः उपधायाः सुस्त्रोता इत्याद्युदाहरणं नञिहन एह च अनेहा
अनेहसो विधाञो बेध च विदधातीति वेधाः नुवो धुट् च नोधाः गतिकारकयोः पूर्वपद प्रकृतिस्वरत्वं च असिः

स्यात् सुतपाः जातवेदाः गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तन्
दपवादार्थमिदं चंद्रेमोडित् चंद्रोपपदान्माङोसिः स्यात्स च डित् चंद्रमाः वयसि धाञः वयोधास्तरुणः
पयसि च पयोधाः समुद्रो मेघश्च पुरसि च पुरोधाः पुरूरवाः पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते चक्षेर्बहु
लं शिच्च नृचक्षाः उषः दमेरुनसिः सप्तार्चिर्दमुनाः अंगिराः अंगतेरसिः इरुडागमश्च अप्सराः सर्तेरप्पूर्वादसिः
प्रायेणायं भूम्नि अप्सरसः विदिभुजिभ्यां विश्वे विश्ववेदाः विश्वभोजाः वशेः कनशिः संप्रसारणं उशनाः इत्युणादिषु चतु
र्थः पादः अदिभुवोडुतच् अद्भुतं गुधेरूमः गोधूमः मसेरूरन् मसूरः प्रथमे पादे सेरूरन् मसेश्चेत्यत्र व्याख्यातः
स्थः किच्च स्थूरः मनुष्यः पातेरतिः पातिः स्वामी संपातिः पक्षिराजः वातेर्नित् वातिरादित्यसोमयोः अर्तेश्च अ
रतिः रुङ्गेगः तृहेः क्नो हलोपश्च तृणं रज्जुः दितनिताडिभ्यउलच् तुंडश्च त्रियं तंडुलः व्यंते तन्यंते ताड्यंते इति तंडु
लाः दंसेष्टटनौ न आच्च दासः सेवकशूद्रयोः दंसेश्च दाशो धीवरः उदिचेर्डैसिः उच्चैः स्वरादिपाठादव्ययत्वं नौ
दीर्घश्च नीचैः सौरमेः क्तो दमे पूर्वपदस्य च दीर्घः रमेः सुपूर्वात् दमेवाच्ये क्तः स्यात् कित्वादनुनासिकलो
पः सूरतः उपशांतः कृपालुश्च पूञो यण्णुक्न्हस्वश्च यत्प्रत्ययः पुण्यं स्रंसेः शिः कुट् किच्च स्रंसेः शिरादेशः य
त्प्रत्ययः कित्तस्य कुडागमश्च शिक्यं अर्तेः क्युरुच्च उरणो मेषः हिंसेरीरन्नीरचौ हिंसीरो व्याघ्रदुष्टयोः उदि
दृणातेरजलोपः पूर्वपदांत्यलोपश्च उदरं डित् खनेर्मुट्चोदात्तः अच् अलच् डित् स्यात् धातोर्मुट् स चोदात्तः
मुखं असेः सन् अंसः मुहेः खो मूर्च मूर्खः नहेर्हलोपश्च नखः शीङो न्हस्वश्च शिखा माङ ऊखो मयच्च मयू
खः कलिगलिभ्यां फगस्योच्च गुल्फः शरीरावयवो रोगश्च गुल्फः पादग्रंथिः स्पृशेः श्वण् शुनौ पृच्च श्वण् श्व

नौप्रत्ययोपृइत्यादेशः पार्श्वौऽस्त्री कक्षयोरधः पर्शुरायुधं श्मनिश्रयतेर्डुन् श्मन्शब्दोमुखवाची मुखमश्रु
यतइतिश्मश्रु अश्र्वादयश्च अश्रुनयनजलं जनेष्टन्लोपश्च जराअचूतस्यजंघच तस्यजनेजंघादेशःस्या
दत्र जंघा हंतेःशरीरावयवेद्वेच जघनं पश्चान्नितंबः स्त्रीकट्याः क्लीबेतुजघनंपुरः क्लिशेरन्नरन्लोपश्च
लकारस्यलोपः केशः फलेरितजादेशश्चपः पलितं कृञादिभ्यःसंज्ञायांवुन् करकः करका कटकः नरकः
नरकोनारकोःपिचेतिद्विरूपकोशः सरकंगगनं कोरकः कोरकंच चीकयतेराद्यंतविपर्ययश्च कीचकोवंश
भेदः पचिमच्योरित्वोपधायाः पेचकः मेचकः जनेररष्ठच जठरं वचिमनिभ्यांचिच्च वठरोमूर्खः मठरोमु-
निशौंडयोः बिदादित्वान्माठरः गर्गादित्वान्माठर्यः ऊर्जिहृणातेरलचौ पूर्वपदांत्यलोपश्च ऊर्दरः शूरः क्ष
सोः कृदरादयश्च कृदरः कुसूलः सूदरः सर्पः हंतेर्युन्नाद्यंतयोःघत्वतत्वे घतनोमारकः क्रमिगमिक्षमिभ्यः
स्तुन्वृद्धिश्च क्रांतुःपक्षी गांतुःपथिकः क्षांतुर्मशकः हर्यतेःकन्यन्हिरच कन्यन्प्रत्ययःहिरण्यं कृञःपा
सः कार्पासः बिल्वादित्वात्कार्पासं वस्त्रंजनेस्तुरच जतुर्हस्तीयोनिच ऊर्णोतेर्डः ऊर्णा दधातेर्यन्नुट्च
धान्यंजीर्यतेः क्रिन्रश्चवः जिव्रिःस्यात्काकपक्षिणोः बाहुलकान्दूलिंचेतिदीर्घोन मव्यतेर्यलोपोमश्चापू
तुट्चालः मव्यतेरालप्रत्ययःस्यात्तस्यापतुडागमश्च धातोर्यलोपः मकारश्चांत्यस्य ममापतालोविषये
ऋजेःकीकन् ऋजीकइंद्रोधूमश्च तनोतेर्डउःसन्वच्च तितउःपुंसिक्लीबेच अर्भकपृथुकपाकावयसि ऋ
धुवृद्धौ अतोवुन्भकारश्चांतादेशः मथेःकुकन्संप्रसारणंच पिबतेःकन् अवद्यावमाधमार्वरेफाःकु
त्सिते वदेर्नञ्जियत् अवद्यं अवतेरमः वस्यपक्षेधः अवमः अधमः अर्तेर्वन् अर्वः फिरतेस्तौदादिकादः

रेफः लीङ्‌रीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः तरएतौ प्रत्ययौ क्रमात्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् लि
तं श्लिष्टं रिष्टं कुत्सितं क्लिशेरीच्चोपधायाः कन्‌लोपश्च लोनाम् श्च क्लिशेः कन् स्यात् उपधाया ई त्वं लस्य लोपो ना
मागमश्च कीनाशः यमः कितव फलं चिंत्यं अश्नोते राशुकर्मणि वरट् च चकारात् उपधाया ईत्वं ईश्वरः चतेरु
रन् चत्वारः प्रातेररन् प्रातः अमेस्तुट् च अंतर्मध्यं दहेर्गोलोपोदश्च नः गप्रत्ययः धातोरंत्यस्य लोपः दकार
स्य नकारः नगः सिचेः संज्ञायां हनुमौकश्च सिंचतेः कप्रत्ययः हकारादेशः नुम् च स्यात् सिंहः व्याङि घ्रातेश्च
जातौ कप्रत्ययः स्यात् व्याघ्रः हंतेरच् घुरच् घोरं क्षमेरुपधालोपश्च चादत् क्ष्मा तरतेर्डिः त्रयः त्रीन् ग्रहेर
निः ग्रहणिः ङीष् ग्रहणी व्याधिभेदः प्रथेरमच् प्रथमः चरेश्च चरमः मंगेरलच् मंगलं इत्युणादौ पंचमः पादः

इति उणादयः उणादयो बहुलं एते वर्तमाने संज्ञायां च बहुलं स्युः केचिदविहिता अप्यूह्याः संज्ञासु धातु
रूपाणि प्रत्ययाश्च ततः परे कार्याद्विद्यादनुबंधमेतच्छास्त्रमुणादिषु भूतेऽपि दृश्यंते भविष्यति गम्या
दयः दाशगोघ्नौ संप्रदाने एतौ संप्रदाने कारके निपात्येते दशंति तस्मै दाशः गां हंति तस्मै गोघ्नो अतिथिः
भीमादयोऽपादाने भीमः भीष्मः प्रस्कंदनः प्रपक्षः भूरवः स्खलितिः ताभ्यामन्यत्रोणादयः संप्रदानपरा
मर्शार्थं ताभ्यामिति ततोऽसौ भवति तंतुः वृत्तं तदिति वर्त्म चरितं तदिति चर्म तुमुन्ण्वुलौ क्रियायां क्रिया
र्थायां क्रियार्थायां क्रियायामुपपदे भविष्यदर्थे धातोरेतौ स्तः मां तत्वाङ्व्ययत्वं कृष्णं द्रष्टुं याति कृष्णं दर्शको
याति अत्र वासरूपेण तृजादयो न पुनर्ण्वुल्‌तुक्तेः समानकर्तृकेषु तुमुन् अक्रियार्थोपपदार्थमेतत् इच्छा
र्थेष्वेककर्तृकेषु उपपदेषु धातोस्तुमुन् इच्छति भोक्तुं वष्टि वांछति वा शकधृषज्ञाग्लाघटरभलभक्र

म सहार्हास्त्यर्थेषुतुमुन् एषूपपदेषुधातोस्तुमुन्स्यात् शक्नोतिभोक्तुं एवंधृष्णोतीत्यादि अर्थग्रहणमस्ति
नैवसंबध्यतेऽनंतरत्वात् अस्तिभवतिविद्यतेवाभोक्तुं पर्याप्तिवचनेष्वलमर्थेषु पर्याप्तिःपूर्णता तद्वाचिषु
सामर्थ्यावचनेषुतुमुन्स्यात् पर्याप्तोभोक्तुं प्रवीणः कुशलःपटुरित्यादि पर्याप्तिवचनेषुकिं अलंभुक्त्वा अल
मर्थेषुकिं पर्याप्तंभुंक्ते प्रभूततेहगम्यतेनतुभोक्तुःसामर्थ्यं कालसमयवेलासुतुमुन् पर्यायोपादानमर्थो
पलक्षणार्थं कालार्थेषुउपपदेषुतुमुन्स्यात् कालःसमयोवेलावाभोक्तुं प्रैषादिग्रहणंइह अनुवर्ततेतेनेहन
भूतानिकालः पचतीतिवार्ता भाववचनाश्च भावइत्यधिकृत्यवक्ष्यमाणाघञादयः क्रियार्थायांक्रियायां
भविष्यतिस्युःयागाययाति अण्कर्मणिच कर्मण्युपपदेक्रियार्थायांक्रियायांचाण्स्यात् ण्वुलोऽपवादः कां
डलावोव्रजति परत्वादयंकादीन्बाधते कंबलदायोव्रजति पदरुजविशस्पृशोघञ् भविष्यतीतिनिवृ
त्तं पद्यतेऽसौपादः रुजतीतिरोगः विशतीतिवेशः स्पृशतीतिस्पर्शः सृस्थिरे सृइतिलुप्तविभक्तिकं सर्त्तेःस्थि
रेकर्त्तरिघञ्स्यात् सरतिकालांतरमितिसारः व्याधिमत्स्यबलेषुचेतिवाच्यं अतिसारोव्याधिः अंतर्भावित
ण्यर्थोऽत्रसरतिः रुधिरादिकमतिशयेनसारयतीत्यर्थः विसारोमत्स्यःसारोबलं भावे सिद्धावस्थापन्ने
धात्वर्थेवाच्येधातोर्घञ्स्यात् पाकःपाकौ स्फुरतिस्फुलत्योर्घञि एचआत्स्यात् स्फारःस्फालःउपसर्ग
स्यघञीतिदीर्घः परीहारः इकःकाशे काशेउत्तरपदेइगंतस्यप्रादेर्दीर्घः नीकाशःअनूकाशः इकःकिं प्रका
शः नोदात्तोपदेशोतिनवृद्धिः शमःआचमादेस्तु आचामः कामः वामः विश्रामइतितुअपाणिनीयं स्यदो
जवे स्यंदेर्घञिनलोपोवृद्ध्यभावश्चनिपात्यते स्यदोवेगः अन्यत्रस्यंदः अवोदैधौद्मप्रश्रथहिमश्रथाः अ

वोदः अवक्लेदनं एधः इंधनं ओद्मः उंदनं श्रंथेर्नलोपोवृद्ध्यभावश्च अकर्तरिचकारकेसंज्ञायां कर्तृभि
न्नेकारकेघञ्स्यात् घञिचभावकरणयोः रंजेर्नलोपःस्यात् रागः अनयोःकिं रंगः भास्यतेइतिभासः संज्ञा
यामितिप्रायिकं कोभवतालाभोलब्धः इतउत्तरंभावेअकर्त्तरिकारकइतिद्वयमप्यनुवर्त्तते कृत्यल्युटो
बहुलमितियावत् परिमाणाख्यायांसर्वेभ्यः घञ् अजपोर्बाधनार्थमिदं एकस्तंडुलनिचायः द्वौशूर्प
निष्पावौ द्वौकारौ दारजारौकर्त्तरिणिलुक्च दारयंतीतिदाराः जारयंतीतिजाराः इङश्च घञ्चोरप
वादः उपेत्यास्माद्धीयतेउपाध्यायः अपादानेस्त्रियामुपसंख्यानं तदंताच्च वाङीषू उपाध्याया उपा
ध्यायी शॄवायुवर्णनिवृत्तेषु शॄइत्यविभक्तिकोनिर्देशः शारोवायुः करणेघञ् शारोवर्णः चित्रीकरणमि-
हधात्वर्थः निव्रियतेआव्रियतेऽनेनेतिनिवृत्तमावरणं बाहुलकात्करणेक्तः गौरिवाकृतनीशारःप्राये
णशिशिरेकृशः अकृतप्रावरणइत्यर्थः उपसर्गेरुवः घञ् संरावः उपसर्गेकिं रवः अभिनिसस्तनः
शब्दसंज्ञायां अस्मात्स्तनेःसस्यमूर्द्धन्यः अभिनिष्टानोवर्णः शब्दसंज्ञायांकिं अभिनिस्तनतिमृदंगः
समियुद्रुदुवः संयूयतेमिश्रीक्रियतेगुडादिभिरितिसंयावः पिष्टविकारोऽपूपविशेषः संद्रावः संदावः
श्रिणीभुवोऽनुपसर्गे श्रायः नायः भावः अनुपसर्गेकिं प्रश्रयः प्रणयः प्रभवः कथंप्रभावोराज्ञइति
प्रकृष्टोभावइतिप्रादिसमासः कथंराज्ञोनयइति बाहुलकात् वौक्षुश्रुवः विक्षावः विश्रावः वौकिं
क्षवःश्रवः अवोदोर्नियः अवनायः अधोनयनं उन्नायः ऊर्ध्वनयनं कथमुन्नयउत्प्रेक्षेतिबाहुलकात्
प्रेद्रुस्तुस्रुवः प्रद्रावः प्रस्तावः प्रस्रावः प्रेकिं द्रवः स्तवः स्रवः निरभ्योःपूल्वोः निष्पूयतेशूर्पादिभिरि-

त्तिनिष्पावो धान्यविशेषः अभिलावः निरभ्योः किं पवः लवः उन्योर्ग्रः उद्गारः निगारः उन्योः किं गरः क्षुधा
न्ये कृ इत्यस्माद्धान्यविषयकादुन्योर्घञ् स्यात् उत्कारो निकारो धान्यस्य विक्षेप इत्यर्थः धान्ये किं भिक्षो
त्करः पुष्पनिकरः यज्ञे समि स्तुवः समेत्य स्तुवन्ति यस्मिन्देशे छंदोगाः स देशः संस्तवः परिचयः प्रेस्त्रो
ऽयज्ञे अयज्ञ इति निच्छेदः यज्ञे इति प्रकृतत्वात् प्रस्तारः अयज्ञे किं बर्हिषः प्रस्तरः मुष्टिविशेषः प्रथने वा
वशब्दे विपूर्वात्स्तृणातेर्घञ् अशब्दविषये प्रथने पटस्य विस्तारः प्रथने किं तृणविस्तरः अशब्दे किं ग्रंथ-
विस्तरः छंदोनाम्नि च स्त्र इत्यनुवर्तते विष्टारः पंक्तिः छंदः विस्तीर्यंते अस्मिन्नक्षराणीत्यधिकरणे घ-
ञ् ततः कर्मधारयः छंदोनाम्नि च निपूर्वात्स्तृणातेर्घञ् तस्य षत्वं स्यादिति षत्वं उदि ग्रहः उद्ग्राहः स
मि मुष्टौ मल्लस्य संग्राहः मुष्टौ किं द्रव्यस्य संग्रहः परिन्योर्नीणोर्द्यूताभ्रेषयोः परिपूर्वान्नयतेर्निपूर्वा
दिणश्च घञ् स्यात् क्रमेण द्यूते ऽभ्रेषे च विषये परिणायेन शारान् हंति समंतान्नयनेनेत्यर्थः एषोऽत्र-
न्यायः उचितमित्यर्थः द्यूताभ्रेषयोः किं परिणायो विवाहः न्ययो नाशः परावनुपात्यय इणः क्रमप्रा
प्तस्य अनतिपातो ऽनुपात्ययः तव पर्यायः अनुपात्यये किं कालस्य पर्ययः अतिपात इत्यर्थः व्युपयोः
शेतेः पर्याये तव विशायः राजोपशायः पर्याये किं विशयः संशयः उपशयः समीपशयनं हस्तादाने चे
रस्तेये हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते पुष्पप्रचायः हस्तादाने किं वृक्षाग्रस्थानां फला
नां यष्ट्या प्रचयं करोति अस्तेये इति किं पुष्पप्रचयश्चौर्येण निवासचितिशरीरोपसमाधानेष्वादेश्च कः ए
षु चिनोतेर्घञ् आदेश्च ककारः उपसमाधानं राशीकरणं तच्च धात्वर्थः अन्ये प्रत्ययार्थस्य कारकस्योपा

धिभूताःनिवासे काशीनिकायः चितौ आकायमग्निंचिन्वीत शरीरे चीयतेऽस्मिन्नस्थ्यादिकमितिकायः समू
हेगोमयनिकायः एधुकिंचयःचःकइतिवक्तव्येआदेरित्युक्तिर्यङ्लुक्यादेरेवयथास्यादिति गोमयानांनिके
चायः पुनःपुनाराशीकर णमित्यर्थः संघेचानौत्तराधर्ये चेर्घञ् आदेश्चकः भिक्षुनिकायः प्राणिनांस
मूहःसंघः अनौत्तराधर्येकिं सूकरनिचयः संघेकिं ज्ञानकर्मसमुच्चयः कर्मव्यतिहारेणचस्त्रियां स्त्रीलिं
गेभावेणच् णचःस्त्रियामञ् नकर्मव्यतिहारे अत्रोऽग्नवनस्याच् व्यावक्रोशी व्यावहासी अभिविधौभा
वइनुण् अणिनुणःआदिवृद्धिः इनण्यनपत्ये सांराविणंवर्तते आक्रोशेवन्योर्ग्रहः अवनिएतयोर्ग्र
हेर्घञ्स्याच्छापे अवग्राहस्तेभूयात् अभिभवइत्यर्थः निग्राहस्तेभूयात् बाधइत्यर्थः आक्रोशेकिं अवग्र
हः परस्य नियहश्चोरस्य प्रेलिप्सायां पात्रप्रग्राहेणचरतिभिक्षुः परौयज्ञे उत्तरः परिग्राहः स्फ्येनवेदेःस्त्री
करणं नौवृधान्ये वृइतिलुप्तपंचमीकं नीवाराः धान्येकिं निवराकन्या क्तिन्विषयेऽपिबाहुलकादप् प्रवरासे
निवत् उदिश्रयतियौतिपूद्रुवः उच्छ्रायः उद्यावःउत्पावः उद्रावः कथंपतनांताः समुच्छ्रयाइति बाहुल
कात् विभाषाडिङ्रूपुवोः आरावः आरवः आप्लावः आप्लवः अवेग्रहोवर्षप्रतिबंधे विभाषेतिवर्तते
अवग्राहः अवग्रहः व र्षप्रतिबंधेकिं अवग्रहः पदस्य प्रेवणिजां प्रेग्रहेर्घञ्वावणिजांसंबंधीचेत्प्रत्य
यार्थः तुलासूत्रमितियावत् तुलाप्रग्राहेणचरति तुलाप्रग्रहेण रश्मौच प्रग्रहः प्रग्राहः वृणो
तेराच्छादने विभाषाप्रइत्येव प्रावारः प्रवरः परौभुवोऽवज्ञाने परीभावः परिभवः अवज्ञानेकिंसर्व
तोभवनंपरिभवः एरच् जयः चयः भयादीनामुपसंख्यानं नपुंसकेक्तादिनिवृत्यर्थं भयं वर्षं ऋदोरप्

करः गरः शरः यवः लवः स्तवः पवः वृक्षासनयोर्विष्टरः विपूर्वस्यस्तृः षत्वंनिपात्यते विष्टरोवृक्षआसनंच वृ
क्षेतिकिं वाक्यस्यविस्तरः ग्रहवृदृनिश्चिगमश्च अप्स्यात् घञचोरपवादः ग्रहः वरः दरः निश्चयः गमः
वशिरण्योरुपसंख्यानं वशः रणः घञर्थेकविधानं प्रस्थः विघ्नः ह्वित्प्रकरणेके कृञादीनामितिवक्तव्यं
चक्रं चिक्लिदं चक्नसः उपसर्गेदः अप्स्यात् घञपोश्च अदेर्घस्लृस्यात् घञिअपिच प्रघसः विघसः उपस
र्गेकिं घासः नौणच नोउपपदे ऽदेर्णःस्यादप्च न्यादःनिघसः व्यधजपोरनुपसर्गे अप्स्यात् व्यधः जपः उ
पसर्गेतु आव्याधः उपजापः स्वनहसोर्वा अप् पक्षेघञ् स्वनः स्वानः हसः हासः अनुपसर्गइत्येव प्रस्वानः प्र
हासः यमःसमुपनिविषुच एष्वनुपसर्गेचयमेरप्वा संयमः संयामः उपयमः उपयामः नियमः नियामः विय
मः वियामः यमः यामः नौगदनदपठस्वनः अप्वास्यात् निगदः निगादः निनदः निनादः निपठः निपाठः निस्व
नः निस्वानः क्वणोवीणायांच नावनुपसर्गेचवीणाविषयाच्चक्वणतेरप्वास्यात् वीणाग्रहणंप्राद्यर्थं निक्व
णः निक्वाणः क्वणः क्वाणः वीणायांतु प्रक्वणः प्रक्वाणः नित्यंपणःपरिमाणे अप्स्यात् मूलकपणः शाकप
णः व्यवहारार्थंमूलकादीनांपरिमितोमुष्टिर्बध्यते सोऽस्यविषयः परिमाणेकिंपाणः मदोऽनुपसर्गे धनमदः
उपसर्गेतुउन्मादः प्रमदसंमदौहर्षे हर्षेकिं प्रमादः समुदोरजःपशुषु संपूर्वोऽजिः समुदायेउत्पूर्वश्चप्रेरणे
तस्मात्पशुविषयकादप्स्यात् अघञपोरित्युक्तेर्वीभावोन समजः पशूनांसंघः उदजः पशूनांप्रेरणं पशु
षुकिं समाजोब्राह्मणानां उदाजः क्षत्रियाणां अक्षेषुग्लहः अक्षशब्देनदेवनंलक्ष्यते तत्रयत्पणरूपे
णग्राह्यंतत्रग्लहइतिनिपात्यते अक्षस्यग्लहः व्यात्युक्षीमभिसरणग्लहामदीव्यन् अक्षेषुकिं पादस्य

ग्रहः प्रजनेसर्तेः प्रजनः प्रथमगर्भग्रहणं गवामुपसरः कथमवसरः प्रसरइतिअधिकरणेपुंसिसंज्ञाया
मितिघः ह्वः संप्रसारणंच न्यभ्युपविषु निहवः अभिहवः उपहवः विहवः एष्विति किं प्रह्वायः आङियुद्धे
आहूयंतेऽस्मिन्नित्याहवः युद्धेकिं आह्वायः निपानमाहावः आङ्पूर्वस्यह्वयतेःसंप्रसारणमप्वृद्धिश्च
उदकाधारश्चेद्वृह्यः आहावस्तुनिपानंस्यादुपकूपजलाशये भावेऽनुपसर्गस्य अनुपसर्गस्यह्वयतेः संप्र
सारणमप्चस्याद्भावे हवः हनश्च वधः अनुपसर्गाद्धंतेर्भावेऽप्स्याद्वधादेशश्चांतोदात्तः वधेनदस्युं चात्
घातः मूर्तौघनः मूर्तिःकाठिन्यंतस्मिन्नभिधेयेहंतेरप्स्याद्घनादेशश्च अभ्रघनः कथंसैंधवंघनमानयेति
धर्मशब्देनधर्मीलक्ष्यते अंतर्घनोदेशे वाहीकग्रामविशेषस्येयंसंज्ञा अंतर्घनइतिपाठांतरं अगारैकदे
शेप्रघणः प्रघाणश्च द्वारदेशेद्वौप्रकोष्ठावलिंदौ आभ्यंतरोबाह्यश्चतत्रबाह्यप्रकोष्ठेनिपातनमिदं प्र
विशद्भिर्जनैः पादैःप्रकर्षेणहन्यतइतिप्रघाणः कर्मण्यप् पक्षेवृद्धिः उद्घनोत्याधानं अध्याधानमुपरि
स्थापनं यस्मिन्काष्ठेअन्यानिकाष्ठानिस्थापयित्वातक्ष्यतेसउद्घनः अधिकरणेऽप् अपघनोऽगं अंगंश
रीरावयवः सचेहनसर्वः किंतुपाणिःपादश्चेत्याहुः करणेअप् अपघातोऽन्यः करणेऽयोविद्रुषु अप्स्यात्घ
नादेशश्च अयोहन्यतेऽनेनेत्ययोघनः विघनः द्रुघनः द्रुघणइत्येके पूर्वपदात्संज्ञायामितिणत्वं संज्ञेषाकुठा
रस्य द्रुर्वृक्षः स्तंबेकश्च स्तंबेउपपदे हंतेःकरणेकः स्यादप्च अप्पक्षेघनादेशश्च स्तंबघ्नः स्तंबघनः करणइ
त्येव स्तंबघातः परौघः परौहंतेःकरणेअप्स्यात् घशब्दश्चादेशः परिहन्यतेऽनेनेतिपरिघः परेश्चघांक
योः परेरेफस्यलोवास्यात् घशब्देअंकशब्देच परिघः पलिघः पर्यंकः पल्यंकः नरप्लुतमपोघइति कृत्रिमस्य

नग्रहणं व्याख्यानात् उपघ्न आश्रये उपपूर्वाद्धन्तेरबुपधालोपश्च आश्रयशब्देनसामीप्यंलक्ष्यते पर्वतेनो
पहन्यतेसामीप्येनगम्यतेइतिपर्वतोपघ्नः संघोद्घौगणप्रशंसयोः संहननंसंघः भावेतु उद्घन्यतेउन्
न्नतोज्ञायतेइत्युद्घः कर्मण्यप् गत्यर्थानांबुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने निघोनिमितं समंतान्मितंनिमितं निर्वि
शेषंहन्यंतेज्ञायंतेइतिघनाःवृक्षाः समारोहपरिणाहाइत्यर्थः ड्वितःक्त्रिः अयंभावएवस्वभावात् क्त्रेर्म
म्नित्यं क्त्रिप्रत्ययांतान्मप्स्यान्निर्वृत्तेऽर्थे नित्यग्रहणात्क्त्रिर्मबविषयः अतएवलक्ष्यंतेननविग्रहः डुप
चष् पाकेनिर्वृत्तंपक्त्रिमं डुवप् उप्त्रिमं ट्वितोऽथुच् अयमपिस्वभावाद्भावएव टुवेपृ वेपथुः श्वयथुः यज
याचयतविच्छप्रच्छरक्षोनङ् यज्ञः याच्ञा यत्नः विश्नः प्रश्नः प्रश्नेचासन्नेतिज्ञापकान्नसंप्रसारणंङि
त्वंतुविश्नइत्यादौगुणनिषेधाय रक्ष्णः स्वपोनन् स्वप्नः उपसर्गेघोःकिः प्रधिः अंतर्द्धिः उपाधीयतेनेनेत्यु
पाधिः कर्मण्यधिकरणेच कर्मण्युपपदेघोःकिःस्यादधिकरणेऽर्थे जलानिधीयंतेऽस्मिन्नितिजलधिः
स्त्रियांक्तिन् स्त्रीलिंगेभावादौक्तिन्स्यात् घञोऽपवादः अजपोतुपरत्वाद्बाधते कृतिः पक्तिः चितिः स्तुतिः
स्फायीस्फातिः स्फीतिकामइतितुप्रामादिकं ऋतोऽताद्भूत्वर्थे णिचि अचइरितिवासमाधेयं श्रुयजि
षिस्तुभ्यः करणे श्रूयतेऽनयाश्रुतिः यजेरिष्टेश्चेष्टिः स्तुतिः ऋल्वादिभ्यःक्तिन्निष्ठावद्वाच्यः तेननत्वं की
र्णिः गीर्णिः लूनिः धूनिः पूनिः ल्हादइतियोगविभागात्क्तिनिन्हस्वः प्रल्हत्तिः तिच चूर्तिः फुल्तिः चा
यतेःक्तिनिचिभावोवाच्यः अपचितिः संपदादिभ्यःक्विप् संपत् विपत् क्तिन्नपीष्यते संपत्तिः स्थागापा
पचोभावे क्तिन्स्याद्डोपवादः प्रस्थितिः संगीतिः संपीतिः पक्तिः कथमवस्थासंस्थेति व्यवस्थाया

मितिज्ञापकात् ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च अवतेर्ज्वरज्वरेत्यूठ् ऊतिः स्वरार्थंवचनं उदात्तइतिहिवर्त्तते यूतिः जूतिः अनयोर्दीर्घत्वंचनिपात्यते स्यतेः सातिः इत्वाभावोनिपात्यते सनोतेर्वाजनसनेत्यात्वे हन्तेस्स्वरार्थंनिपातनं हंतेर्हिनोतेर्वाहेतिः कीर्तिः व्रजयजोर्भावेक्यप् व्रज्या इज्या संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणः समजादिभ्यः स्त्रियांभावादौक्यप्स्यात्सचोदात्तः संज्ञायां अजेः क्यपिवीभावोनेतिवाच्यं समजंति यस्यामितिसमज्यासभा निषीदंत्यस्यांनिषद्याआपणः निपतंत्यस्यामितिनिपत्यापिच्छिलाभूमिः मन्यतेऽनयेतिमन्या गलपार्श्वशिरा वदंतितयाविद्या सुत्या अभिषवः शय्या भृत्या ईयतेऽनयाइत्या शिबिका कृञः शच कृञइतियोगविभागः कृञः क्यप्स्यात् कृत्या शच चात्क्रिया कृतिः इच्छा इषेर्भावेषोयगभावश्चनिपात्यते इच्छा परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानं शोयक्चनिपात्यते परिचर्यापूजा परिसर्यापरिसरणम् अत्रगुणोऽपि मृगअन्वेषणेचुरादावदंतः अत्रातोलोपाभावेऽपि शेयक्णिलोपः मृगया अटतेः शेयक्टव्यशब्दस्यद्वित्वंपूर्वभागेयकारनिवृत्तिर्दीर्घश्च अटाट्या जागर्तेरकारोवा पक्षेशः जागरा जागर्या अः प्रत्ययात् प्रत्ययांतेभ्योधातुभ्यः स्त्रियामकारप्रत्ययःस्यात् चिकीर्षा पुत्रकाम्या गुरोश्चहलः गुरुमतोहलंतात्स्त्रियामकारः स्यात् ईहा ऊहा गुरोः किं भक्तिः हलः किं नीतिः निष्ठायांसेटइतिवक्तव्यं नेह आप्तिः तितुत्रेति नेट् दीप्तिः तितुत्रेषग्रहादीनामितिवाच्यं निगृहीतिः निपठितिः षिद्भिदादिभ्योऽङ् षिद्भ्योभिदादिभ्यश्चस्त्रियामङ् जॄष् जरा त्रपूष् त्रपा भिदा विदारणएवायं भित्तिरन्या छिदा मृजा कृपेः संप्रसारणंचकृपा चिंतिपूजिकथिकुंबिचर्चश्च अङ् स्याद्युचोऽपवादः चिंता पूजा कथा कुंबा चर्चा आतश्चोपसर्गे अङ् स्यात्क्तिनोऽपवादः प्रदा उपदा श्रदंतेरो

रुपसर्गवृद्धिः श्रद्धा अंतर्द्धा ण्यासश्रंथोयुच् अकारस्यापवादः कारणा हारणा आसना श्रंथना घट्टिवंदिविदिभ्य
श्चेतिवाच्यं घटना वंदना वेदना इषेरनिच्छार्थकस्य अन्वेषणा परेर्वा पर्येषणा परीष्टिः रोगाख्यायांण्वुल्बहुलं
प्रच्छर्दिका प्रवाहिका विचर्चिका क्वचिन्न शिरोर्तिः धात्वर्थनिर्देशेण्वुल्वक्तव्यः आसिका शायिका इक्श्तिपौधातु
निर्देशे पचिः पचतिः वर्णात्कारः निर्देशइत्येव अकारः ककारः रादिफः रेफः मत्वर्थाच्छः बहुलवचनादकार
लोपः मत्वर्थीयः इणजादिभ्यः आजिः आतिः इञ्वपादिभ्यः वापिः वासिः स्वरेभेदः इक्कृष्यादिभ्यः कृषिः गि
रिः संज्ञायां अत्रधातोर्ण्वुल् उद्दालकपुष्पभंजिका विभाषाख्यानपरिप्रश्नयोरिञ्च परिप्रश्ने आख्यानेच
गम्येइञ्स्याच्चाण्वुल् विभाषोक्तेर्यथाप्राप्तमन्येऽपि कांत्वंकारिंकारिकांक्रियांकृत्यांकृतिंवाकार्षीः सर्वांकारिं
कारिकांक्रियांकृत्यांकृतिंवाऽकार्षं एवंगणिंगणिकांगणनांपाचिंपाचिकांपचांपक्तिं पर्यायार्हर्णोत्पत्तिषुण्वुच्
पर्यायः परीपाठीक्रमः अर्हणमर्हः योग्यता पर्यायादिषुद्योत्येषुण्वुच्वास्यात् भवतआसिका शायिका अग्रगा
मिका भवानिक्षुभक्षिकामर्हसि ऋणे इक्षुभक्षिकांमेधारयसि उत्पत्तौ इक्षुभक्षिकांउदपादि आक्रोशेनञ्
यनिः विभाषेतिनिवृत्तं नञिउपपदेअनिः स्यादाक्रोशे अजीवनिस्तेशठभूयात् अप्रयाणिः कृत्यल्युटोबहुलं
भावेअकर्तरिकारकेतिचनिवृत्तं राज्ञाभुज्यंतेराजभोजनाः शालयः नपुंसकेभावेक्तः ल्युट्च हसितं योगवि
भागउत्तरार्थः कर्मणिचयेनसंस्पर्शात्कर्तुःशरीरसुखं येनस्पृश्यमानस्य कर्तुःशरीरसुखमुत्पद्यते तस्मिन्क
र्मण्युपपदेल्युट्स्यात् पूर्वेणसिद्धेनित्यसमासार्थंवचनं पयःपानंसुखं कर्तुरितिकिं गुरोःस्नापनंसुखं नेहगुरुः
कर्ता किंतु कर्म वायो अजेर्वीवास्याद्यो प्रवयणं प्राजनं करणाधिकरणयोश्च ल्युट्स्यात् इध्मप्रव्रश्चनः

कुठारः गोदोहनीस्थाली खलः प्राक्करणाधिकरणयोरित्यधिकारः अंतरदेशे अंतःशब्दाद्धंतेर्नस्यणः स्यात् अं
तर्हणनं देशोतुअंतर्हननोदेशः अत्पूर्वस्येत्येव अंतर्घ्नेति तपरः किं अंतरघानि अयनंच अयनस्यणोंऽतःशब्दा
त्परस्य अंतरयणं अदेशइत्येव अंतरयनोदेशः पुंसिसंज्ञायांघः प्रायेण छादेर्घेद्व्युपसर्गस्य द्विप्रभृत्युपस
र्गहीनस्यछादेर्ह्रस्वः स्यात् घेपरे दंताः छाद्यंतेऽनेनेतिदंतच्छदः आकुर्वंत्यस्मिन्नित्याकरः गोचरसंचरवहव्र
जव्यजापणनिगमाश्च घांतानिपात्यंते हलश्चेतिवक्ष्यमाणस्यघञोऽपवादः गावश्चरंत्यस्मिन्नितिगोचरोदे
शः संचरंत्यनेनेतिसंचरोमार्गः वहंत्यनेनेतिवहस्कंधः व्रजः व्यजः तालवृंतं निपातनाद्वीभावोन आपणःप
ण्यस्थानं निगच्छंत्यनेननिगमश्छंदः चात्कषः निकषः अवेतॄस्त्रोर्घञ् अवतारः कूपादेः अवस्तारोजवनि
का हलश्च हलंतात्घञ्स्यात् घापवादः अपमृज्यतेऽनेनव्याध्यादिरित्यपामार्गः विमार्गः समूहनी अध्याय
न्यायोद्यावसंहाराधारावायाश्च अधीयंतेऽस्मिन्नध्यायः नियंतिउद्युवंतिसंहरंत्यनेनेतिविग्रहः अवहाराधा
रावायानामुपसंख्यानं उदंकोऽनुदके उत्पूर्वादंचतेर्घञ्स्यान्नतूदके घृतमुदच्यतेउध्रियतेऽस्मिन्निति घृ
तोदंकः चर्ममयंभांडं अनुदकेकिं उदकोदंचनः जालमानायः आनीयंतेमत्स्यादयोअनेनेत्यानायः जालमितिकिं
आनयनः खनोघच चात्घञ् आखानः आखनः घित्क रणमन्यतोऽप्ययमितिज्ञापनार्थंतेनभगः पदमित्यादि
खनेर्डडरइकइकवकावाच्याः आखः आखरः आखनिकः आखनिकवकः एतेस्वनित्रवचनाः ईषद्दुःसुषु
कृच्छ्राकृच्छ्रार्थेषुखल् करणाधिकरणयोरितिनिवृत्तं एषुदुःखसुखार्थेषूपपदेषुखल्स्यात् तयोरेवेतिभा
वेकर्मणिच कृच्छ्रेदुष्करः करोभवता अकृच्छ्रे ईषत्करः सुकरः निमिमीलियांखल्चोरात्वंनेतिवाच्यं ईषन्नि

यमः दुःप्रभयः स्वविलयः नियमः यमः लयः उपसर्गात्खल्घञोः उपसर्गाल्लभेर्नुम् स्यात् ईषत्प्रलंभः दुष्प्रलंभः
सुप्रलंभः उपालंभः उपसर्गात्किं लाभः नसुदुर्भ्यां केवलाभ्यां उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम् न स्यात् खल्
घञोः सुलभं दुर्लभं केवलाभ्यामिति किं सुप्रलंभः अतिदुर्लभः कथं तर्हि अतिसुलभं अतिदुर्लभमिति यदा स्व
तीकर्मप्रवचनीयो तदा भविष्यति कर्तृकर्मणोश्च भूकृञोः कर्तृकर्मणोरीषदादिषूपपदेषु भूकृञोः खल् स्या
त् यथासंख्यं नेष्यते कर्तृकर्मणी च तत्तो व्यवधानेन प्रयोज्ये ईषदादयस्तु ततः प्राक् कर्तृकर्मणोश्च्व्यर्थयोरिति
वाच्यं खित्वान्मुम् अनाढ्येन आढ्येन दुःखेन भूयते दुराढ्यंभवं ईषदाढ्यंभवं स्वाढ्यंभवं दुराढ्यंभवं स्वाढ्यंकरः
च्व्यर्थयोः किं आढ्येन सुभूयते आतो युच् खलोऽपवादः ईषत्पानः सोमो भवता दुष्पानः सुपानः भाषायां शा
सियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः दुःशासनः दुर्योधन इत्यादि षात्पदांतात् नस्य णो न निष्पानं सर्पिष्पा
नं षात्किं निर्णयः पदांतात्किं पुष्णाति पदे अंतः पदांतोऽयमिति सप्तमीसमासोऽयं तेनेह न सुसर्पिष्केण आव
श्यकाधमर्ण्ययोर्णिनिः अवश्यंकारी शतं दायी कृत्याश्च आवश्यकाधमर्ण्ययोरित्येव अवश्यंहार्यः सेव्यः श
तं देयं क्तिच्क्तौ च संज्ञायां धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायां तितुत्रेति नेट् भवतात् भूतिः न क्तिचि दीर्घ
श्च अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे यंतिः रंतिः वंतिः तंतिः सनः क्तिचि लो
पश्चास्यान्यतरस्यां सनोतेः क्तिच्यात्वं वा स्यात् लोपश्च वा सनुतात् सातिः संतिः देवा एनं देयासुः देवदत्तः अलं
खल्वोः प्रतिषेधयोः प्राचां क्त्वा प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् प्राचां ग्रहणं पूजार्थं अमैवा
व्ययेनेति नियमान्नोपपदसमासः दो दद्घोः अलं दत्वा घुमास्था पीत्वा खलु अलंखल्वोः किं माकार्षीत्

प्रतिषेधयोः किं अलंकारः उदीचांमाङोव्यतीहारे व्यतीहारेऽर्थेमाङः क्त्वास्यात् अपूर्वकालार्थमिदं मयतेरिदन्-
न्यतरस्यां मेङ इकारोंऽतादेशःस्याल्ल्यपि अपमित्ययाचते अपमाय उदीचांग्रहणात्पक्षे यथाप्राप्तमपियाचित्वा
अपमयते परावरयोगेच परेण पूर्वस्यावरेणपरस्ययोगेगम्येधातोः क्त्वास्यात् अप्राप्यनदींपर्वतः परनदीयो
गोऽत्रपर्वतस्य अतिक्रम्यपर्वतंनदी अवरपर्वतयोगोऽत्रनद्याः समानकर्तृकयोःपूर्वकाले समानकर्तृकयोर्धा
त्वर्थयोःपूर्वकालेविद्यमानाद्धातोःक्त्वास्यात् क्त्वातव्ययकृतोभावइतिभावे भुक्त्वाव्रजति द्वित्वमतंत्रं स्ना
त्वाभुक्त्वापीत्वाव्रजति अनुदात्तेत्यनुनासिकलोपः विष्णुंनत्वास्तौति स्वरत्यादेः श्र्युकः कितीतिनित्यमिडभावः
पूर्वविप्रतिषेधेन स्मृत्वा धूत्वा क्त्विस्कंदिस्यंदोः एतयोर्नलोपोनस्यात्क्त्विपरे स्कंत्वा ऊदित्वादिड्वा स्यंदित्वा
स्यंत्वा नक्त्वासेट् सेट्क्त्वाकिन्नस्यात् शयित्वा सेट्किं कृत्वा मृडमृदगुधकुषक्लिशवदवसः क्त्वा एभ्यः सेट्
क्त्वाकिन्नस्यात् मृडित्वा क्लिशः क्त्वेतिवेट् क्लिशित्वा क्लिष्ट्वा उदित्वा उषित्वा रुदविदेतिकित्वं रुदित्वा विदित्वा मु
षित्वा गृहीत्वा नोपधात्थफांताद्वा सेट्क्त्वाकिद्वास्यात् श्रथित्वा श्रंथित्वा गुफित्वा गुंफित्वा नोपधात्किं कोथि
त्वा रेफित्वा वंचिलुंच्यृतश्च सेट्क्त्वाकिद्वा वचित्वा वंचित्वा लुचित्वा लुंचित्वा ऋतित्वा अर्तित्वा तृषिमृषि-
कृषेःकाश्यपस्य एभ्यः सेट्क्त्वाकिद्वा तृषित्वा तर्षित्वा मृषित्वा मर्षित्वा कृशित्वा कर्शित्वा रलोव्युपधादिति
वाकित्वं द्युतित्वा द्योतित्वा लिखित्वा लेखित्वा व्युपधात्किं वर्तित्वा कर्शित्वा रलः किं सेवित्वा हलादेः किं ए-
षित्वा सेट्किं भुक्त्वा वसतिक्षुधोरितीट् उषित्वा क्षुधित्वा क्षोधित्वा अंचेःपूजायामितिनित्यमिट् अंचित्वा ग
तौतु अंक्त्वेत्यपि लुभित्वा लोभित्वा लुभोविमोहनइतीट् विमोहनेतु लुब्ध्वा जृव्रश्च्योःक्त्वि आभ्यांपरस्य

त्क्वइट्स्यात् जरीत्वा जरित्वा व्रश्चित्वा उदितोवा उदितःपरस्यक्त्वइट् वास्यात् शमित्वा अनुनासिकस्यक्वीति
दीर्घः शांत्वा धूत्वा देवित्वा क्रमश्चक्त्वि क्रमउपधायावादीर्घःस्याज्झलादौक्त्विपरे क्रांत्वा क्रंत्वा झलिकिं क्र
मित्वा पूङश्चेतिवेट् पवित्वा पूत्वा जांतनशांविभाषा जांतनांनशेश्चनलोपोवास्यात्क्त्विपरे भुक्त्वा भुंक्त्वा
रक्त्वा रंक्त्वा मस्जिनशोरितिनुम् तस्यपक्षेलोपः नष्ट्वा नंष्ट्वा रधादिभ्यश्चेतीट्पक्षे नशित्वा झलादाविति
वाच्यं नेह अंजित्वा ऊदित्वादिट् पक्षे अक्त्वा अंक्त्वा जनसनेत्यात्वं खात्वा खनित्वा द्यतिस्यतीतीत्वं दित्वा
सित्वा मित्वा स्थित्वा दधातेर्हिः हित्वा जहातेश्चक्त्वि हित्वा हाङस्तु हात्वा अदोजग्धिः जग्ध्वा समासेऽन
ञ्पूर्वेक्त्वोल्यप् अव्ययपूर्वपदेऽनञ्समासेक्त्वोल्यबादेशःस्यात् तुक् प्रकृत्य अनञः किं अकृत्वा पर्यु
दासाश्रयणान्नेहपरमकृत्वा षत्वतुकोरसिद्धः षत्वेतुकिचकर्त्तव्ये एकादेशशास्त्रमसिद्धंस्यात् कोऽसिचत्
इहषत्वंन अधीत्य प्रेत्य ह्रस्वस्येतितुक् वाल्यपि अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपोवास्या
ल्ल्यपि व्यवस्थितविभाषेयं तेनमांतानिटांवा नांतानिटांवनतितनोत्यादीनांचनित्यं आगत्य आगम्य प्र
णत्य प्रणम्य प्रहत्य प्रमत्य प्रवत्य वितत्य अदोजग्धिः प्रजग्ध्य अंतरंगानपिविधीन्बहिरंगोल्यप्बाधते
जग्धिविधौल्यब्ग्रहणात्ज्ञापकात् तेनाहित्वदत्त्वआत्वेत्वदीर्घत्वशूठ्इटोल्यपिन विधाय प्रदाय प्रखन्य
प्रस्थाय प्रक्रम्य आपृच्छ्य प्रदीव्य प्रपठ्य नल्यपि ल्यपिपरेघुमास्थादेरीत्वंन धेट् प्रधाय प्रमाय प्रगाय
प्रमाय प्रपाय प्रहाय प्रसाय मीनातिमिनोतीत्यात्वं प्रमाय निमाय उपदाय विभाषालीयतेः विलाय वि
लीय णिलोपः उत्तार्य विचार्य ल्यपिलघुपूर्वात् लघुपूर्वात्परस्यणेरयादेशःस्याल्ल्यपि विगणय्य प्रणमय्य

प्रबेभिदय्य लघुपूर्वात्किं संप्रधार्य विभाषापः आप्नोतेर्णेरयादेशो वा स्यात् ल्यपि प्रापय्य प्राप्य क्षियः क्षियो
ल्यपि दीर्घः प्रक्षीय मयतेरिदन्यतरस्यां मेङः इकारोऽन्तादेशः स्याद्वा ल्यपि अपमित्य अपमाय ल्यपि च वेञो
ल्यपि संप्रसारणं न स्यात् प्रवाय ज्यश्च प्रज्याय व्यश्च उपव्याय विभाषा परेः परेर्व्येञो वा संप्रसारणं स्याल्ल्य-
पि तुकं बाधित्वा परत्वाद्धलइति दीर्घः परिवीय परिव्याय कथं सुखं व्यादाय स्वपिति नेत्रे निमील्य हसतीति व्या
दानसंमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तद्दशाविवक्षया भविष्यति आभीक्ष्ण्ये णमुल् च पौनः
पौन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च स्मारंस्मारं नमति शिवं स्मृत्वास्मृत्वा पायंपायं भोजंभोजं श्रावंश्रा
वं चिण्णमुलोरिति णमुल्परे णौ वा दीर्घः गामंगामं गमंगमं विभाषा चिण्णमुलोरिति नुम्वा लंभंलंभं ला
भंलाभं व्यवस्थितविभाषया तु उपसृष्टस्य नित्यं नुम् प्रलंभंप्रलंभं जाग्रोऽविचिण्णिति गुणः जागरंजागरम्
ण्यंतस्याप्येवं नयद्धनाकांक्षे यच्छब्दे उपपदे पूर्वकाले यत्स्मासंतन्न यत्र पूर्वोत्तरे क्रिये एतद्वाक्यमपरं नाकां
क्षते चेत् यदयं भुंक्ते ततः पठति इह क्त्वाणमुलौ न अनाकांक्षे किं यदयं भुक्त्वा व्रजति ततोऽधीते विभा
षाग्रेप्रथमपूर्वेषु आभीक्ष्ण्ये इति नानुवर्त्तते एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः अ
ग्रेभोजं व्रजति अग्रेभुक्त्वा प्रथमंभोजं प्रथमंभुक्त्वा पूर्वंभोजं पूर्वंभुक्त्वा पक्षे लडादयः अग्रेभुंक्ते ततो व्र
जति आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः अग्रेभोजं भोजं व्रजति भुक्त्वाभुक्त्वा कर्मण्याक्रो
शे कृञः खमुञ् कर्मण्युपपदे आक्रोशे गम्ये चोरंकारमाक्रोशति करोतिरुच्चारणे चोरशब्दमुच्चार्येत्य
र्थः स्वादुमि णमुल् स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले पूर्वस्य मांतत्वं निपात्यते अस्वा

द्वींस्वाद्वींकृत्वाभुंक्ते स्वादुंकारंभुंक्ते संपन्नंकारंलवणंकारं संपन्नलवणशब्दौस्वादुपर्यायौ वासरूपेणतत्कापि
स्वादुंकृत्वाभुंक्ते अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत् एषुकृञोणमुल्स्यात् सिद्धःप्रयोगोयस्यएवंभूत
श्चेत्कृञ् व्यर्थत्वात्प्रयोगानर्हइत्यर्थः अन्यथाकारंएवंकारंकथंकारं इत्थंकारं भुंक्तेइत्थंभुंक्तइत्यर्थः सिद्धेति
किं शिरोऽन्यथाकृत्वाभुंक्ते यथातथयोरसूयाप्रतिवचने कृञ् सिद्धाप्रयोगइत्येव असूययाप्रतिवचने
यथाकारमहंभोक्ष्येतथाकारंभोक्ष्येकिंतवानेन कर्मणिदृशिविदोःसाकल्ये कर्मण्युपपदेणमुल्स्यात्
कन्यादर्शंवरयति सर्वाःकन्याइत्यर्थः ब्राह्मणवेदंभोजयति यंयंब्राह्मणंजानातिलभतेविचारयतिवा तंसर्
वंभोजयतीत्यर्थः यावतिविंदजीवोः यावद्वेदंभुंक्ते यावल्लभते तावदित्यर्थः यावज्जीवमधीते चर्मोदरयोः
पूरेः कर्मणीत्येव चर्मपूरंस्तृणाति उदरपूरंभुंक्ते वर्षप्रमाणऊलोपश्चास्यान्यतरस्यां कर्मण्युपपदेपूरेर्णमु
लस्याऊलोपश्चवा समुदायेनवर्षप्रमाणेगम्ये गोष्पदंप्रवृष्टोदेवः गोष्पदपूरं अस्येतिकिं उपपदस्यमाभू
त् मूषिकाबिलप्रं चेलेक्नोपेः चेलार्थेषुकर्मसूपपदेषुक्नोपेर्णमुल्स्यात् वर्षप्रमाणे चेलक्नोपंवृष्टोदेवः वस्त्र
क्नोपं वसनक्नोपं निमूलसमूलयोःकषः कर्मणीत्येव कषादिष्वनुप्रयोगंवक्ष्यति अत्रप्रकरणेपूर्वकाल
इतिनसंबध्यते निमूलकाषंकषयति समूलकाषंकषयति निमूलंसमूलंकषतीत्यर्थः एकस्यापिधात्व
र्थस्यनिमूलादिविशेषणसंबंधाद्भेदः तेनसामान्यविशेषभावेनविशेषणविशेष्यभावः शुष्कचूर्णरूक्षेषुपि
षः एषुकर्मसुपिषेर्णमुल् शुष्कपेषंपिनष्टि शुष्कंपिनष्टीत्यर्थः चूर्णपेषं रूक्षपेषं समूलाकृतजीवेषुहन्
कृञ्ग्रहः कर्मणीत्येव समूलघातंहंति अकृतकारंकरोति जीवग्राहंगृह्णाति जीवतीतिजीवः इगुपधल

क्षणः कः जीवंतंगृण्हातीत्यर्थः करणेहनः पादघातंहंति पादेनहंतीत्यर्थः यथाविध्यनुप्रयोगार्थः सन्निल्यसमा
सार्थोऽयंयोगः भिन्नधातुसंबंधेतुहिंसार्थानांचेतिवक्ष्यते स्नेहनेपिषः स्निह्यतेयेनतस्मिन्करणेपिषेर्णमुल्
स्यात् उदपेषंपिनष्टि उदकेनपिनष्टीत्यर्थः हस्तेवर्तिग्रहोः हस्तार्थेकरणे हस्तवर्त्तंवर्त्तयति करवर्त्तंवर्त्तयति ह
स्तेनगुलिकांकरोतीत्यर्थः हस्तग्राहंगृण्हाति करग्राहं पाणिग्राहं स्वेपुषः करणइत्येव स्वइत्यर्थग्रहणं तेनस्व
रूपेपर्यायविशेषेषुचणमुल् स्वपोषंपुष्णाति धनपोषं गोपोषं अधिकरणेबंधः चक्रबंधंबध्नाति चक्रेबध्नातीत्य
र्थः संज्ञायां बध्नातेर्णमुल्स्यात्संज्ञायां क्रौंचबंधंबद्धः मयूरिकाबंधं अट्टालिकाबंधं बंधविशेषाणांसंज्ञाएताः
कर्त्रोर्जीवपुरुषयोर्नशिवहोः जीवनाशंनश्यति जीवोनश्यतीत्यर्थः पुरुषवाहंवहति पूरुषोवहतीत्यर्थः ऊ
र्ध्वेशुषिपूरोः ऊर्ध्वेकर्त्तरि ऊर्ध्वशोषंशुष्यति वृक्षादिऊर्ध्वएवतिष्ठन्शुष्यतीत्यर्थः ऊर्ध्वपूरंपूर्यते ऊर्ध्वमुखएव
घटादिर्वर्षोदकादिनापूर्णोभवतीत्यर्थः उपमानेकर्मणिच चात्कर्त्तरि घृतनिधायंनिहितंजलं घृतमिव
सुरक्षितमित्यर्थः अजकनाशंनष्टः अजकइवनष्टइत्यर्थः कषादिषुयथाविध्यनुप्रयोगः यस्माण्णमुल्कृतः
सएवानुप्रयोक्तव्यइत्यर्थः तथैवोदाहृतं उपदंशस्तृतीयायां इतःप्रभृतिपूर्वकालइतिनसंबध्यते तृतीयाप्रभृती
न्यन्यतरस्यामितिवासमासः मूलकोपदंशंभुंक्ते मूलकेनोपदंशं दश्यमानमूलकस्यभुजिंप्रतिकरणत्वात्तृतीया
यद्यपिउपदंशिनासहनशाब्दः संबंधस्तथाप्यार्थोस्त्येव कर्मत्वात् एतावतैवसामर्थ्येनप्रत्ययःसमासश्च तृती
यायामितिवचनसामर्थ्यात् हिंसार्थानांचसमानकर्मकाणां तृतीयांतेउपपदेऽनुप्रयोगधातुनासमानकर्म
कात्हिंसार्थाण्णमुल्स्यात् दंडोपघातंगाःकालयति दंडेनोपघातं दंडताडं समानकर्मकाणांकिं दंडेनचोरमाह

 

त्य गाः कालयति सप्तम्यांचोपपीडरुधकर्षः उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यंतेतृतीयांतेचोपपदेनमुल् पार्श्वोपपीडंशे
ते पार्श्वयोरुपपीडंपार्श्वाभ्यामुपपीडं व्रजोपरोधंगाःस्थापयति व्रजेउपरोधंव्रजेनवा पाण्युपकर्षंधानाःसंगृण्हाति
पाणावुपकर्षंपाणिणोपकर्षं समासत्तौ तृतीयासप्तम्योर्धातोर्णमुल्स्यात्सन्निकर्षेगम्यमाने केशग्राहंयुध्यंते
केशेषुगृहीत्वा हस्तग्राहं हस्तेनग्राहं हस्तेनगृहीत्वा प्रमाणेच तृतीयासप्तम्योरित्येव द्व्यंगुलोत्कर्षंखंडिकांछि
नत्ति द्व्यंगुलेनद्व्यंगुलेवोत्कर्षं अपादानेपरीप्सायां परीप्सात्वरा शय्योत्थायंधावति द्वितीयायांच परीप्सायां
मित्येव यष्टिग्राहंयुध्यंते लोष्टग्राहं अपगुरोणमुलि गुरीउद्यमने इत्यस्यैचोवाआत्वंस्याण्णमुलि अस्यपगो
रंयुध्यंते अस्यपगारं स्वांगेऽध्रुवे द्वितीयायामित्येव अध्रुवेस्वांगेद्वितीयांतेधातोर्णमुल् भ्रूविक्षेपंकथयति भ्रु
वंविक्षेपं अध्रुवेकिं शिरउत्क्षिप्य येनविनानजीवनंतत्ध्रुवं परिक्लिश्यमानेच सर्वतोविबाध्यमानेस्वांगेद्विती
यांतेणमुल्स्यात् उरःप्रतिपेषंयुध्यंते कृत्स्नमुरःपीडयंत इत्यर्थः उरोविदारंप्रतिचस्कुरेनखैः ध्रुवार्थमिदं विशि
पतिपदिस्कंदांव्याप्यमानासेव्यमानयोः द्वितीयायामित्येव द्वितीयांतेउपपदेविश्यादिभ्योणमुल्स्यात्व्या
प्यमानेआसेव्यमानेचार्थेगम्ये गेहादिद्रव्याणांविश्यादिक्रियाभिःसाकल्येनसंबंधोव्याप्तिः क्रियायाःपौनःपु
न्यमासेवा नित्यवीप्सयोरितिद्वित्वंतुनभवति समासेनैवस्वभावतस्तयोरुक्तत्वात् यद्यप्याभीक्ष्ण्येणमुलु
क्तएवतथाप्युपपदसंज्ञार्थमासेवायामिहपुनर्विधिः गेहानुप्रवेशमास्ते गेहंगेहमनुप्रवेशं एवंगेहानुप्रपातं
गेहानुप्रपादं गेहानुप्रस्कंदं असमासेतुगेहस्यणमुलं तस्यचपर्यायेणद्वित्वं अस्यतितृषोःक्रियांतरेकालेषु
क्रियामंतरयतिव्यवधत्तइतिक्रियांतरः तस्मिन्धात्वर्थेवर्त्तमानादस्यतेस्तृष्यतेश्चकालवाचिषुद्वितीयांतेषुउ

पपदेषुणमुल्स्यात् ब्रह्हत्यासंगाःपाययति ब्रह्मत्यासंब्रह्हतर्षं ब्रह्हंतर्षं अत्यसनेनतर्षणेनचगवांपानक्रि
याव्यवधीयते अद्यपाययित्वाब्रह्मतिक्रम्यपुनःपाययतीत्यर्थः नाम्न्यादिशिग्रहोः द्वितीयायामित्येव नामा
देशमाचष्टे नामग्राहमाव्हयति अव्ययेयथाभिप्रेतारव्यानेकृञःक्त्वाणमुलौ अयथाभिप्रेतारव्यानंनामा
प्रियस्योच्चैःप्रियस्यनीचैःकथनं उच्चैःकृत्वा उच्चैःकृत्य उच्चैःकारं अप्रियमाचष्टे नीचैःकृत्वा नीचैःकृत्य नीचैः
कारंप्रियंब्रूते तिर्यच्यपवर्गे तिर्यक्शब्देउपपदेकृञःक्त्वाणमुलौस्तः समाप्तौगम्यमानायां तिर्यक्कृत्यगतः
तिर्यक्कारंसमाप्यगतइत्यर्थः अपवर्गेकिं तिर्यक्कृत्वाकाष्ठंगतः स्वांगेतस्प्रत्ययेकृभ्वोः मुखतःकृत्यगतःमुखतः
कृत्वा मुखतःकारं मुखतोभूय मुखतोभूत्वा मुखतोभावं नाधार्थप्रत्ययेच्व्यर्थे नाधार्थप्रत्ययांतेच्व्यर्थेविष
येउपपदेकृभुवोः क्त्वाणमुलौस्तः अनानानानानाकृत्वा नानाकृत्य नानाकारंविनाकृत्य विनाकृत्वा विनाका
रं नानाभूय नानाभूत्वा नानाभावं अनेकद्रव्यमेकंभूत्वा एकधाभूय एकधाभूत्वा एकधाभावं एकधाकृत्य
एकधाकृत्वा एकधाकारं प्रत्ययग्रहणंकिं हिरुक्कृत्वा पृथक्भूत्वा तुष्णीमिभुवः तुष्णींशब्देउपपदेभुवः क्त्वा
णमुलौस्तः तूष्णींभूय तूष्णींभूत्वा तूष्णींभावं अन्वक्त्यानुलोम्ये अन्वक्शब्देउपपदेभुवःक्त्वाणमुलौस्तः
आनुकूल्येगम्यमाने अन्वग्भूयास्ते अन्वग्भूत्वा अन्वग्भावं अग्रतःपार्श्वतःपृष्ठतोवाअनुकूलोभूत्वाआ
स्तइत्यर्थः आनुलोम्येकिं अन्वग्भूत्वातिष्ठतिपृष्ठतोभूत्वेत्यर्थः इत्थंलौकिकशब्दानांदिङ्मात्रमिहदर्शित
म् विस्तरस्तुयथाशास्त्रंदर्शितःशब्दकौस्तुभे भट्टोजीदीक्षितकृतिःसेषासिद्धांतकौमुदी प्रीत्येभूयाद्भग
वतोर्भवानीविश्वनाथयोः इतिश्रीभट्टोजिदीक्षितविरचितायांसिद्धांतकौमुद्यांउत्तरार्द्धंसमाप्तम्

# अथसिद्धांतकौमुदीप्रकरणानुक्रमणिकाप्रारंभः



इतिसिद्धांतकौमुदीप्रकरणानुक्रमणिकासमाप्ता· शुभंभवतु·

शके१७९५ श्रीसुखनामसंवत्सरे ज्येष्ठमासे कृष्णपक्षे त्रयोदश्यांतिथौ रविवासरे तद्दिनेइदं पुस्तकंसमाप्तम्· यहग्रंथश्रीधरशिवलालजी गौड सलेमाबादके. आपकेप्रज्ञायुक्तज्ञानसागरछापखानामेंछापीठि॰मुकाममुंबई बाहरकोटमारकीटकेपासशा॰मुरारभाईब्रजभूषणदा॰घरमें.

